कृदेव च स्याः ॥ १३९ ॥ वरेण शर्वस्य हि रावणात्मजो य
निबध्नाति कपीन्सलक्ष्मणान् । उरङ्गपाशेन तदा त्वमेव समेत्य सर्वान
मोचयस्व ॥ १४० ॥ अहं समर्थोऽपि स लक्ष्मणश्च तथा हनूमा
विमोचयामः । तव प्रियार्थं गरुडैष एव कृतस्तवादेश इमं कुरुष्व
॥ १४१ ॥ तदेतदुक्तं हि पुरात्मना यत्ततो हि रामो न मुमो
कश्चन । स लक्ष्मणो नैव च मारुतात्मजः स एव जानाति
देवगुह्यम् ॥ १४२ ॥ अथो निबध्याशु हरीन्सलक्ष्मणाञ्जगाम रक्ष
स्वपितुः सकाशम् । ननन्द चासौ पिशिताशनेश्वरः शशंस पुत्रं
कृतात्मकार्यम् ॥ १४३ ॥ स पक्षिराजोऽथ हरेर्निदेशं स्मरंस्त्वरावानि
चाजगाम । तत्पक्षवातस्पर्शेन केवलं विनष्ट एषां स उरङ्गबन्धः
॥ १४४ ॥ स राममानम्य परात्मदैवतं ययौ सुमाल्याभरणानुलेपनः
कपिप्रवीरास्तु तरूञ्छिलाश्च प्रगृह्य नेदुर्बलिनः प्रहृष्टाः ॥ १४५
श्रुत्वा विनादं प्लवगेश्वराणां पुनः सपुत्रोऽत्रसदत्र रावणः । बन्धादमुष्मा
त्प्रविनिःसृतास्ते किमत्र कार्यं त्विति चिन्तयानः ॥ १४६ ॥ पुनश्च
हुत्वा स हुताशमेव रथं समारुह्य ययावदर्शनम् । ववर्ष चास्त्राणि
महान्त्यजस्रं वरादुमेशस्य तथाब्जजस्य ॥ १४७ ॥ पुनश्च तस्या
स्त्रनिपीडितास्ते निपेतुरुर्व्यां कपयः सलक्ष्मणाः । स्पृशन्ति
नास्त्राणि दुरन्तशक्ति तनुं समीरस्य हि कानिचित्कचित् ॥ १४८ ॥
विज्ञातुकामः पुरि सम्प्रवृत्तिं विभीषणः पूर्वगतस्तदाऽगात् । ददर्श
सर्वान्पतितान्स वानरान्मरुत्सुतं त्वेकमनाकुलं च ॥ १४९ ॥ स तं
समादाय ययौ विधातृजं विमूर्छितं चोदकसेकतस्तम् । आश्वास्य किं
जीवसि हीत्यवोचत्तथेति स प्राह च मन्दवाक्यः ॥ १५० ॥ ऊचे
पुनर्जीवति किं हनूमाञ्जीवाम सर्वेऽपि हि जीवमाने । तस्मिन्हते
निहताश्चैव सर्वे इतीरितेऽस्मीत्यवदत्स मारुतिः ॥ १५१ ॥ इत्युक्तो
जाम्बवानाह हनूमन्तमनन्तरम् । योऽसौ मेरोः समीपस्थो गन्धमादन-



कः ॥ १५२ ॥ गिरिस्तस्मात्समाहार्यं त्वयौषधिचतुष्टयम् । मृत-
सञ्जीवनी मुख्या सन्धानकरणी परा । सवर्णकरणी चैव विशल्यकरणीति
च ॥ १५३ ॥ इत्युक्तः स क्षणेनैव प्रापतद्गन्धमादनम् । अवाप
चाम्बरचरो राममुक्तः शरो यथा ॥ १५४ ॥ अन्तर्हिताश्चौषधीस्तु
तदा विज्ञाय मारुतिः । उद्बबर्ह गिरिं क्रोधाच्छतयोजनमण्डलम् ॥
॥ १५५ ॥ स तं समुत्पाट्य गिरिं करेण प्रतोलयित्वा बलदेवसूनुः ।
समुत्पपाताम्बरमुग्रवेगो यथा हरिश्चक्रधरस्त्रिविक्रमे ॥ १५६ ॥ अवाप
चाक्ष्णोः स निमेषमात्रतो निपातिता यत्र कपिप्रवीराः । तच्छैलवात-
स्पर्शात्समुत्थिताः समस्तशो वानरयूथपाः क्षणात् ॥१५७॥ अपूज-
यन्मारुतिमुग्रपौरुषं रघूत्तमस्यानुजनिस्तथाऽपरे । पपात मूर्ध्न्यस्य च
पुष्पसंततिः प्रमोदितैर्देववरैर्विसर्जिता ॥१५८॥ स देवगन्धर्वमहर्षि-
सत्तमैरभिष्टुतो रामकरोपगूहितः । पुनर्गिरिं तं शतयोजनोच्छ्रितं
न्यपातयत्संस्थित एव तत्र ॥१५९॥ स पूर्ववन्मारुतिवेगचोदितो
निरन्तरं श्लिष्टतरोऽत्र चाभवत् । पुनश्च सर्वे तरुशैलहस्ता रणाय
चोत्तस्थुरलं नदन्तः ॥१६०॥ पुनश्च तान्प्रेक्ष्य समुत्थितान्कपीन्भयं
महच्छक्रजितं विवेश । स पूर्ववद्धव्यवहे समर्च्य शिवं तथाऽदर्शनमेव
जग्मिवान् ॥१६१॥ वराश्रयेणाजगिरीशयोः पुनः संमोहनास्त्रैः स
बबन्ध तान्कपीन् । अथाह रामस्य मनोनुसारतः पुरास्त्रमेवानुसरन्स
लक्ष्मणः ॥१६२॥ पितामहास्त्रेण निहन्मि दुर्मतिं तवाज्ञया शक्रजितं
सबान्धवम् । इतीरितस्तेन स चाह राघवो भयाददृश्ये न विमोक्तु-
मर्हसि ॥१६३॥ न सोढुमीशोऽसि यदि त्वमेतदस्त्रं तदाहं शरमात्र-
केण । अदृश्यमप्याशु निहन्मि संतं रसातलेऽथापि हि सत्यलोके
॥१६४॥ इति स्म वीन्द्रस्य हनूमतश्च बलप्रकाशाय पुरा प्रभुः स्वयं ।
संमानयित्वाऽस्त्रममुष्य रामो दुरन्तशक्तिः शरमाददेऽथ ॥१६५॥
अनेन दृष्टोऽहमिति स्म दुष्टो विज्ञाय बाह्वोर्बलमस्य चोग्रम् । विनिश्चयं

देवतमस्य पश्यन्प्रदुद्रुवे प्राणपरीप्सुराशु ॥ १६६ ॥ हाहाकृते प्रद्रुत इंद्रशत्रौ रघूत्तमः शत्रुविभीषणत्वात् । बिभीषणेत्येव सुरैरभिष्टुतो विज्ञानमस्त्रं त्वमुचत्स्वसैन्ये ॥ १६७ ॥ निशाचरास्त्रं ह्यगमत्क्षणेन रामास्त्रवीर्याद्धरयो नदन्तः । उत्तस्थुरुच्चोरुगिरीन्प्रगृह्य प्रशंसमाना रघुवीरमुच्चैः ॥ १६८ ॥ सुरैश्च पुष्पं ववृषद्भिरीडितस्तस्थौ धनुष्पाणिरनंतवीर्यः । स रावणस्याथ सुतो निकुम्भिलां पुनः समासाद्य जुहाव पावकम् ॥ १६९ ॥ विभीषणोऽथाह रघूत्तमं प्रभुं नियोजयाद्यैव वधाय दुर्मतेः । कृताग्निपूजो न हि वध्य एष वरो विधातुः प्रथितोऽस्य तादृशः ॥ १७० ॥ न वै वधं राम इयेष तस्य पलायितस्यात्मसमीक्षणात्पुनः । सत्वोज्झितोऽसावतिकूटयोधी न मे वधार्होऽयमिति स्म स प्रभुः ॥ १७१ ॥ स आदिदेशावरजं जनार्दनो हनूमता चैव विभीषणेन । सहैव सर्वैरपि वानरेंद्रैर्ययौ महात्मा स च तद्वधाय ॥ १७२ ॥ स जुह्वतस्तस्य चकार विघ्नं प्लवंगमैः सोऽथ युयुत्सया रथम् । समास्थितः कार्मुकबाणपाणिः प्रत्युद्ययौ लक्ष्मणमाशु गर्जन् ॥ १७३ ॥ उभौ च तावस्त्रविदां वरिष्ठौ शरैः शरीरांतकरैस्ततक्षतुः । दिशश्च सर्वाः प्रदिशः शरोत्तमैर्विधाय शिक्षास्त्रबलैर्निरंतराः ॥ १७४ ॥ अस्त्राणि तस्यास्त्रवरैः स लक्ष्मणो निवार्य शत्रोश्चलकुंडलोज्वलम् । शिरः शरेणाशु समुन्ममाथ सुरैः प्रसूनैरथ चाभिवृष्टः ॥ १७५ ॥

निपातितेऽस्मिन्नितरां निशाचरान्प्लवंगमा जघ्नुरनेककोटिशः । हतावशिष्टास्तु दशाननाय शशंसुरत्याप्तसुतप्रणाशम् ॥ १७६ ॥ स तं निशम्याप्रियमुग्ररूपं भृशं विनिःश्वस्य विलप्य दुःखात् । संस्थापयामास मतिं पुनश्च मरिष्य इत्येव सुनिश्चितार्थः ॥ १७७ ॥ मरणाभिमुखः शीघ्रं रावणो रणकर्मणि । सञ्जीभवन्नंतरैव दिदेश बलमूर्जितम् ॥ १७८ ॥ त्रिंशत्सहस्राणि महौघकानामक्षौहिणीनां सहषट्सहस्रम् । श्रमेण संयोजयताशु रामं सञ्जीभवानीति दिदेश रावणः ॥ १७९ ॥



तदप्रधृष्यं वरतः स्वयंभुवो युगांतकालार्णवघूर्णितोपमम् । प्रगृह्य नानाविधमस्त्रशस्त्रं बलं कपीन्छीघ्रतमं जगाम ॥ १८० ॥ आगच्छमानं तदपारमेयं बलं सुघोरं प्रलयार्णवोपमम् । भयात्समुद्वीक्ष्य विषण्णचेतसः कपिप्रवीरा नितरां प्रदुद्रुवुः ॥ १८१ ॥ वरो हि दत्तोऽस्य पुरा स्वयंभुवा धरातलेऽल्पेऽपि निवासशक्तिः । अजेयता चेत्यत एव सार्कजाः प्लवंगमा द्रष्टुमपि स्म नाशकन् ॥ १८२ ॥ प्रगृह्य रामोऽपि धनुः शरांश्च समंततस्तानवधीच्छरौघैः । स एव सर्वत्र च दृश्यमानो विदिक्षु दिक्षु प्रजघान सर्वशः ॥ १८३ ॥ क्षणेन सर्वांश्च निहत्य राघवः प्लवंगमानामृषभैः सुपूजितः । अभिष्टुतः सर्वसुरोत्तमैर्मुदा भृशं प्रसूनोत्करवर्षिभिः प्रभुः ॥ १८४ ॥ अथाययौ सर्वनिशाचरेश्वरो हतावशिष्टेन बलेन संवृतः । विमानमारुह्य च पुष्पकं त्वरन्शरीरनाशाय महायुधोद्धतः ॥ १८५ ॥ विरूपनेत्रोऽथ च वृपनेत्रस्तथा महापार्श्वमहोदरौ च । ययुस्तमावृत्य सहैव मंत्रिणो मृतिं पुरोधाय रणाय यान्तम् ॥ १८६ ॥ अथास्य सैन्यानि निजघ्नुरोजसा समन्ततः शैलशिलाभिवृष्टिभिः । प्लवङ्गमास्तानभिवीक्ष्य वीर्यवान्ससार वेगेन महोदरो रुषा ॥ १८७ ॥ वीक्ष्यातिकायं तमभिद्रवंतं स कुम्भकर्णोऽयमिति ब्रुवंतः । प्रदुद्रुवुर्वानरवीरसंघास्तमाससादाशु सुतोऽथ वालिनः ॥ १८८ ॥ वदन्स तिष्ठध्वमिति स्म वीरो बिभीषिकामात्रमिदं न यात । इतीरयन्नग्रत एव पुप्लुवे महोदरस्येंद्रसुतात्मजो बली ॥ १८९ ॥ अथो शरानाशु विमुञ्चमानं शिरः परामृश्य निपात्य भूतले । ममर्द पद्भ्यामभवद्गतासुर्महोदरो वालिसुतेन चूर्णितः ॥ १९० ॥ अथो महापार्श्व उपाजगाम प्रवर्षमाणोऽस्य शरांबुधाराः । प्रसह्य चाच्छिद्य धनुः करस्थं समाददे खड्गममुष्य सोऽङ्गदः ॥ १९१ ॥ निगृह्य केशेषु निपात्य भूतले चकर्त वामांसत औदरं परम् । यथोपवीतं स तथा द्विधाकृतो ममार मंत्री रजनीचरेशितुः ॥ १९२ ॥ अथैनमा-

जग्मतुरुद्यतायुधौ विरूपनेत्रोऽप्यथ यूपनेत्रः। यथैव मेघौ दिवि तिग्मरश्मिं तथा समाच्छादयतां शरौघैः ॥ १९३ ॥ ताभ्यां स बद्धः शरपञ्जरेण विचेष्टितुं नाशकदत्र वीरः। हरीश्वरः शैलमतिप्रमाणमुत्पाट्य चिक्षेप तयोः शरीरे ॥ १९४ ॥ उभौ च तौ तेन विचूर्णितौ रणे रवेः सुतस्योरुबलेरितेन। निशाचरेशोऽथ शरेण सूर्यजं बिभेद वक्षस्यपि सोऽपतद्भुवि ॥ १९५ ॥ ततश्च सर्वांश्च कपिप्रवीरान्विधूय बाणैर्बलवान्दशाननः। जगाम रामाभिमुखस्तदैनं रुरोध रामावरजः शरौघैः ॥ १९६ ॥ तदा दशास्योऽन्तकदण्डकल्पां मयाय दत्तां कमलोद्भवेन। मयाद्गृहीतां च विवाहकाले प्रगृह्य शक्तिं विससर्ज लक्ष्मणे ॥ १९७ ॥ तया स वीरः सुविदारितोराः पपात भूमौ सुभृशं विमूर्च्छितः। मरुत्सुतः शैलमतिप्रमाणं चिक्षेप रक्षःपतिवक्षसि द्रुतं ॥ १९८ ॥ तेनातिगाढं व्यथितो दशाननो मुखैर्वमञ्छोणितपूरमाशु। तदन्तरे च प्रतिगृह्य लक्ष्मणं जगाम शक्त्या सह रामसन्निधिम् ॥ १९९ ॥ समुद्रबर्हाथ च तां स राघवो दिदेश च प्राणवरात्मजं पुनः। प्रभुः समानेतुमथो वरौषधीः स चानिनायाशु गिरिं पुनस्तम् ॥ २०० ॥ तद्गन्धमात्रेण समुत्थितोऽसौ सौमित्रिरात्तोरुबलश्च पूर्ववत्। शशंस चाश्लिष्य मरुत्सुतं प्रभुः स राघवोऽगण्यगुणार्णवः स्मयन् ॥ २०१ ॥ प्राक्षिपत्तं गिरिवरं लङ्कास्थः सन्स मारुतिः। अर्धलक्षे योजनानां यत्रासौ पूर्वसंस्थितः ॥ २०२ ॥ तद्बाहुवेगात्संश्लेषं प्राप पूर्ववदेव सः। मृताश्च ये प्लवङ्गास्तु तद्गन्धात्तेऽपि जीविताः ॥ २०३ ॥ रामाज्ञया हि रक्षांसि हरयोऽब्धावथाक्षिपन्। नोज्जीवितास्ततस्ते तु वानरा नीरुजोऽभवन् ॥ २०४ ॥ छिन्नप्ररोहिणश्चैव विशल्याः पूर्ववर्णिनः। ओषधीनां प्रभावेण सर्वेऽपि हरयोऽभवन् ॥ २०५ ॥ अथाससादोत्तमपूरुषं प्रभुं विमानगो रावण आयुधौघान्। प्रवर्षमाणो रघुवंशनाथं तमात्तधन्वाभिययौ स रामः ॥ २०६ ॥ सम्मानयन्राघवमादिपूरुषं



निर्यातयामास रथं पुरन्दरः। सहायुधं मातलिसंगृहीतं समारुरोहाशु स लक्ष्मणाग्रजः ॥ २०७ ॥ आरुह्य तद्रथवरं जगदेकनाथो लोकाभयाय रजनीचरनाथमाशु। अभ्युद्ययौ दशशतांशुरिवान्धकारं लोकानशेषत इमान्निगिरन्तमुद्यन् ॥ २०८ ॥ आयान्तमीक्ष्य रजनीचरलोकनाथः शस्त्राण्यथास्त्रसहितानि मुमोच रामे। रामस्तु तानि विनिकृत्य निजैर्महास्त्रैस्तस्योत्तमाङ्गदशकं युगपन्न्यकृन्तत् ॥ २०९ ॥ कृत्तानि तानि पुनरेव समुत्थितानि दृष्ट्वा वराच्छतधृतेर्हृदयं बिभेद। बाणेन वज्रसदृशेन स भिन्नहृत्को रक्तं वमन्न्यपतदाशु महाविमानात् ॥ २१० ॥

तस्मिन्हते त्रिजगतां परमप्रतीपे ब्रह्मा शिवेन सहितः सहलोकपालैः। अभ्येत्य पादयुगलं जगदेकभर्तू रामस्य भक्तिभरितः शिरसा ननाम ॥ २११ ॥ अथैनमस्तौत्पितरं कृताञ्जलिर्गुणाभिरामं जगतः पितामहः। जितं जितं तेऽजित लोकभावन प्रपन्नपालाय नताः स्म ते वयं ॥ २१२ ॥ त्वमेक ईशोऽसि न चादिरन्तस्तवेड्यकालेन तथैव देशतः। गुणा ह्यगण्यास्तव तेऽप्यनन्ताः प्रत्येकशश्चादिविनाशवर्जिताः ॥ २१३ ॥ न चोद्भवो नैव तिरस्कृतिस्ते क्वचिद्गुणानां परतः स्वतो वा। त्वमेक आद्यः परमः स्वतन्त्रो भृत्यास्तवाहं शिवपूर्वकाश्च ये ॥ २१४ ॥ यथार्चिषोऽग्नेः पवनस्य वेगा मरीचयोऽर्कस्य नदीषु चापः। गच्छन्ति चायान्ति च सन्तताश्च तद्वन्मदाद्याः शिवपूर्वकाश्च ये ॥ २१५ ॥ ये ये च मुक्तास्त्वथ ये च बद्धाः सर्वे तवेश वशे सदैव। वयं सदा तद्गुणपूगमुच्चैः सर्वे वदन्तोऽपि न पारगामिनः ॥ २१६ ॥ किमेष ईदृग्गुणकस्य ते प्रभो रक्षोवधोऽपसुरप्रपालनं। अनन्यसाध्यं हि तथापि तद्द्वयं कृतं त्वया तस्य नमो नमस्ते ॥ २१७ ॥ इतीरिते त्वब्जभवेन शूली समाह्वयद्राघवमाहवाय। वरं मदीयं त्वगणय्य रक्षो हतं त्वया तेन रणाय मेहि ॥ २१८ ॥ इतीरितेऽस्त्वित्यभिधाय राघवो धनुः प्रगृह्याशु शरं च

सन्दधे। विकृष्यमाणे चलिता वसुन्धरा पपात रुद्रोऽपि धरा-
प्रकम्पतः ॥ २१९ ॥ अथोत्थितश्चासुरभाववर्जितः क्षमस्व देवेति
ननाम पादयोः। उवाच च त्वद्वशगोऽस्मि सर्वदा प्रसीद मे त्वद्विषयं
मनः कुरु ॥ २२० ॥ अथेंद्रमुख्याश्च तमूचिरे सुरास्त्वयाविताः
स्मोऽद्य निशाचराद्भयम्। तथैव सर्वापद एव नस्त्वं प्रपाहि सर्वे
भवदीयकाः स्मः ॥ २२१ ॥ सीताकृतिं तामथ तत्र चागतां दिव्यच्छ-
लेन प्रणिधाय पावके। कैलासतस्तां पुनरेव चागतां सीतामगृह्णाद्धुत-
भुक्समर्पितां ॥२२२॥ जानन् गिरीशालयगां स सीतां समग्रहीत्पावक-
सम्प्रदत्तां। मुमोद संप्राप्य च तां स रामः सा चैव देवी भगवन्त-
माप्य ॥२२३॥ अथो गिरेरानयनात्परस्ताद्ये वानरा रावणबाणपीडिताः।
तारापिता तान्निरुजश्चकार सुषेणनामा भिषजां वरिष्ठः ॥ २२४ ॥
तदा मृतान्राघव आनिनाय यमक्षयाद्देवगणांश्च सर्वशः। समन्वजाना-
त्पितरं च तत्र समागतं गन्तुमियेष चाथ ॥ २२५ ॥ विभीषणेनार्पित-
मारुरोह स पुष्पकं तत्सहितः सवानरः। पुरीं जगामाशु निजामयोध्यां
पुरो हनूमन्तमथो न्ययोजयत् ॥ २२६ ॥ ददर्श चासौ भरतं हुताशनं
प्रवेष्टुकामं जगदीश्वरस्य। अदर्शनात्तं विनिवार्य रामं समागतं चास्य
शशंस मारुतिः ॥ २२७ ॥ श्रुत्वा प्रमोदोरुभरः स तेन सहैव पौरैः
सहितः समातृकः। शत्रुघ्नयुक्तोऽभिसमेत्य राघवं ननाम बाष्पाकुल-
लोचनाननः ॥ २२८ ॥ उत्थाप्य तं रघुपतिः सस्वजे प्रणयान्वितः।
शत्रुघ्नं च तदन्येषु प्रतिपेदे यथावयः ॥ २२९ ॥ पुरीं प्रविश्य
मुनिभिः साम्राज्ये चाभिषेचितः। यथोचितं च संमान्य सर्वानाहेद-
मीश्वरः ॥ २३० ॥ सर्वैर्भवद्भिः सुकृतं विधाय देहं मनोवाक्सहितं
मदीयम्। एतावदेवाखिलसद्विधेयं यत्कायवाक्चित्तभवं मदर्चनम् ॥
॥ २३१ ॥ मुक्तिप्रदानात्प्रतिकर्तृता मे सर्वस्य चाथो भवतां भवेत।
हनूमतो न प्रतिकर्तृता स्यात्स्वभावभक्तस्य निरौपधं मे ॥ २३२ ॥



मद्भक्तौ ज्ञानपूर्ताविनुपधिकबलप्रोन्नतिस्थैर्यधैर्यस्वाभाव्याधिक्यतेजःसुम-
तिदमशमेष्वस्य तुल्यो न कश्चित्। शेषो रुद्रः सुपर्णोऽप्युरुगुणसमितौ
नो सहस्रांशतुल्या अस्येत्यस्मान्मदीशं पदमहममुना सार्धमेवोपभोक्ष्ये ॥
॥ २३३ ॥ पूर्वं जिगाय भुवनं दशकन्धरोऽसावब्जोद्भवस्य वरतो
न तु तं कदाचित्। कश्चिज्जिगाय पुरुहूतसुतः कपित्वाद्विष्णोर्वरादजय-
र्जुन एव चैनं ॥ २३४ ॥ दत्तो वरो न मनुजान्प्रति वानरांश्च
पाशाऽस्य तेन विजितो युधि वालिनैषः। अब्जोद्भवस्य वरमाध्यभिभूय
रक्षो जिग्ये त्वहं रणमुखे बलिमाह्वयन्तम् ॥ २३५ ॥ बलेर्द्वारस्थोऽहं
परमस्मै सम्प्रदाय पूर्वं तु। तेन मया रक्षोऽस्तं योजनमयुतं पदां-
गुल्या ॥ २३६ ॥ पुनश्च युद्धाय समाह्वयंतं न्यपातयं रावणमेकमुष्टिना।
महाबलोऽहं कपिलाख्यरूपस्त्रिकोटिरूपः पवनश्च मे सुतः ॥ २३७ ॥
आर्वा स्वशक्त्या जयिनाविति स्म शिवो वरान्मेऽजयदेनमेव। ज्ञात्वा
सुराजेयमिमं हि वव्रे हरो जयेयाहममुं दशाननम् ॥ २३८ ॥ अतः
स्वभावाज्जयिनावहं च वायुश्च वायुर्हनुमान्स एषः। अमुष्य हेतोस्तु
पुरा हि वायुना शिवेंद्रपूर्वा अपि काष्ठवत्कृताः ॥ २३९ ॥ अतो
हनूमान्पदमेतु धातुर्मदाज्ञया सृष्ट्यवनादिकर्म। मोक्षं च लोकस्य सदैव
कुर्वन्मुक्तश्च मुक्तान्सुखयन्प्रवर्तताम् ॥ २४० ॥ भोगाश्च ये यानि च
कर्मजातान्यनाद्यनन्तानि ममेह सन्ति। मदाज्ञया तान्यखिलानि संति
धातुः पदे तत्सहभोगनाम ॥ २४१ ॥ एतादृशं मे सहभोजनं ते मया
पदत्तं हनुमन्सदैव। इतीरितस्तं हनुमान्प्रणम्य जगाद वाक्यं स्थिरभक्ति-
नम्रः ॥ २४२ ॥ को न्वीश ते पादसरोजभाजां सुदुर्लभोऽर्थेषु चतुर्ष्व-
पीह। तथापि नाहं प्रवृणोमि भूमन्भवत्पदांभोजनिषेवणादृते ॥२४३॥
त्वमेव साक्षात्परमः स्वतंत्रस्त्वमेव साक्षादखिलोरुशक्तिः। त्वमेव
चागण्यगुणार्णवः सदा रमाविरिंचादिभिरप्यशेषैः ॥ २४४ ॥ समेत्य
सर्वेऽपि सदा वदंतोऽप्यनंतकालाच्च न वै समाप्नुयुः। गुणांस्त्वदीयान्परि-

पूर्णसौख्यज्ञानात्मकस्त्वं हि सदातिशुद्धः ॥ २४५ ॥ यस्ते कथासेवक एव सर्वदा सदारतिस्त्वय्यचलैकभक्तिः । स जीवमानो न परः कथंचित्तज्जीवनं मेऽस्त्वधिकं समस्तात् ॥ २४६ ॥ प्रवर्धतां भक्तिरलं क्षणे क्षणे त्वयीश मे ह्रासविवर्जिता सदा । अनुग्रहस्ते मयि चैवमेव निरूपधौ तौ मम सर्वकामः ॥ २४७ ॥ इतीरितस्तस्य ददौ स तद्द्वयं पदं विधातुः सकलं च शोभनम् । समाश्लिषच्चैनमथार्द्रया धिया यथोचितं सर्वजनानपूजयत् ॥ २४८ ॥ (८८५) इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये श्रीरामचरिते युद्धकांडकथानिरूपणं नामाष्टमोऽध्यायः ॥ ८ ॥

---

## अथ नवमोऽध्यायः

॥ ॐ ॥ अथाप्तराज्यो भगवान्स लक्ष्मणं जगाद राजा तरुणो भवाशु । इतीरितस्त्वाह स लक्ष्मणो गुरुं भवत्पदाब्जान्न परं वृणोम्यहम् ॥ १ ॥ न मां भवत्पादनिषेवणैकस्पृहं तदन्यत्र नियोक्तुमर्हसि । नहीदृशः कश्चिदनुग्रहः क्वचित्तदेव मे देहि ततः सदैव ॥२॥ इतीरितस्तस्य तदेव दत्वा दृढं समाश्लिष्य च राघवः प्रभुः । स यौवराज्ये भरतं निधाय जुगोप लोकानखिलान्सधर्मकान् ॥ ३ ॥ प्रशासतीशे पृथिवी बभूव विरिञ्चलोकस्य समा गुणोन्नतौ । जनोऽखिलो विष्णुपरो बभूव न धर्महानिश्च बभूव कस्यचित् ॥ ४ ॥ गुणैश्च सर्वैरुदिताश्च सर्वे यथा योग्यतयोच्चनीचाः । समस्तरोगादिभिरुज्झिताश्च सर्वे सहस्रायुष ऊर्जिता धनैः ॥ ५ ॥ सर्वे जना नित्यबलोपपन्ना यथेष्टसिद्ध्या च सदोपपन्नाः । समस्तदोषैश्च सदा विहीनाः सर्वे सुरूपाश्च सदा महोत्सवाः ॥ ६ ॥ सर्वे मनोवाक्तनुभिः सदैव विष्णुं यजन्ते न तु कश्चिदन्यम् । समस्तरत्नोद्धरिता च पृथ्वी यथेष्टधान्या



बहुदुग्धगोमती ॥ ७ ॥ समस्तगन्धाश्च सदातिहृद्या रसा मनोहारिण एव तत्र । शब्दाश्च सर्वे श्रवणार्तिहारिणः स्पर्शाश्च सर्वे स्पर्शेंद्रियप्रियाः ॥ ८ ॥ न कस्यचिद्दुःखमभूत्कथञ्चिन्न वित्तहानिश्च बभूव कस्यचित् । नाधर्मशीलो न च कश्चनाप्रजो न दुष्प्रजो नैव कुभार्यकश्च ॥ ॥ ९ ॥ स्त्रियो न चासन्विधवाः कथञ्चिन्न वै पुमांसो विधुरा बभूवुः । नानिष्टयोगश्च बभूव कस्यचिन्न चेष्टहानिर्न च पूर्वमृत्युः ॥ ॥ १० ॥ यथेष्टमाल्याभरणानुलेपना यथेष्टपानाशनवाससोऽखिलाः । बभूवुरीशे जगतां प्रशासति प्रकृष्टधर्मेण जनार्दने नृपे ॥ ११ ॥ स ब्रह्मरुद्रमरुदश्विदिवाकरादिमूर्धन्यरत्नपरिघट्टितपादपीठः । नित्यं सुरैः सहनरैरथ वानरैश्च संपूज्यमानचरणो रमते रमेशः ॥ १२ ॥ तस्याखिलेशितुरनाद्यनुगैव लक्ष्मीः सीताभिधा त्वरमयत्स्वरतं रमेशम् । नित्यावियोगिपरमोच्चनिजस्वभावसौंदर्यविभ्रमसुलक्षणपूर्वभावा ॥ १३ ॥ रेमे तया स परमः स्वरतोऽपि नित्यं नित्योन्नतप्रमदभारभृतस्वभावः । पूर्णोडुराजसुविराजितसन्निशासु दीप्यन्नशोकवनिकासु सुपुष्पितासु ॥ ॥ १४ ॥ गायन्ति चैनमनुरक्तधियः सुकण्ठा गन्धर्वचारणगणाः सह चाप्सरोभिः । तं तुष्टुवुर्मुनिगणाः सहिताः सुरेशै राजान एनमनुयान्ति सदाऽप्रमत्ताः ॥ १५ ॥ एवं त्रयोदशसहस्रमसौ समास्तु पृथ्वीं ररक्ष विजितारिरमोघवीर्यः । आनन्दमिन्दुरिव सन्दधदिन्दिरेशो लोकस्य सान्द्रसुखवारिधिरप्रमेयः ॥ १६ ॥

देव्यां स चाजनयदिन्द्रहुताशनौ द्वौ पुत्रौ यमौ कुशलवौ बलिनौ गुणाढ्यौ । शत्रुघ्नतो लवणमुल्बणबाणदग्धं कृत्वा चकार मधुरां पुरमुग्रवीर्यः ॥ १७ ॥ कोटित्रयं स निजघान तथाऽसुराणां गन्धर्वजन्म भरतेन सतां च धर्मम् । संशिक्षयन्नयजदुत्तमकल्पकैः स्वं पौत्रैर्भवाब्जजमुखास्सचिवाश्च यत्र ॥ १८ ॥ अथ शूद्रतपश्चर्यान्निहतं विप्रपुत्रकम् । उज्जीवयामास विभुर्हत्वा तं शूद्रतापसम् ॥ १९ ॥

जह्नुनामाऽसुरः पूर्वं गिरिजावरदानतः। बभूव शूद्रः कल्पायुः स लोकक्षयकाम्यया ॥ २० ॥ तपश्चचार दुर्बुद्धिरिच्छन्माहेश्वरं पदम्। अनन्यवध्यं तं तस्माज्जघान पुरुषोत्तमः ॥ २१ ॥ श्वेतदत्तां तथा मालामगस्त्यादाप राघवः ॥ २२ ॥ अनन्नयज्ञकृच्छ्वेतो राजा क्षुद्विनिवर्तनम्। कुर्वन्स्वमांसैर्धात्रोक्तो मालां रामार्थमार्पयत् ॥ २३ ॥ अगस्त्याय न साक्षात्तु रामे दद्यादयं नृपः। क्षुदभावमात्रफलदं न साक्षाद्राघवेऽर्पितम् ॥२४॥ क्षुदभावमात्रमाकांक्षन्मामसौ परिपृच्छति। व्यवधानतस्ततो रामे दद्याच्छ्वेत इति प्रभुः। मत्वा ब्रह्मादिशन्मालां प्रदातुं कुम्भयोनये ॥ २५ ॥ तामगस्त्यकरपल्लवार्पितां भक्त एष मम कुम्भसम्भवः। इत्यवेत्य जगृहे जनार्दनस्तेन संस्तुत उपागमत्पुरम् ॥ ॥ २६ ॥

अथ केचिदासुरसुराः सुराणका इत्युरुप्रथितपौरुषाः पुरा। ते तपः सुमहदास्थिता विभुं पद्मसम्भवमवेत्य चोचिरे ॥ २७ ॥ भूरिपापकृतिनोऽपि निश्चयान्मुक्तिमाप्नुम उदारसद्गुण। इत्युदीरितमजोऽवधार्य तत्प्राह च प्रहसिताननः प्रभुः ॥ २८ ॥ यावदेव रमया रमेश्वरं नो वियोजयथ सद्गुणार्णवम्। तावदुच्चमपि दुष्कृतं भवन्मोक्षमार्गपरिपंथि नो भवेत् ॥ २९ ॥ इत्युदीरितमवेत्य तेऽसुराः क्षिप्रमोक्षगमनोत्सुकाः क्षितौ। साधनोपचयकांक्षिणो हरौ शासति क्षितिमशेषतोऽभवन् ॥ ३० ॥ताननादिकृतदोषसञ्चयैर्मोक्षमार्गगतियोग्यतोज्झितान्। मैथिलस्य तनया व्यचालयन्मायया स्म तनुवा स्वमार्गतः ॥ ३१ ॥ आज्ञयैव हि हरेस्तु मायया मोहितास्तु दितिजा व्यनिन्दयन्। राघवो निशिचराहृतां पुनर्जानकीं जगृह इत्यनेकशः ॥ ॥ ३२ ॥ ब्रह्मवाक्यमृतमेव कारयन्पातयंस्तमसि चान्ध आसुरान्। नित्यमेव सहितोऽपि सीतया सोऽग्निसाक्षिकमभूद्वियुक्तवत् ॥ ३३ ॥ तेन चान्धतम ईयुरासुरा यज्ञमाह्वयदसौ च मैथिलीम्। तत्र भूमि



पथच्छलान्नृणां दृष्टिमार्गमपहाय सा स्थिता ॥ ३४ ॥ गुरुं हि जगतो विष्णुर्ब्रह्माणमसृजत्स्वयम्। तेन तद्वचनं सत्सु नानृतं कुरुते क्वचित् ॥ ॥ ३५ ॥ नासत्स्वप्यनृतं कुर्याद्वचनं पारलौकिकम्। ऐहिकं त्वसुरेष्वेव क्वचिद्धन्ति जनार्दनः ॥ ३६ ॥ निजाधिक्यस्य विज्ञप्त्यै क्वचिद्वायुप्रसादाज्ञया। हन्ति ब्रह्मत्वमात्मीयमद्धा ज्ञापयितुं प्रभुः ॥३७॥ नान्यः कश्चित्तद्वराणां शापानामप्यतिक्रमी। अयोग्येषु तु रुद्रादिवाक्यां तौ कुरुतो मृषा ॥ ३८ ॥ एकदेशेन सत्यं तु योग्येष्वपि कदाचन। न विष्णोर्वचनं क्वापि मृषा भवति कस्यचित्। एतदर्थोऽवतारस्तु विष्णोर्भवति सर्वदा ॥ ३९ ॥ प्रविश्य भूमौ सा देवी लोकदृष्ट्यनुसारतः। रेमे रामेणावियुक्ता भास्करेण प्रभा यथा ॥ ४० ॥ एवं रमालालितपादपल्लवः पुनश्च यज्ञैरयजत्स्वमेव। वराश्वमेधादिभिराप्तकामो रेमेऽभिरामो नृपतीन्विशिक्षयन् ॥ ४१ ॥ रामस्य दृश्या त्वन्येषामदृश्या जनकात्मजा। भूमिप्रवेशादूर्ध्वं सा रेमे सप्तशतं समाः ॥ ४२ ॥ एवंविधान्यगणितानि जनार्दनस्य रामावतारचरितानि तदन्यपुम्भिः। शक्यानि नैव मनसाऽपि हि तानि कर्तुं ब्रह्मेशशेषपुरुहूतमुखैः सुरैश्च ॥ ४३ ॥

तस्यैवमब्जभवलोकसमामिमां क्ष्मां कृत्वाऽनुशासत उदीक्ष्य गुणान्धरायाः। वैशेष्यमात्मसदनस्य हि काङ्क्षमाणा वृन्दारकाः कमलजं प्रति तच्छशंसुः ॥ ४४ ॥ आमन्त्र्य तैः सह विभुर्भगवत्प्रयाणं स्वीयाय सद्मन इयेष दिदेश चाथ। रुद्रं स्वलोकगमनाय रघूत्तमस्य संप्रार्थने स च समेत्य विभुं ययाचे ॥ ४५ ॥ एकान्तमेत्य रघुपेण समस्तकालो रुद्रो जगाद वचनं जगतो विधातुः। वैशेष्यमात्मसदनस्य हि काङ्क्षमाणास्त्वामर्थयन्ति विबुधाः सहिता विधात्रा ॥ ॥ ४६ ॥ पुत्रस्तवेश कमलप्रभवस्तथाहं पौत्रस्तु पौत्रकवचो यदपि ह्ययोग्यम्। संभावयन्ति गुणिनस्तदहं ययाचे गन्तुं स्वसद्म नतिपूर्व-

मितो भवन्तम् ॥ ४७ ॥ यत्कार्यसाधनकृते विबुधार्थितस्त्वं प्रादुश्चकर्थ
निजरूपमशेषमेव । तत्साधितं हि भवता तदितः स्वधाम क्षिप्रं
प्रयाहि हर्षं विबुधेषु कुर्वन् ॥ ४८ ॥ ओमित्युवाच भगवांस्तदशेषमेव
श्रुत्वा रहस्यथ तनुस्त्वपरा हरस्य । दुर्वासनामयुगिहागमदाशु रामं मां
भोजय क्षुदितमित्यसकृद्ब्रुवाणा ॥ ४९ ॥ सिद्धं न देयमुत साध्यमपीति
वाचं श्रुत्वाऽस्य वाक्समयजातमुरु स्वहस्तात् । अन्नं चतुर्गुणमदादमृतो-
पमानं रामस्तदाप्य बुभुजेऽथ मुनिः सुतुष्टः ॥ ५० ॥ तृप्तो ययौ च
सकलान्प्रति कोपयानः कश्चिन्न मेऽर्थितवरं प्रतिदातुमीशः । एवं
प्रतिज्ञक ऋषिः स हि तत्प्रतिज्ञां मोघां चकार भगवान्न तु कश्चि-
दन्यः ॥ ५१ ॥ कुन्ती तु तस्य हि मुनेर्वरतोऽजयत्तं रामः स
कृष्णतनुवा स्वबलाज्जिगाय । तस्मिञ्छिवे प्रतिगते मुनिरूपके च
याहीति लक्ष्मणमुवाच रमापतिः सः ॥ ५२ ॥ एकान्ते तु यदा
रामश्चक्रे रुद्रेण संविदम् । द्वारपालं स कृतवांस्तदा लक्ष्मणमेव सः ॥
॥ ५३ ॥ यद्यत्र प्रविशेत्कश्चिद्धन्मि त्वेति वचो ब्रुवन् । तदन्तरा-
गतमृषिं दृष्ट्वाऽमन्यत लक्ष्मणः ॥ ५४ ॥ दुर्वाससः प्रतिज्ञा तु रामं
प्राप्यैव भज्यताम् । अन्यथा त्वयशो रामे करोत्येष मुनिर्ध्रुवम् ॥ ५५ ॥
राघवो घ्नन्नपि तु मां करोत्येव दयां मयि । इति मत्वा ददौ मार्गं स
तु दुर्वाससे तदा ॥ ५६ ॥ स्वलोकगमनाकांक्षी स्वयमेव तु राघवः ।
इयं प्रतिज्ञा हेतुः स्यादिति हन्मीति सोऽकरोत् ॥ ५७ ॥ अत्यन्त-
बन्धुनिधनं त्याग एवेति चिन्तयन् । याहि स्वलोकमचिरादित्युवाच
स लक्ष्मणम् ॥ ५८ ॥ इत्युक्तः स ययौ जगद्भवभयध्वान्तच्छिदं
राघवं ध्यायन्नाप च तत्पदं दशशतैर्युक्तो मुखाम्भोरुहैः । आसीच्छेष-
महाफणी मुसलभृद्दिव्याकृतिर्लाङ्गली पर्यङ्कत्वमवाप यो जलनिधौ
विष्णोः शयानस्य च ॥ ५९ ॥ अथ राघवः स्वभवनोपगतौ विदधे
मतिं सह जनैरखिलैः । समघोषयच्च य इहेच्छति तत्पदमक्षयं सपदि



मेत्विति सः ॥ ६० ॥ श्रुत्वा तु तद्य इह मोक्षपदेच्छवस्ते सर्वे
समाययुरथा तृणमा पिपीलं । रामाज्ञया गमनशक्तिरभूत्तृणादेर्ये तत्र
दीर्घभविनो न हि ते तदैच्छन् ॥ ६१ ॥ संस्थापयामास कुशं
स्वराज्ये तैः साकमेव च लवं युवराजमीशः । संस्थाप्य वालितनयं
कपिराज्य आशु सूर्यात्मजोऽपि रघुवीरसमीपमायात् ॥ ६२ ॥ अथाह
वायुनन्दनम् स राघवः समाश्लिषन् । तवाहमक्षिगोचरः सदा भवामि
नान्यथा ॥ ६३ ॥ त्वया सदा महत्तपः सुकार्यमुत्तमोत्तमम् । तदेव
मे महत्प्रियं चिरं तपस्त्वया कृतम् ॥ ६४ ॥ दशास्यकुम्भकर्णकौ यथा
सुशक्तिमानपि । जघन्थ न प्रियाय मे तथैव जीवकल्पकम् ॥ ६५ ॥
योऽब्धिमध्यगं च मे सुसद्म चान्यदेव वा । यथेष्टतो गमिष्यसि
सदेहसंयुतोऽपि सन् ॥ ६६ ॥ यथेष्टभोगसंयुतः सुरेशगायकादिभिः ।
समीड्यमानसद्यशा रमस्व मत्पुरः सदा ॥ ६७ ॥ तवेप्सितं न किञ्चन
क्वचित्कदाचिदेव वा । मृषा भवेत्प्रियश्च मे पुनःपुनर्भविष्यसि ॥६८॥
इतीरितो मरुत्सुतो जगाद विश्वनायकम् । विधेहि पादपङ्कजे तवेश
भक्तिमुत्तमाम् ॥ ६९ ॥ सदा प्रवर्धमानया तया रमेऽहमञ्जसा ।
समस्तजीवसञ्चयात्सदाधिका हि मेऽस्तु सा ॥ ७० ॥ नमो नमो नमो
नमो नतोऽस्मि ते सदा पदम् । समस्तसद्गुणोच्छ्रितं नमामि ते पदं
पुनः ॥ ७१ ॥ इतीरिते तथेति तं जगाद पुष्करेक्षणः । जगाम धाम
स्वधामनस्तृणादिना सहैव सः ॥ ७२ ॥ खगा मृगास्तृणादयः पिपीलि-
काश्च गर्दभाः । तदासुरुत्तमा यतो नृवानरास्तु किं पुनः ॥ ७३ ॥
सदैव रामभावनात्सदा सुतत्ववेदिनः । यतोऽभवंस्ततस्तु ते ययुः पदं
हरेस्तदा ॥ ७४ ॥ स तैः समावृतो विभुर्ययौ दिशं तदोत्तराम् ।
अनन्तसूर्यदीधितिर्दुरन्तसद्गुणार्णवः ॥ ७५ ॥ सहस्रसूर्यमण्डलज्ज्वल-
किरीटमूर्धजः । सुनीलकुन्तलावृताभितेंदुकान्तिसन्मुखः ॥ ७६ ॥
सुरक्तपद्मलोचनः सुविद्युदाभकुण्डलः । सुहासविद्रुमाधरः समस्तवेद-

वाग्रसः ॥ ७७ ॥ दिवाकरौघकौस्तुभप्रभासकोरुकन्धरः । सुपीवरो-न्नतोल्लसज्जगद्धरांसयुग्मकः ॥७८॥ सुवृत्तदीर्घपीवरोल्लसद्भुजद्वयाङ्कितः। जगद्विमथ्य संभृतः शरोऽस्य दक्षिणे करे ॥ ७९ ॥ स्वयं स तेन निर्मितो हतो मधुश्च कैटभः । शरेण येन विष्णुना ददौ च लक्ष्मणा-नुजे ॥ ८० ॥ स शत्रुसूदनोऽवधीन्मधोः सुतं रसाह्वयम् । शरेण येन चाकरोत्पुरीं च माधुराभिधाम् ॥ ८१ ॥ समस्तसारसम्भवं शरं दधार तं करे ॥ ८२ ॥ स वामबाहुना धनुर्दधार शार्ङ्गसंज्ञितम् । उदारबाहुभूषणः शुभाङ्गदः सुकङ्कणः । महाङ्गुलीयभूषितः सुरक्त-सत्कराम्बुजः ॥ ८३ ॥ अनर्घ्यरत्नमालया वनाख्यया च मालया । विलासिविस्तृतोरसा बभार च श्रियं प्रभुः ॥ ८४ ॥ स भूतिवत्स-भूषणस्तनूदरे वलित्रयी । उदारमध्यभूषणो लसत्तटित्प्रभाम्बरः ॥ ॥ ८५ ॥ करीन्द्रसत्करोरुयुक्सुवृत्तजानुमण्डलः । क्रमाल्पवृत्तजंघकः सुरक्तपादपल्लवः ॥ ८६ ॥ लसद्धरिन्मणिद्युती रराज राघवोऽधिकम् । असंख्यसत्सुखार्णवः समस्तशक्तिसत्तनुः ॥ ८७ ॥ ज्ञानं नेत्राब्जयुग्मा-न्मुखवरकमलात्सर्ववेदार्थसारांस्तन्वा ब्रह्माण्डबाह्यान्तरमधिकरुचा भास-यन्भासुरास्यः । सर्वाभीष्टाभये च स्वकरवरयुगेनार्थिनामादधानः प्राया-द्देवाधिदेवः स्वपदमभिमुखश्चोत्तराशां विशोकाम् ॥ ८८ ॥ दध्रे च्छत्रं हनूमान्स्रवदमृतमयं पूर्णचन्द्रायुताभं सीता सैवाखिलाक्ष्णां विषयमुपगता श्रीरिति ह्रीरथैका । द्वेधा भूता दुधाव व्यजनमुभयतः पूर्णचन्द्रांशु-गौरं प्रोद्यद्भास्वत्प्रभाभा सकलगुणतनुर्भूषिता भूषणैः स्वैः ॥ ८९ ॥ साक्षाच्चक्रतनुस्तथैव भरतश्चक्रं दधद्दक्षिणेनायात्सव्यत एव शङ्खवर-भृच्छङ्खात्मकः शत्रुहा । अग्रे ब्रह्मपुरोगमाः सुरगणा वेदाश्च सोंकारकाः पश्चात्सर्वजगज्जगाम रघुपं यान्तं निजं धाम तम् ॥ ९० ॥ तस्य सूर्यसुतपूर्ववानरा दक्षिणेन मनुजास्तु सव्यतः । रामजन्मचरितानि तस्य ते कीर्तयन्त उच्चकैर्द्रुतं ययुः ॥ ९१ ॥ गन्धर्वैर्गीयमानो



विबुधमुनिगणैरब्जसंभूतिपूर्वैर्वेदोदारार्थवाग्भिः प्रणिहितसुमनाः सर्वदा स्तूयमानः । सर्वैर्भूतैश्च भक्त्या स्वनिमिषनयनैः कौतुकाद्वीक्ष्यमाणः छायाच्छेषगरुत्मदादिकनिजैः संसेवितं स्वं पदम् ॥ ९२ ॥ ब्रह्मरुद्र-गरुडैः सशेषकैः प्रोच्यमानसुगुणोरुविस्तरः । आरुरोह विभुरम्बरं जनास्ते च दिव्यवपुषोऽभवंस्तदा ॥ ९३ ॥

अथ ब्रह्मा हरिं स्तुत्वा जगादेदं वचो विभुम् । त्वदाज्ञया मया दत्तं स्थानं दशरथस्य हि ॥ ९४ ॥ मातॄणां चापि तल्लोकस्त्वयुताब्दा-दितोऽग्रतः । अनर्हायास्त्वयाऽऽज्ञप्ता कैकेय्या अपि सद्गतिः । सूत्वा तु भरतं नैषा गच्छेत निरयानिति ॥ ९५ ॥ तथापि सा यदावेशाच्च-कार त्वय्यशोभनम् । निकृतिर्नाम सा क्षिप्ता मया तमसि शाश्वते ॥ ॥ ९६ ॥ कैकयी तु चलाँल्लोकान्प्राप्ता नैवाचलान्कचित् । पश्चाद्भक्ति-मती यस्मात्त्वयि सा युक्तमेव तत् ॥ ९७ ॥ मन्थरा तु तमस्यन्धे पातिता दुष्टचारिणी । सीतार्थे ये त्वनिन्दन्स्त्वां ते च याता महत्तमः ॥ ॥ ९८ ॥ प्रायशो राक्षसाश्चैव त्वयि कृष्णत्वमागते । शेषा यास्यन्ति तथैषा अष्टाविंशे कलौ युगे ॥ ९९ ॥ गते चतुःसहस्राब्दे तमोगास्त्रि-शतोत्तरे ॥ १०० ॥ अथ ये त्वत्पदाम्भोजमकरन्दकलिप्सवः । त्वया सदागतास्तेषां विधेहि स्थानमुत्तमम् ॥ १०१ ॥ अहं भवः सुरेशाद्याः किङ्करास्स्म तवेश्वर । यच्च कार्यमिहास्माभिस्तदप्याज्ञापयाशु नः ॥१०२॥ इत्युदीरितमाकर्ण्य शतानन्देन राघवः । जगाद भावगम्भीरं सुस्मिता-धरपल्लवः ॥ १०३ ॥ जगद्गुरुत्वमादिष्टं मया ते कमलोद्भव । गुर्वादेशानुसारेण मयाऽऽदिष्टा च सद्गतिः ॥ १०४ ॥ अतस्त्वया प्रदेया हि लोका एषां मदाज्ञया । हृदि स्थितं च जानासि त्वमेवैकः सदा मम ॥ १०५ ॥ इतीरितो हरेर्भावविज्ञानी कंजसंभवः । पिपीलि-कातृणान्तानां ददौ लोकाननुत्तमान् ॥ १०६ ॥ वैष्णवान्सन्ततत्वाच्च नाम्ना सान्तानिकान्विभुः । ते जरामृतिहीनाश्च सर्वदुःखविवर्जिताः ।

संसारमुक्ता न्यवसंस्तत्र नित्यसुखाधिकाः ॥ १०७॥ ये तु देव
इहोद्भूता नृवानरशरीरिणः । ते सर्वे स्वांशितामापुस्तन्मैंदविविदावृते।
॥ १०८ ॥ असुरावेशतस्तौ तु न राममनुजग्मतुः । पीतामृतौ पुरा
यस्मान्मम्रतुर्न च तौ तदा ॥ १०९ ॥ तयोश्च तपसा तुष्टश्चक्रे ताव-
जरामरौ । पुरा स्वयंभूस्तेनोभौ दर्पादमृतमन्थने ॥ ११० ॥ प्रसह्या-
पिबतां देवैर्देवांशत्वादुपेक्षितौ । पीतामृतेषु देवेषु युध्यमानेषु दानवैः।
तैर्दत्तमात्महस्ते तु रक्षायै पीतमाशु तत् ॥ १११ ॥ तस्माद्दोषादापतु-
स्तावासुरं भावमूर्जितम् ॥ ११२ ॥ अङ्गदः कालतस्त्यक्त्वा देहमाप
निजां तनुम् । रामाज्ञयैव कुर्वाणो राज्यं कुशसमन्वितः ॥ ११३ ॥
विभीषणश्च धर्मात्मा राघवाज्ञापुरस्कृतः । सेनापतिर्धनेशस्य कल्पमावीत्स
राक्षसान् ॥ ११४ ॥ रामाज्ञया जाम्बवांश्च न्यवसत्पृथिवीतले ।
उत्पत्त्यर्थं जाम्बवत्यास्तदर्थं सुतपश्चरन् ॥ ११५ ॥

अथो रघूणां प्रवरः सुरार्चितः स्वयैकतन्वा न्यवसत्सुरालये ।
द्वितीयया ब्रह्मसदस्यधीश्वरस्तेनार्पितोऽथापरया निजालये ॥ ११६ ॥
तृतीयरूपेण निजं पदं प्रभुं व्रजन्तमुच्चैरनुगम्य देवताः । अगम्यमर्याद-
मुपेत्य च क्रमाद्विलोकयन्तोऽतिविदूरतोऽस्तुवन् ॥ ११७ ॥ ब्रह्मा
मरुन्मारुतसूनुरीशः शेषो गरुत्मान्हरिजः शक्रकाद्याः । क्रमादनुव्रज्य
तु राघवस्य शिरस्यथाज्ञां प्रणिधाय निर्ययुः ॥ ११८ ॥ स्वं स्वं च सर्वे
सदनं सुरा ययुः पुरन्दराद्याश्च विरिञ्चपूर्वकाः । मरुत्सुतोऽथो बदरीम-
वाप्य नारायणस्यैव पदं सिषेवे ॥ ११९ ॥ समस्तशास्त्रोद्धरितं हरेर्वचो
मुदा तदा श्रोत्रपुटेन सम्भरन् । वदंश्च तत्त्वं विबुधर्षभाणां सदा मुनीनां
च सुखं ह्युवास ॥ १२० ॥ रामाज्ञया किंपुरुषेषु राज्यं चकार रूपेण
तथाऽपरेण । रूपैस्तथान्यैश्च समस्तसद्मन्युवास विष्णोः सततं यथेष्टम् ॥
॥ १२१ ॥ इत्थं स गायञ्छतकोटिविस्तरं रामायणं भारतपञ्चरात्रम् ।
वेदांश्च सर्वान्सहितब्रह्मसूत्रान्व्याचक्षाणो नित्यसुखोद्धरोऽभूत् ॥ १२२॥



रामोऽपि सार्धं पवनात्मजेन स सीतया लक्ष्मणपूर्वकैश्च । तथा गरुत्म-
त्प्रमुखैश्च पार्षदैः संसेव्यमानो न्यवसत्पयोऽब्धौ ॥१२३॥ कदाचिदीशः
सकलावतारानेकं विधायाहिपतौ च शेते । पृथक्च संव्यूह्य कदाचि-
दिच्छया रेमे रमेशोऽमितसद्गुणार्णवः ॥ १२४ ॥

इत्यशेषपुराणेभ्यः पञ्चरात्रेभ्य एव च । भारताच्चैव वेदेभ्यो
महारामायणादपि ॥ १२५ ॥ परस्परविरोधस्य हानान्निर्णीय तत्त्वतः ।
पुरुया बुद्धिबलाच्चैव विष्णोरेव प्रसादतः ॥ १२६ ॥ बहुकल्पानुसारेण
मयेयं सत्कथोदिता । नैकग्रन्थाश्रया तस्मान्नाशङ्क्याऽत्र विरुद्धता ॥
॥ १२७ ॥ क्वचिन्मोहायासुराणां व्यत्यासः प्रतिलोमता । उक्ता
ग्रन्थेषु तस्माद्धि निर्णयोऽयं कृतो मया ॥ १२८ ॥ एवं च
भविष्यमाणेषु नैवाशङ्क्या विरुद्धता । सर्वकल्पसमश्चायं पारम्पर्यक्रमः
सदा ॥ १२९ ॥ पुंव्यत्यासेन चोक्तिः स्यात्पुराणादिषु कुत्रचित् ।
कृष्णामाह यथा कृष्णो धनञ्जयशरैर्हतान् ॥१३०॥ शतं दुर्योधनादींस्ते
दर्शयिष्य इति प्रभुः । भीमसेनहतास्ते तु ज्ञायन्ते बहुवाक्यतः ॥
॥ १३१ ॥ विस्तारे भीमनिहताः सङ्क्षेपेऽर्जुनपातिताः । उच्यन्ते
बहवश्चान्ये पुंव्यत्याससमाश्रयात् ॥ १३२ ॥ विस्तारे कृष्णनिहता
बलभद्रहता इति । उच्यन्ते च क्वचित्कालव्यत्यासोऽपि क्वचिद्भवेत् ॥
॥१३३॥ यथा सुयोधनं भीमः प्राहसत्कृष्णसन्निधौ । इति वाक्येषु
बहुषु ज्ञायन्ते निर्णयादपि ॥ १३४ ॥ अनिर्णये तु कृष्णस्य पूर्वमुक्ता
गतिस्ततः । व्यत्यासास्त्वेवमाद्याश्च प्रातिलोम्यादयस्तथा ॥ १३५ ॥
उच्यन्ते भारताद्येषु लक्षणग्रन्थतश्च ते । ज्ञायन्ते बहुभिर्वाक्यैर्निर्णय-
ग्रन्थतस्तथा ॥ १३६ ॥ तस्माद्धि निर्णयग्रन्थानाश्रित्यैव च लक्षणम् ।
बहुवाक्यानुसारेण निर्णयोऽयं मया कृतः ॥ १३७ ॥ उक्तं लक्षण-
शास्त्रे च कृष्णद्वैपायनोदिते । त्रिभाषां यो न जानाति रीतीनां शतमेव
च ॥ १३८ ॥ व्यत्यासादीन्सप्तभेदान्वेदाद्यर्थं तथा वदेत् । स याति

निरयं घोरमन्यथाज्ञानसम्भवम् ॥ १३९ ॥ इत्यन्येषु च शास्त्रेषु तत्र तत्रोदितं बहु । व्यत्यासः प्रातिलोम्यं च गोमूत्री प्रघसस्तथा ॥१४०॥ उक्षणः सुधरः साधुः सप्तभेदाः प्रकीर्तिताः । इत्यादिलक्षणान्यत्र नोच्यन्तेऽन्यप्रसङ्गतः ॥ १४१ ॥ अनुसारेण तेषां तु निर्णयः क्रियते मया । तस्मान्निर्णयशास्त्रत्वाद्ग्राह्यमेतद्बुभूषुभिः ॥ १४२ ॥ इतीरिता रामकथा परा मया समस्तशास्त्रानुसृतेर्भवापहा । पठेदिमां यः शृणुयादथापि वा विमुक्तबन्धश्चरणं हरेर्व्रजेत् ॥ १४३ ॥ (१०२८) ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये श्रीरामचरिते उत्तरकाण्डकथानिरूपणं नाम नवमोऽध्यायः ॥९॥

---

## अथ दशमोऽध्यायः

॥ ॐ ॥ द्वापरेऽथ युगे प्राप्ते त्वष्टाविंशतिमे पुनः । स्वयम्भुशर्वशक्राद्या दुग्धाब्धेस्तीरमाययुः ॥ १ ॥ पयोऽब्धेरुत्तरं तीरमासाद्य विबुधर्षभाः । तुष्टुवुः पुण्डरीकाक्षमक्षयं पुरुषोत्तमम् ॥ २ ॥ नमो नमोऽगण्यगुणैकधाम्ने समस्तविज्ञानमरीचिमालिने । अनाद्यविज्ञानतमोनिहन्त्रे परामृतानन्दपदप्रदायिने ॥ ३ ॥ स्वदत्तमालाशुविपातकोपतो दुर्वाससः शापत आशु हि श्रिया । शक्रे विहीने दितिजैः पराजिते पुरा वयं त्वां शरणं गताः स्मः ॥ ४ ॥ त्वदाज्ञया बलिना सन्दधाना वराद्रिरीशस्य परैरचाल्यम् । वृन्दारका मन्दरमेत्य बाहुभिर्न शेकुरुद्धर्तुमिमे समेताः ॥५॥ तदा त्वया नित्यबलत्वहेतुतो योऽनन्तनामा गरुडस्तदंसके । उत्पाट्य चैकेन करेण मन्दरो निधापितस्तं स सह त्वयाऽवहत् ॥ ६ ॥ पुनः परीक्षद्भिरसौ गिरिः सुरैः सहासुरैरुन्नमितस्तदंसतः । व्यचूर्णयत्तानखिलान्पुनश्च ते त्वदीक्षया पूर्ववदुत्थिताः



भो ॥७॥ पुनश्च वामेन करेण वीश्वरे निधाय तं स्कन्धगतस्त्वमस्य । गाः पयोऽब्धिं सहितः सुरासुरैर्मथ्ना च तेनाब्धिमथाप्यमथ्नाः ॥ ८ ॥ तश्च कद्रोस्तनयोऽत्र वासुकिर्नेत्रं त्वया कश्यपजः स नागराट् । ममन्थुरब्धिं सहितास्त्वया सुराः सहासुरा दिव्यपयोघृताधिकम् ॥ ९ ॥ च्छन्त पुच्छं दितिजा अमङ्गलं तदित्यथाग्रं जगृहुर्विषोल्बणम् । न्तास्तु तेऽतो विबुधास्तु पुच्छं त्वया समेता जगृहुस्त्वदाश्रयाः ॥१०॥ थातिभारादविशत्सुकाञ्चनो गिरिः स पातालमथ त्वमेव । तं च्छपात्मा त्वभरः स्वपृष्ठे ह्यनन्यधार्यं पुरुलीलयैव ॥ ११ ॥ उपर्यधआत्मनि नेत्रगोत्रयोस्त्वया परेणाविशता समेधिताः । ममन्थुरब्धिं तरसा मदोत्कटाः सुरासुराः क्षोभितनक्रचक्रम् ॥ १२ ॥ श्रान्तेषु तेष्वेक उरुक्रमस्त्वं सुधारसाप्त्यै मुदितो ह्यमथ्नाः । तदा जगत्त्रासि विषं समुत्थितं त्वदाज्ञया वायुरधात्करे निजे ॥ १३ ॥ कलेः स्वरूपं तदतीव दुःसहं वराद्विधातुः सकलैश्च दुःस्पृशम् । करे विमथ्यास्तबलं विधाय ददौ स किञ्चिद्गिरिशाय वायुः ॥१४॥ स तत्पिबन्कण्ठगतेन तेन निपातितो मूर्च्छित आशु रुद्रः । हरेः करस्पर्शबलात्स संज्ञामवाप नीलोऽस्य गलस्तदासीत् ॥१५॥ अथ त्वदाज्ञां पुरतो निधाय निधाय पात्रे तपनीयरूपे । स्वयं त्वनिर्मथ्य बलोपपन्नं पपौ स वायुस्तदुतास्य जीर्णम् ॥ १६ ॥ अत्यल्पपानाच्च बभूव शूला शिवस्य शीर्ष्ण्यस्य कराशिष्टम् । अभूत्कलिः सर्वजगत्सु पूर्णं पीत्वा विकारो न बभूव वायोः ॥ १७ ॥ कलेः शरीरादभवन्कुनागाः सवृश्चिकाः श्वापदयातुधानाः । अथ त्वयाऽब्धौ तु विमथ्यमाने सुराऽभवत्तामसुरा अवापुः ॥ १८ ॥ उच्चैःश्रवा नाम तुरङ्गमोऽभूत्करी तथैरावतनामधेयः । अन्ये च दिक्पालगजा बभूवुर्वरं तथैवाप्सरसां सहस्रम् ॥ १९ ॥ तथाऽऽयुधान्याभरणानि चैव दिवौकसां पारिजातस्तरुश्च । तथैव साक्षात्सुरभिर्निशेशो बभूव तत्कौस्तुभं लोकसारम् ॥ २० ॥ अथेन्दिरा यद्यपि

नित्यदेहा बभूव तत्रापरया स्वतन्वा । ततो भवान्दक्षिणबाहुना सुधा-कमण्डलुं कलशं चापरेण ॥२१॥ प्रगृह्य तस्मान्निरगात्समुद्राद्धन्वन्तरिर्नाम हरिन्मणिद्युतिः । ततो भवद्धस्तगतं दितेः सुताः सुधाभरं कलशं चापजह्रुः । मुक्तं त्वया शक्तिमतापि दैत्यान्सत्यच्युतान्कारयितुं वधाय ॥ २२ ॥ ततो भवाननुपममुत्तमं वपुर्बभूव दिव्यप्रमदात्मकं त्वरन् । श्यामं नितम्बार्पितरत्नमेखलं जाम्बूनदाभाम्बरभृत्सुमध्यमम् ॥ ॥ २३ ॥ बृहन्नितम्बं कलशोपमस्तनं सत्पुण्डरीकायतनेत्रमुज्ज्वलम् । समस्तसारं परिपूर्णसद्गुणं दृष्ट्वैव तत्सम्मुमुहुः सुरारयः ॥२४॥ परस्परं तेऽमृतहेतुतोऽखिला विरुध्यमानाः प्रददुः स्म ते करे । समं सुधायाः कलशं विभज्य निपाययास्मानिति वञ्चितास्त्वया ॥ २५ ॥ धर्मच्छलं पापजनेषु धर्म इति त्वया ज्ञापयितुं तदोक्तम् । यद्यत्कृतं मे भवतां यदीह संवाद एवोद्विभजे सुधामिमाम् ॥ २६ ॥ यथेष्टतोऽहं विभजामि सर्वथा न विश्वसध्वं मयि केनचित्कचित् । इति प्रहस्याभिहितं निशम्य स्त्रीभावमुग्धास्तु तथेति तेऽवदन् ॥ २७ ॥ ततश्च संस्थाप्य पृथक्सुरा-सुरांस्तवातिरूपोच्चलितान्सुरेतरान् । सर्वान्भवद्दर्शन ईक्ष्य लज्जिताऽस्म्यहं दृशो मीलयतेत्यवोचः ॥२८॥ निमीलिताक्षेष्वसुरेषु देवता न्यपाययः साध्वमृतं ततः पुमान् । क्षणेन भूत्वा पिबतः सुधां शिरो राहोर्न्यकृन्तश्च सुदर्शनेन ॥ २९ ॥ तेनामृतार्थं हि सहस्रजन्मसु प्रतप्य भूयस्तप आरितो वरः । स्वयम्भुवस्तेन भवान्करेऽस्य बिन्दुं सुधां प्रास्य शिरो जहार ॥३०॥ शिरस्तु तस्य ग्रहतामवाप सुरैः समाविष्टमथो सबाहुः । क्षिप्तः कबन्धोऽस्य शुभोदसागरे त्वया स्थितोऽद्यापि हि तत्र सामृतः ॥ ॥ ३१ ॥ अथासुराः प्रत्यपतन्नुदायुधाः समस्तशस्ते च हतास्त्वया रणे । कलिस्तु स ब्रह्मवरादजेयो ऋते भवन्तं पुरुषेषु संस्थितः ॥३२॥ तस्यार्धदेहा समभूदलक्ष्मीस्तत्पुत्रका दोषगणाश्च सर्वशः । अथेन्दिरा वक्षसि ते समाश्रिता त्वत्कण्ठगं कौस्तुभमास धाता ॥ ३३ ॥ यथा-



विभागं च सुरेषु दत्तास्त्वया तथाऽन्येऽपि हि तत्र जाताः । इत्थं त्वया साध्वमृतं सुरेषु दत्तं हि मोक्षस्य निदर्शनाय ॥ ३४ ॥ भवेद्धि मोक्षो नियतं सुराणां नैवासुराणां स कथञ्चन स्यात् । उत्साहयुक्तस्य च तत्प्रतीपं भवेद्धि राहोरिव दुःखरूपम् ॥ ३५ ॥ कलिः स्वयं ब्रह्म-वरादिदानीं विबाधतेऽस्मान्सकलाः प्रजाश्च । अज्ञानमिथ्यामतिरूपतोऽसौ प्रविश्य सज्ज्ञानविरुद्धरूपः ॥ ३६ ॥ त्वदाज्ञया तस्य वरोऽब्जजेन दत्तः स आविश्य शिवं चकार । कदागमांस्तस्य कुयुक्तिबाधां न हि त्वदन्यश्चरितुं समर्थः ॥ ३७ ॥ वेदाश्च सर्वे सहशास्त्रसङ्घा उत्सादिता-स्तेन न सन्ति तेऽद्य । तत्साधु भूमाववतीर्य वेदानुद्धृत्य शास्त्राणि कुरुष्व सम्यक् ॥ ३८ ॥ अदृश्यमज्ञेयमतर्क्यरूपं कलिं निलीनं हृदयेऽखिलस्य सच्छास्त्रशस्त्रेण निहत्य शीघ्रं पदं निजं देहि महाजनस्य ॥ ३९ ॥ ऋते भवन्तं न हि तं निहन्ता त्वमेक एवाखिलशक्तिपूर्णः । ततो भवन्तं शरणं गता वयं तमोनिहत्यै निजबोधविग्रहम् ॥ ४० ॥

इतीरितस्तैरभयं प्रदाय सुरेश्वराणां परमोऽप्रमेयः । प्रादुर्बभूवा-मृतभूरिलायां विशुद्धविज्ञानघनस्वरूपः ॥ ४१ ॥ वसिष्ठनामा कमलो-द्भवात्मजः सुतोऽस्य शक्तिस्तनयः पराशरः । तस्योत्तमं सोऽपि तपोऽ-चरद्धरिः सुतो मम स्यादिति तद्धरिर्ददौ ॥ ४२ ॥ उवाच चैनं भगवान्सुतोपितो वसोर्मदीयस्य सुताऽस्ति शोभना । वने मृगार्थं चरतोऽस्य वीर्यं पपात भार्यां मनसा गतस्य ॥ ४३ ॥ तच्छ्येनहस्ते प्रददौ स तस्यै दातुं तदन्येन तु युध्यतोऽपतत् । जग्रास तन्मत्स्यवधूर्य-मस्वसुर्जलस्थमेनां जगृहुः स्म दाशाः ॥ ४४ ॥ तद्गर्भतोऽभून्मिथुनं स्वराज्ञे न्यवेदयन्सोऽपि वसोः समार्पयत् । पुत्रं समादाय सुतां स तस्मै ददौ सुतोऽभूदथ मत्स्यराजः ॥ ४५ ॥ कन्या तु सा दाशराजस्य सद्मन्यवर्धतातीवसुरूपयुक्ता । नाम्ना तु सा सत्यवतीति तस्यां तवात्म-जोऽहं भविताऽस्म्यजोऽपि ॥ ४६ ॥ इतीरितश्चक्रधरेण तां मुनिर्जगाम

मार्तण्डसुतां समुद्रगाम् । उत्तारयन्तीमथ तत्र विष्णुः प्रादुर्बभूवाशु विशुद्धचिद्घनः ॥४७॥ विदोषविज्ञानसुखैकरूपोऽप्यजो जनान्मोहयितुं मृषैव। योषित्सु पुंसो ह्यजनीव दृश्यते न जायते क्वापि बलादिविग्रहः ॥ ॥४८॥ यथा नृसिंहाकृतिराविरासीत्स्तम्भात्तथा नित्यतनुत्वतो विभुः। आविर्भवेद्योषिति नो मलोत्थस्तथापि मोहाय निदर्शयेत्तथा ॥ ४९ ॥ स्त्रीपुंप्रसङ्गात्परतो यतो हरिः प्रादुर्भवत्येष विमोहयञ्जनम् । अतो मलोत्थोऽयमिति स मन्यते जनोऽशुभः पूर्णगुणैकविग्रहम् ॥ ५० ॥ द्वीपे भगिन्याश्च यमस्य विश्वकृत्प्रकाशते ज्ञानमरीचिमण्डलः । प्रभासयन्नण्डबहिस्तथान्तः सहस्रलक्षामितभानुदीधितिः ॥ ५१ ॥ अगण्यदिव्योरुगुणार्णवः प्रभुः समस्तविद्याधिपतिर्जगद्गुरुः । अनन्तशक्तिर्जगदीश्वरेश्वरः समस्तदोषातिविदूरविग्रहः ॥ ५२ ॥ शुभमरकतवर्णो रक्तपादाब्जनेत्राधरकर(नख)रसनाग्रश्चक्रशङ्खाब्जरेखः । रविकरवरगौरं चर्म चैणं वसानस्तटिदमलजटासन्दीप्तचूडं दधानः ॥ ५३ ॥ विस्तीर्णवक्षाः कमलायताक्षो बृहद्भुजः कम्बुसमानकण्ठः । समस्तवेदान्मुखतः समुद्गिरन्ननन्तचन्द्राधिककान्तिसन्मुखः ॥ ५४ ॥ प्रबोधमुद्राभयदोर्द्वयान्वितो यज्ञोपवीताजिनमेखलोल्लसन् । दृशा महाऽज्ञानभुजङ्गदष्टमुज्जीवयानो जगदत्यरोचत ॥ ५५ ॥ स लोकधर्माभिरिरक्षया पितुर्द्विजत्वमाप्याशु पितुर्ददौ निजम् । ज्ञानं तयोः संस्मृतिमात्रतः सदा प्रत्यक्षभावं वरमात्मनो ददौ ॥ ५६ ॥

द्वैपायनः सोऽथ जगाम मेरुं चतुर्मुखाद्यैरनुगम्यमानः । उद्धृत्य वेदानखिलान्सुरेभ्यो ददौ मुनिभ्यश्च यथाऽऽदिसृष्टौ ॥५७॥ सर्वाणि शास्त्राणि तथैव कृत्वा विनिर्णयं ब्रह्मसूत्रं चकार । तच्छुश्रुवुर्ब्रह्मगिरीशमुख्याः सुरा मुनीनां प्रवराश्च तस्मात् ॥ ५८ ॥ समस्तशास्त्रार्थनिदर्शनात्मकं चक्रे महाभारतनामधेयम् । वेदोत्तमं तच्च विधातृशङ्करप्रधानकैस्तन्मुखतः सुरैः श्रुतम् ॥५९॥ अथो गिरीशादिमनोऽनुशायी कलि-



र्भमाराशु सुवाक्यैः शरैः । निकृत्तशीर्षो भगवन्मुखेरितैः सुराश्च सज्ज्ञानसुधारसं पपुः ॥ ६० ॥ अथो मनुष्येषु तथाऽसुरेषु रूपान्तरैः कलिरेवावशिष्टः । ततो मनुष्येषु च सत्सु संस्थितो विनाश्य इत्येव हरिर्व्यचिन्तयत् ॥ ६१ ॥ ततो नृणां कालबलात्सुमन्दमायुर्मतिं कर्म च वीक्ष्य कृष्णः । विव्यास वेदान्स विभुश्चतुर्धा चक्रे तथा भागवतं पुराणम् ॥ ६२ ॥ ये ये च सन्तस्तमसानुविष्टास्तांस्तान्सुवाक्यैस्तमसो व्यमुञ्चन् । चचार लोकान्स पथि प्रयान्तं कीटं व्यपश्यत्तमुवाच कृष्णः ॥ ६३ ॥ भवस्व राजा कुशरीरमेतत्त्यक्त्वेति नैच्छत्तदसौ ततस्तम् । अत्यक्तदेहं नृपतिं चकार पुरा स्वभक्तं वृषलं सुलुब्धम् ॥ ॥ ६४ ॥ लोभात्स कीटत्वमुपेत्य कृष्णप्रसादतश्चाशु बभूव राजा । तदैव तं सर्वनृपाः प्रणेमुर्ददुः करं चास्य यथैव वैश्याः ॥ ६५ ॥ उवाच तं भगवान्मुक्तिमस्मिंस्तव क्षणे दातुमहं समर्थः । तथापि सीमार्थमवाप्य विप्रतनुं विमुक्तो भव मत्प्रसादात् ॥ ६६ ॥ ज्ञानं च तस्मै विमलं ददौ सः महीं च सर्वां बुभुजे तदन्ते । त्यक्त्वा तनुं विप्रवरत्वमेत्य पदं हरेराप सुतत्त्ववेदी ॥ ६७ ॥ एवं बहून्संसृतिबन्धतः प्रभुर्व्यमोचयन्व्यासतनुर्जनार्दनः । बहून्यचिन्त्यानि च तस्य कर्माण्यशेषदेवेशसदोदितानि ॥ ६८ ॥

अथास्य पुत्रत्वमवाप्तुमिच्छंश्चचार रुद्रः सुतपस्तदीयम् । ददौ च तस्मै भगवान्वरं तं स्वयं च तप्त्वेव तपो विमोहयन् ॥ ६९ ॥ विमोहनायासुरसर्गिणां प्रभुः स्वयं करोतीव तपः प्रदर्शयेत् । कामादिदोषांश्च मृषैव दर्शयेन्न तावता तस्य हि सन्ति कुत्रचित् ॥ ७० ॥ ततस्त्वरण्योः स बभूव पुत्रकः शिवोऽस्य सोऽभूच्छुकनामधेयः । शुकी हि भूत्वा ह्यगमद् घृताची व्यासं विमभ्रन्तमुतारणीं तम् ॥ ७१ ॥ अकामयन्कामुकवत्स भूत्वा तयाऽर्थितस्तं शुकनामधेयम् । चक्रे ह्यरण्योस्तनयं च सृष्ट्वा विमोहयंस्तत्त्वमार्गेष्वयोग्यान् ॥ ७२ ॥ शुकं

तमाशु प्रविवेश वायुर्व्यासस्य सेवार्थमथास्य सर्वम् । ज्ञानं ददौ भगवान्सर्ववेदान्सभारतं भागवतं पुराणम् ॥ ७३ ॥ शेषोऽथ पैलं मुनिमाविशत्तदा वीशः सुमन्तुमपि वारुणिं मुनिम् । ब्रह्माऽविशत्तस्तुत वैशम्पायनं शक्रश्च जैमिनिमथाविशद्विभुः ॥ ७४ ॥ कृष्णस्य पादपरिसेवनोत्सुकाः सुरेश्वरा विविशुराशु तान्मुनीन् । समस्तविद्याः प्रतिपाद्य तेष्वसौ प्रवर्तकांस्तान्विदधे हरिः पुनः ॥ ७५ ॥ ऋचां प्रवर्तकं पैलं यजुषां च प्रवर्तकम् । वैशम्पायनमेवैकं द्वितीयं सूर्यमेव च ॥ ७६ ॥ चक्रेऽथ जैमिनिं साम्नामथर्वाङ्गिरसामपि । सुमन्तुं भारतस्यापि वैशम्पायनमादिशत् ॥७७॥ प्रवर्तने मानुषेषु गन्धर्वादिषु चात्मजम् । नारदं पाठयित्वा च देवलोकप्रवृत्तये ॥ ७८ ॥ आदिशत्ससृजे सोऽथ रोमाञ्चाद्रोमहर्षणम् । तं भारतपुराणानां महारामायणस्य च ॥ ७९ ॥ पञ्चरात्रस्य कृत्स्नस्य प्रवृत्त्यर्थमथादिशत् । तमाविशत्कामदेवः कृष्णसेवासमुत्सुकः ॥ ८० ॥ स तस्मै ज्ञानमखिलं ददौ द्वैपायनः प्रभुः । सनत्कुमारप्रमुखांश्चक्रे योगप्रवर्तकान् ॥ ८१ ॥ भृग्वादीन्कर्मयोगस्य ज्ञानं दत्वाऽमलं शुभम् । जैमिनिं कर्ममीमांसाकर्तारमकरोत्प्रभुः ॥८२॥ देवमीमांसिकाद्यन्तं कृत्वा पैलमथादिशत् । शेषं च मध्यकरणे पुराणान्यथ चाकरोत् ॥ ८३ ॥ शैवान्पाशुपतांश्चक्रे संशयार्थं सुरद्विषाम् । वैष्णवान्पञ्चरात्रांश्च यथार्थज्ञानसिद्धये ॥ ८४ ॥ ब्राह्मांश्च वेदतश्चक्रे पुराणग्रन्थसङ्ग्रहान् । एवं ज्ञानं पुनः प्रापुर्देवाश्च ऋषयस्तथा ॥ ८५ ॥ सनत्कुमारप्रमुखा योगिनो मानुषास्तथा । कृष्णद्वैपायनात्प्राप्य ज्ञानं ते मुमुदुः सदा ॥ ८६ ॥ समस्तविज्ञानगभस्तिचक्रं विताय विज्ञानमहादिवाकरः । निरस्य चाज्ञानतमो जगत्ततं प्रभासते भानुरिवावभासयन् ॥ ८७ ॥ चतुर्मुखेशानसुरेन्द्रपूर्वकैः सदा सुरैः सेवितपादपल्लवः । प्रकाशयंस्तेषु सदाऽऽत्मगुह्यं मुमोद मेरौ च तथा बदर्याम् ॥ ८८ ॥ (१११६) ॥ इति श्रीमदानन्दतीर्थ-



भगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये व्यासावतारकथानिरूपणं नाम दशमोऽध्यायः ॥ १० ॥

---

## अथ एकादशोऽध्यायः

॥ ॐ ॥ शशाङ्कपुत्रादभवत्पुरूरवास्तस्यायुरायोर्नहुषो ययातिः । तस्यास पत्नीयुगलं सुताश्च पञ्चाभवन्विष्णुपदैकभक्ताः ॥ १ ॥ यदुं च तुर्वसुं चैव देवयानी व्यजायत । द्रुह्युं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ॥ २ ॥ यदोर्वंशे चक्रवर्ती कार्तवीर्यार्जुनोऽभवत् । विष्णोर्दत्तात्रेयनाम्नः प्रसादाद्योगवीर्यवान् ॥ ३ ॥ तस्यान्ववाये यदवो बभूवुर्विष्णुसंश्रयाः । पुरोर्वंशे तु भरतश्चक्रवर्ती हरिप्रियः ॥ ४ ॥ तद्वंशजः कुरुर्नाम प्रतीपोऽभूत्तदन्वये । प्रतीपस्याभवन्पुत्रास्त्रयस्त्रेताग्निवर्चसः ॥ ५ ॥ देवापिरथ बाह्लीको गुणज्येष्ठश्च शन्तनुः । त्वग्दोषयुक्तो देवापिर्जगाम तपसे वनम् ॥ ६ ॥ विष्णोः प्रसादात्स कृते युगे राजा भविष्यति । पुत्रिकापुत्रतां यातो बाह्लीको राजसत्तमः ॥ ७ ॥ हिरण्यकशिपोः पुत्रः प्रह्लादो भगवत्प्रियः । वायुना च समाविष्टो महाबलसमन्वितः ॥ ८ ॥ येनैव जायमानेन तरसा भूर्विदारिता । भूभारक्षपणे विष्णोरङ्गतामाप्तुमेव सः ॥ ९ ॥ प्रतीपपुत्रतामाप्य बाह्लीकेष्वभवत्पतिः । रुद्रेषु पत्रतापाख्यः सोमदत्तोऽस्य चात्मजः ॥१०॥ अजैकपादहिर्बुध्निर्विरूपाक्ष इति त्रयः । रुद्राणां सोमदत्तस्य बभूवुः प्रथिताः सुताः ॥ ११ ॥ विष्णोरेवाङ्गतामाप्तुं भूरिर्भूरिश्रवाः शलः । शिवादिसर्वरुद्राणामावेशाद्वरतस्तथा ॥ १२ ॥ भूरिश्रवा अतिबलस्तत्रासीत्परमास्त्रवित् । तदर्थं हि तपश्चीर्णं सोमदत्तेन शम्भवे ॥१३॥ दत्तो वरश्च तेनास्य त्वत्प्रतीपाभिभूतिकृत् । बलवीर्यगुणोपेतो नाम्ना

भूरिश्रवाः सुतः ॥१४॥ भविष्यति मयाऽऽविष्टो यज्ञशील इति स्म ह। तेन भूरिश्रवा जातः सोमदत्तसुतो बली ॥ १५ ॥

पूर्वोदधेस्तीरगतेऽब्जसम्भवे गङ्गायुतः पर्वणि घूर्णितोऽब्धिः। अवाक्षिपत्तस्य तनौ निजोदबिन्दुं शशापैनमथाब्जयोनिः ॥ १६ ॥ महाभिषङ्नामनरेश्वरस्त्वं भूत्वा पुनः शन्तनुनामधेयः। जनिष्यसे विष्णुपदी तथैषा तत्रापि भार्या भवतो भविष्यति ॥ १७ ॥ शान्तो भवेत्येव मयोदितस्त्वं तनुत्वमाप्तोऽसि ततश्च शन्तनुः। इतीरितः सोऽथ नृपो बभूव महाभिषङ्नाम हरेः पदाश्रयः ॥ १८ ॥ स तत्र भुक्त्वा चिरकालमुर्वीं तनुं विहायाप सदो विधातुः। तत्रापि तिष्ठन्सुरवृन्दसन्निधौ ददर्श गङ्गां श्लथिताम्बरां स्वकाम् ॥१९॥ अवाङ्मुखेषु द्युसदस्सु गङ्गां निरीक्षमाणं पुनरात्मसम्भवः। उवाच भूमौ नृपतिर्भवाशु शप्तो यथा त्वं हि पुरा मयैव ॥ २० ॥ इतीरितस्तत्क्षणतः प्रतीपाद्धभूवनाम्ना नृपतिश्च शन्तनुः। अवाप्य गङ्गां दयितां स्वकीयां तया मुमोदाब्दगणान्बहूंश्च ॥२१॥ अथाष्टमो वसुरासीद्द्युनामा वराङ्गिनाऽस्यस्य बभूव भार्या। बभूव तस्याश्च सखी नृपस्य सुबिन्दनाम्नो दयिता सनाम्नी ॥ २२ ॥ तस्या जरामृतिविध्वंसहेतोर्वसिष्ठधेनुं स्वमृतं क्षरन्तीम्। जरापहां नन्दिनिनामधेयां बद्धुं पतिं चोदयामास देवी ॥ ॥ २३ ॥ तया द्युनामा स वसुः प्रचोदितो भ्रातृस्नेहात्सप्तभिरन्वितोऽपरैः। बबन्ध तां गामथ ताञ्छशाप वसिष्ठसंस्थः कमलोद्भवः प्रभुः ॥ ॥ २४ ॥ अधर्मवृत्ताः प्रतियात मानुषीं योनिं द्रुतं यत्कृते सर्व एव। धर्मच्युताः स तथाष्टायुराप्यतामन्ये पुनः क्षिप्रमथो विमोक्ष्यथ ॥२५॥ प्रचोदयामास च या कुमार्गे पतिं हि साम्बेति नरेषु जाता। अभर्तृका पुंस्त्वसमाश्रयेण पत्युर्मृतौ कारणत्वं व्रजेत ॥२६॥ भवत्वसौ ब्रह्मचर्यैकनिष्ठो महान्विरोधश्च तयोर्भवेत। स गर्भवासाष्टकदुःखमेव समाप्नुतां शरतल्पे शयानः ॥ २७ ॥ मृत्यष्टकोत्थामपि वेदनां स प्राप्नोतु



शस्त्रैर्बहुधा निकृत्तः। इतीरितास्ते कमलोद्भवं तं ज्ञात्वा समुत्सृज्य च गां प्रणेमुः ॥ २८ ॥ न मानुषं गर्भमवाप्नुमो वयं भवत्वयं सर्वविख्कीर्तिमांश्च। महास्त्रवेत्ता भवदंशयुक्तस्तथा बलं नोऽखिलानामुपैतु ॥ ॥ २९ ॥ इतीरितेऽस्त्वित्युदिताः स्वयम्भुवा वसिष्ठसंस्थेन सुरापगां ययुः। ऊचुस्तथैनामुदरे वयं ते जायेमहि क्षिप्रमस्मान्हन त्वम् ॥३०॥ इतीरिता सा वरमाशु वव्रे तेभ्योऽप्यपापत्वमथाप्रियत्वम्। तेषां तथैवात्मन एकमेषां दीर्घायुषं तान्सुषुवेऽथ शन्तनोः ॥३१॥ अविघ्नतस्तान्विनिहन्तुमेव पुरा प्रतीपस्य हि दक्षिणोरुम्। समाश्रिता कामिनीव स्वकामा तत्पुत्रभार्या भवितुं विडम्बात् ॥ ३२ ॥ तेनैव चोक्ता भव मे सुतस्य भार्या यतो दक्षिणोरुस्थितासि। भागो हि दक्षो दुहितुः स्नुषाया भार्याभागो वाम इति प्रसिद्धः ॥ ३३ ॥ उवाच सा तं न तु मां सुतस्ते काऽसीति पृच्छेन्न तु मा निवारयेत्। अयोग्यकर्त्रीमपि कारणं च मत्कर्मणो नैव पृच्छेत्कदाचित् ॥ ३४ ॥ यदा त्रयाणामपि चैकमेष करोति गच्छेयमहं विसृज्य। तदा त्वदीयं सुतमित्युदीरिते तथेति राजाऽप्यवदत्प्रतीपः ॥ ३५ ॥ तथैव पुत्राय च तेन तद्वचो ह्यभूत्कमुक्तं वचनाद्द्युनद्याः। कनीयसे सा ह्यवदत्सुतस्ते नान्यः पतिः शन्तनुरेव मे वृतः ॥ ३६ ॥ ततस्तु सा शन्तनुतोऽष्टपुत्रानवाप्य सप्त न्यहनत्तथाष्टमम्। गन्तुं ततो मतिमाधाय हन्तुमिवोद्योगं सा हि मृषा चकार ॥ ३७ ॥ अवस्थितिर्नातिसुखाय मानुषे यतः सुराणामत एव गन्तुम्। ऐच्छन्न तस्या हि बभूव मानुषो देहो नरोत्थो हि तदास शन्तनोः ॥ ३८ ॥ तां पुत्रनिधनोद्युक्तां न्यवारयत शन्तनुः। काऽसि त्वं हेतुना केन हंसि पुत्रान्नृशंसवत् ॥ ३९ ॥ रूपं सुरवरस्त्रीणां तव तेन न पातकम्। भवेत्कर्म त्वदीयं तन्महत्कारणमत्र हि ॥ ४० ॥ तत्कारणं वद शुभे यदि मच्छ्रोत्रमर्हति। इतीरिताऽवदत्सर्वं प्रययौ च सुरापगा ॥४१॥ न धर्मो देवतानां हि ज्ञातवासश्चिरं नृपु। कारणादेव

हि सुरा नृषु वासं प्रकुर्वते ॥ ४२ ॥ कारणापगमे यान्ति धर्मोऽप्येषां तथाविधः । अदृश्यत्वमसंस्पर्शो ह्यसम्भाषणमेव च ॥ ४३ ॥ सुरैरपि नृजातैस्तु गुह्यधर्मो दिवौकसाम् । अतः सा वरुणं देवं पूर्वभर्तारमप्यमुम् ॥ ४४ ॥ नृजातं शन्तनुं त्यक्त्वा प्रययौ वरुणालयम् । सुतमष्टममादाय भर्तुरेवाभ्यनुज्ञया ॥ वधोद्योगान्निवृत्ता सा ददौ पुत्रं बृहस्पतौ ॥ ४५ ॥ देवव्रतोऽसावनुशासनाय मात्रा दत्तो देवगुरौ शतार्धम् । संवत्सराणामखिलांश्च वेदान्समभ्यसत्तद्वशगान्तरात्मा ॥४६॥ ततश्च मात्रा जगतां गरीयस्यनन्तपारेऽखिलसद्गुणार्णवे । रामे भृगूणामधिपे प्रदत्तः शुश्राव तत्त्वं च शतार्धवर्षम् ॥ ४७ ॥ स पञ्चविंशत्पुनरब्दकानामस्त्राणि चाभ्यस्य पतेर्भृगूणाम् । मात्रा समानीय तटे निजे तु संस्थापितः प्रार्पयितुं स्वपित्रे ॥ ४८ ॥ स तत्र बध्वा शरपञ्जरेण गङ्गां विजह्रेऽस्य पिता तदैव । व्रजन्मृगार्थी तृषितोऽवलोकयन् गङ्गामतोयामभवत्सुविस्मितः ॥४९॥ स मार्गयामास ततोऽस्य हेतुं ज्ञप्त्यै तदा स्वं च ददर्श सूनुम् । क्रीडन्तमस्त्रेण बभूव सोऽपि क्षणाददृश्यः पितृदर्शनादनु ॥ ५० ॥ मीमांसमानं तमवेक्ष्य गङ्गा सुतं समादाय पतिं जगाद । अयं सुतस्ते परमास्त्रवेत्ता समर्पितो वीर्यबलोपपन्नः ॥५१॥ अस्याग्रजाः स्वां स्थितिमेव याता हरेः पदाम्भोजसुपाविते जले । तनूर्मदीये प्रणिधाय तस्मात्तान्मा शुचोऽन्येन च मोदमानः ॥ ५२ ॥ इति प्रदायामुमदृश्यतामगाद्गङ्गा तमादाय ययौ गृहं स्वकम् । राजाभिषिच्याथ च यौवराज्ये मुमोद तत्सद्गुणतर्पितो भृशम् ॥५३॥ पुनः स पित्रानुमतो बृहस्पतेरवाप वेदान्पुरुषायुषोऽर्धतः । रामात्तथास्त्राणि पुनस्त्ववाप तावद्भिरब्दैस्त्रिशतैश्च तत्वम् ॥ ५४ ॥ स सर्ववित्त्वं समवाप्य रामात्समस्तविद्याधिपतेर्गुणार्णवात् । पितुः समीपं समवाप्य तं च शुश्रूषमाणः प्रमुमोद वीरः ॥ ५५ ॥

यदैव गङ्गा सुषुवेऽष्टमं सुतं तदैव यातो मृगयां स शन्तनुः ।



शरद्वतो जातमपश्यदुत्तमं वने विसृष्टं मिथुनं त्वयोनिजम् ॥ ५६ ॥ शरद्वांस्तु तपः कुर्वन्ददर्श सहसोर्वशीम् । चस्कन्द रेतस्तस्याथ शरस्तम्बे ततोऽभवत् ॥ ५७ ॥ विष्कम्भो नाम रुद्राणां भूभारहरणेऽङ्गताम् । हरेः प्राप्तुं तथा तारा भार्या या हि बृहस्पतेः ॥ ५८ ॥ तावुभौ शन्तनुर्दृष्ट्वा कृपाविष्टः स्वकं गृहम् । निनाय नाम चक्रेऽथ कृपाया विपयौ यतः ॥ ५९ ॥ कृपः कृपीति स कृपस्तपो विष्णोश्चचार ह । तस्य प्रीतस्तदा विष्णुः सर्वलोकेश्वरेश्वरः ॥ ६० ॥ प्रादादेष्यत्सप्तकपित्वमायुः कल्पान्तमेव च । स शन्तनुगृहेऽतिष्ठन्देवव्रतसखाऽभवत् ॥ ६१ ॥ पुत्रवच्छन्तनोश्चासीत्स च पुत्रवदेव तत् । मिथुनं पालयामास कृपोऽप्यस्त्राण्यवाप च ॥ ६२ ॥ सर्ववेदानधिजगौ सर्वशास्त्राणि कौशिकात् । तत्त्वज्ञानं तथा व्यासादाप्य सर्वज्ञतां गतः ॥ ॥ ६३ ॥ यदाभिजातः स कृपस्तदैव बृहस्पतेः सूनुरगाच्च गङ्गाम् । आर्तुं घृताचीं स ददर्श तत्र श्लथदुकूलां सुरवर्यकामिनीम् ॥ ६४ ॥ तद्दर्शनात्स्कन्नमथेन्द्रियं स द्रोणे दधाराशु ततोऽभवत्स्वयम् । अम्भोजनाभेशयुतो बृहस्पतिः कर्तुं हरेः कर्म भुवो भरोद्धृतौ ॥६५॥ द्रोणेति नामास्य चकार तातो मुनिर्भरद्वाज उतास्य वेदान् । अध्यापयामास स शास्त्रसङ्घान्सर्वज्ञतामाप च सोऽचिरेण ॥ ६६ ॥ काले च तस्मिन्नृपतोऽनपत्यो वने तु पाञ्चालपतिश्चचार । तपो महत्तस्य तथाऽप्सरोऽवलोकनात्स्कन्दितमाशु रेतः ॥ ६७ ॥ स तद्विलज्जावशतः पदेन समाक्रमत्तस्य बभूव सूनुः । हूहू तु नाम्ना स विरिञ्चगायको नाम्नाऽऽवहो यो मरुतां तदंशयुक् ॥ ६८ ॥ स द्रोणतातात्समवाप वेदानस्त्राणि विद्याश्च तथा समस्ताः । द्रोणेन युक्तः स तदा गुरोः सुतं सहैव नौ राज्यमिति ह्यवादीत् ॥ ६९ ॥ पदे द्रुतत्वाद्द्रुपदाभिधेयः स राज्यमापाथ निजां कृपीं सः । द्रोणोऽपि भार्यां समवाप्य सर्वप्रतिमहौजसश्च पुरेऽवसत्सुखी ॥ ७० ॥ शिलोञ्छवृत्त्यैव हि वर्तयन्स धर्मं

महान्तं विरजं जुषाणः । उवास नागाख्यपुरे सखाऽस देवव्रतस्या
कृपस्य चैव ॥ ७१ ॥ तेषां सभानो वयसा विराटस्त्वभूद्धहाना
विधातृगायकः । मरुत्सु यो विवहो नाम तस्याप्यंशेन युक्तो
निजधर्मवर्ती ॥ ७२ ॥ ततः कदाचिन्मृगयां गतः स ददर्श कन्या
प्रवरां तु शन्तनुः । या पूर्वसर्गे पितृपुत्रिका सती चचार विष्णोस्त
उत्तमं चिरम् ॥ ७३ ॥ यस्यै वरं विष्णुरदात्पुराऽहं सुतस्तव स्यामिति
या वसोः सुता । जाता पुनर्दाशगृहे विवर्धिता व्यासात्मना विष्णुरभू
यस्याम् ॥ ७४ ॥ तद्दर्शनान्नृपतिर्जातहृच्छयो वव्रे प्रदानाय च
दाशराजम् । ऋते स तस्यास्तनयस्य राज्यं नैच्छद्दातुं तामथायाद्गृ
स्वम् ॥७५॥ तच्चिन्तया म्लानमुखं जनित्रं दृष्ट्वैव देवव्रत आशुपृच्छत् ।
तत्कारणं सारथिमस्य तस्माच्छ्रुत्वाऽखिलं दाशगृहं जगाम ॥ ७६ ॥
स तस्य विश्वासकृते प्रतिज्ञां चकार नाहं करवाणि राज्यम् । तथैव मे
सन्तातितो भयं ते व्येतूर्ध्वरेताः सततं भवानि ॥७७॥ भीमव्रतत्वाद्धि
तदास्य नाम कृत्वा देवा भीष्म इति ह्यचीक्लृपन् । प्रसूनवृष्टिं स च
दाशदत्तां कालीं समादाय पितुः समार्पयत् ॥ ७८ ॥ ज्ञात्वा तु तां
राजपुत्रीं गुणाढ्यां सत्यस्य विष्णोर्मातरं नामतस्तत् । लोके प्रसिद्धां
सत्यवतीत्युदारां विवाहयामास पितुः स भीष्मः ॥ ७९ ॥ प्रायः सतां
न मनः पापमार्गे गच्छेदिति ह्यात्ममनश्च सक्तम् । ज्ञात्वापि तां
दाशगृहे विवर्धितां जग्राह सद्धर्मरतश्च शन्तनुः ॥ ८० ॥ स्वच्छन्द-
मृत्युत्ववरं प्रदाय तथाप्यजेयत्वमधृष्यतां च । युद्धेषु भीष्मस्य नृपोत्तमः
स रेमे तथैवाब्दगणान्बहूंश्च ॥८१॥ लेभे स चित्राङ्गदमत्र पुत्रं तथा
द्वितीयं च विचित्रवीर्यम् । तयोश्च बाल्ये व्यसृजच्छरीरं जीर्णेन देहेन
च किं ममेति ॥८२॥ स्वेच्छया वरुणत्वं स प्राप नानिच्छया तनुः ।
तस्मिन्काले त्यज्यते हि बलवद्भिर्वधं विना ॥८३॥ अतिसक्तास्तपोहीनाः
कथञ्चिन्मृतिमाप्नुयुः । अनिच्छयापि हि यथा मृतश्चित्राङ्गदानुजः ॥८४॥



अथौर्ध्वदैहिकं कृत्वा पितुर्भीष्मोऽभ्यषेचयत् । राज्ये चित्राङ्गदं
... यौवराज्येऽस्य चानुजम् ॥ ८५ ॥ चित्राङ्गदेन निहतो नाम स्वं
...परित्यजन् । चित्राङ्गदोऽकृतोद्वाहो गन्धर्वेण महारणे ॥ ८६ ॥
विचित्रवीर्यं राजानं कृत्वा भीष्मोन्वपालयत् । अथ काशिसुतास्तिस्र-
...दर्थे भीष्म आहरत् । अम्बामप्यम्बिकानाम्नीं तथैवाम्बालिकां पराम् ॥
॥ ८७ ॥ पाणिग्रहणकाले तु ब्रह्मदत्तस्य वीर्यवान् । विजित्य तं
...राजं समेतान्क्षत्रियानपि ॥ ८८ ॥ अम्बिकाम्बालिके तत्र संवादं
...तुः शुभे । अम्बा सा भीष्मभार्यैव पूर्वदेहे तु नैच्छत ॥ ८९ ॥
...पाद्धिरण्यगर्भस्य साल्वकामाहमित्यपि । उवाच तां स तत्याज
...ऽगमत्साल्वमेव च ॥ ९० ॥ तेनापि सम्परित्यक्ता परामृष्टेति सा
...नः । भीष्ममाप स नोऽगृह्णात्प्रययौ सापि भार्गवम् ॥ ९१ ॥ भ्रातु-
विवाहयामास सोऽम्बिकाम्बालिके ततः । भीष्माय तु यशो दातुं युयुधे
...न भार्गवः ॥ ९२ ॥ अनन्तशक्तिरपि सन्न भीष्मं निजघान ह ।
... चाम्बां ग्राहयामास भीष्मकारुण्ययन्त्रितः ॥ ९३ ॥ अनन्तशक्तिः
...लान्तरात्मा यः सर्ववित्सर्ववशी च सर्वजित् । न यत्समोऽन्योऽस्ति
...र्थ च कुत्रचित्कथं ह्यशक्तिः परमस्य तस्य ॥ ९४ ॥ भीष्मं स्वभक्तं
...साभिपूरयन्विमोहयन्नसुरांश्चैव रामः । जित्वैव भीष्मं न जघान
...यो वाचं च सत्यामकरोत्स तस्य ॥ ९५ ॥ 'विद्धवन्मुग्धवच्चैव केशवो
...नार्तवत् । दर्शयन्नपि मोहाय नैव विष्णुस्तथा भवेत्' ॥ ९६ ॥
...मादिपुराणोत्थवाक्याद्रामः सदा जयी । यशो भीष्मस्य दत्वा तु
...म्बां च शरणागताम् ॥ ९७ ॥ उन्मुच्य भर्तृद्वेषोत्थपापात्तेनाश्व-
...जयत् । अनन्तरं शिखण्डित्वात्तदा सा शाङ्करं तपः ॥ ९८ ॥
भीष्मस्य निधनार्थाय पुंस्त्वार्थं च चकार ह । भीष्मो यथा त्वां
...ह्णीयात्तथा कुर्यामितीरितम् ॥ रामेण सत्यं तच्चक्रे भीष्मे देहान्तरं
...ते ॥ ९९ ॥ रुद्रस्तु तस्यास्तपसा तुष्टः प्रादाद्वरं तदा । भीष्मस्य

पराभवाय ते तथा । समिच्छतोऽच्युत क्रतुं भवन्तमूचतुश्च तौ ॥२३२॥
समुद्रसंश्रयो भवान्बहून्प्रगृह्य लावणान् । सुभारकानुपैहि नाविति क्षमस्व
मे वचः ॥ २३३ ॥ उदीर्य तं ननाम स प्र चाहसन्स्म यादवाः ।
हरिस्तु सात्यकिं वचो जगाद मेघनिःस्वनः ॥२३४॥ प्रयाहि सात्यके
वचो ब्रवीहि मे नृपाधमौ । समेत्य वां वरायुधैः करं ददाम्यसंशयम् ॥
॥ २३५ ॥ उपैत माशु संयुगार्थिनौ च पुष्करं प्रति । इतीरितः
शिनेः सुतो जगाम विप्रसंयुतः ॥ २३६ ॥ उपेत्य तौ हरेर्वचो जगाद
सात्यकिर्बली । विधाय तौ तृणोपमौ गिरा जगाम केशवम् ॥२३७॥
ततः पुरैव तावुभौ द्विजं हरस्वरूपिणम् । सुदुःखवासनामकं प्रचक्रतु-
स्तृणोपमम् ॥ २३८ ॥ दशत्रिकैः शतैर्वृतो यतीश्वरैः स सर्ववित् ।
विपाटितात्मकौपिनादिसर्वमात्रकोऽभवत् ॥ २३९ ॥ वरात्स्वसम्भवा-
दसौ न शापशक्तिमानभूत् । ततः समस्तभञ्जनोरुशक्तिमाप केशवम् ॥
॥ २४० ॥ स तान्समर्च्य माधवः प्रदाय चोरुमात्रकाः । ययौ च तैः
समन्वितो वधाय साल्वपुत्रयोः ॥ २४१ ॥ तमत्रिजं हरात्मकं यतो
हि वेद मागधः । ततोऽत्यजत्स्वशिष्यकौ निशम्य तत्प्रतीपकौ ॥२४२॥
हरौ तु पुष्करं गते मुनीश्वरैः समन्विते । समीयतुश्च तावुभावथात्र
हंसडीभिकौ ॥ २४३ ॥ स ब्रह्मदत्तनामकोऽत्र तत्पिताऽप्युपाययौ ।
समागतौ च भूतकौ शिवस्य यौ पुरःसरौ ॥२४४॥ विचक्रनामकोऽ-
सुरः पुरा विरिञ्चितो वरम् । अवध्यतामजेयतामवाप्य बाधतेऽसुरान् ॥
॥ २४५ ॥ स चाभवत्तयोः सखा सहायकाम्ययाऽगमत् । हिडिम्ब-
राक्षसोऽपि यः पुराऽऽप शङ्कराद्वरम् ॥ २४६ ॥ न जीयसे न वध्यसे
कुतश्चनेति तोषितात् । स चैतयोः सखाऽभवत्समाजगाम तत्र च ॥
॥ २४७ ॥ अक्षौहिणीदशात्मकं बलं तयोर्बभूव ह । विचक्रगं
षडात्मकं तथैकमेव राक्षसम् ॥ २४८ ॥ द्विरष्टसेनया युतौ सहैकयैव
तौ नृपौ । समीयतुर्युधे हरिं हरिश्च तौ ससार ह ॥ २४९ ॥ अथ



द्वयोर्द्वयोरभूद्रणो भयानको महान् । हरिर्विचक्रमेयिवान्बलश्च हंस-
मुद्धतम् ॥ २५० ॥ तदास्य चानुजं ययौ शिनिप्रवीर आयुधी ।
गदश्च नामतोऽनुजो हरेः स रोहिणीसुतः ॥ २५१ ॥ पुरा स
चण्डको गणो हरेर्निवेदिताशनः । समाह्वयद्रणाय वै तयोः स तातमेव
हि ॥२५२॥ अक्षौहिणीत्रयान्विताः समस्तयादवास्तदा । त्रिलोचनानुगौ
च तौ न्यवारयन्स राक्षसौ ॥ २५३ ॥ हरिर्विचक्रमोजसा महास्त्रशस्त्र-
वर्षिणम् । विवाहनं निरायुधं क्षणाच्चकार सायकैः ॥ २५४ ॥ पुनश्च
पादपान्गिरीन्प्रमुञ्चतोऽरिणारिहा । शिरो जहार देवता विनेदुरत्र
हर्षिताः ॥ २५५ ॥ प्रसूनवर्षिभिः स्तुतश्चतुर्मुखादिभिः प्रभुः । ससार
तौ हरानुगौ प्रभक्षकौ स सात्वताम् ॥ २५६ ॥ समस्तयादवान्रणे
विधूय तौ जनार्दनम् । उपेत्य चांसगौ हरेरदंशतां सुकर्णकौ ॥२५७॥
स तौ भुजप्रवेगतो विधूय शङ्करालये । न्यपातयद्बलार्णवोऽमितस्य किं
तदुच्यते ॥ २५८ ॥ प्रभक्षयन्तमोजसा हिडिम्बमुद्धतं बलम् ।
सहोग्रसेनको ययौ पिता हरेः शरान्क्षिपन् ॥ २५९ ॥ तयो रथौ
सहायुधौ प्रभक्ष्य राक्षसो बली । प्रगृह्य तावभाषत प्रयातमाशु मे
मुखम् ॥ २६० ॥ तदा गदावरायुधः सहैव हंसभूभृता । प्रयुध्यमान
आययौ विहाय तं हलायुधः ॥ २६१ ॥ तमागतं समीक्ष्य तौ विहाय
राक्षसाधिपः । उपेत्य मुष्टिनाऽहनद्बलं स वक्षसि क्रुधा ॥ २६२ ॥
उभौ हि बाहुशालिनावयुध्यतां च मुष्टिभिः । चिरं प्रयुध्य तं बलोऽ-
ग्रहीत्स जङ्घयोर्विभुः ॥२६३॥ अथैनमुद्धतं बलाद्बलः स दूर आक्षिपत् ।
पपात पादयोजने स नाजगाम तं पुनः ॥ २६४ ॥ विहाय सैनिकांश्च
तौ नृपौ ययौ वनाय सः । निहत्य तस्य राक्षसान्हलायुधो ननाद ह ॥
॥ २६५ ॥ गदस्तु साल्वभूभृता वयोगतेन योधयन् । विवाहनं
निरायुधं चकार सोऽप्यपाद्रवत् ॥ २६६ ॥ सुतेन तस्य कन्यसा
युयोध सात्यकी रथी । वरास्त्रशस्त्रयोधिनौ विजह्नतुश्च तावुभौ ॥२६७॥

चिरं प्रयुध्य सात्यकिः स हंसकन्यसा बली । शतं सपश्वकं रणे चकर्त
तस्य धन्विनाम् ॥२६८॥ स खड्गचर्मभृद्रणेऽभ्ययात्सुतात्मजं शिनेः ।
स चैनमभ्ययात्तथा वरासिचर्मभृद्विभीः ॥ २६९ ॥ द्विपोडशप्रभेदकं
वरासियुद्धमश्रमौ । प्रदर्श्य निर्विशेषकावुभौ व्यवस्थितौ चिरम् ॥२७०॥
परस्परान्तरेषिणौ न चान्तरं व्यपश्यताम् । ततो विहाय सङ्गरं गतौ
निरर्थकं त्विति ॥ २७१ ॥ ततः स हंससंयुतो जगाम योद्धुमच्युतम् ।
क्षणेन तौ निरायुधौ चकार केशवः शरैः ॥ २७२ ॥ हतं च सैन्य-
मेतयोश्चतुर्थभागशेषितम् । क्षणेन केशवेन तद्भयादपेयतुश्च तौ ॥२७३॥
स पुष्करेक्षणस्तदा सुरैर्नुतोऽथ पुष्करे । उवास तां निशां प्रभुः
सयादवोऽमितप्रभः ॥ २७४ ॥ परे दिने जनार्दनो नृपात्मजौ
प्रविद्रुतौ । यमस्वसुस्तटे प्रभुः समाससाद पृष्ठतः ॥ २७५ ॥ स
रौहिणेयसंयुतः समन्वितश्च सेनया । स्वशिष्टसेनया वृतौ पलायिना-
ववारयत् ॥२७६॥ निवृत्य तौ स्वसेनया शरोत्तमैर्ववर्षतुः । सुकोपितौ
समस्तशो यदूनवार्यपौरुषौ ॥ २७७ ॥ अथाससाद हंसको हलायुधं
महाधनुः । अनन्तरोऽस्य सात्यकिं गदं च सर्वसैनिकान् ॥ २७८ ॥
स सात्यकिं निरायुधं विवाहनं विवर्मकम् । व्यधाद्गदं च तौ रणं
विहाय हापजग्मतुः ॥ २७९ ॥ विधूय सैनिकांश्च स प्रगृह्य चाप-
माततम् । हरिं जगाम चोन्नदन्महास्त्रशस्त्रवर्षणः ॥ २८० ॥ तमाशु
केशवोऽरिहा समस्तसाधनोज्झितम् । क्षणाच्चकार सोऽप्यगाद्विसृज्य तं
हलायुधम् ॥ २८१ ॥ हलायुधो निरायुधं विधाय हंसमोजसा ।
विकृष्टचापमागतं ददर्श तस्य चानुजम् ॥ २८२ ॥ स हंस आशु
कार्मुकं पुनः प्रगृह्य तं बलम् । यदाऽऽससाद केशवो न्यवारयत्तमोजसा ॥
॥ २८३ ॥ शिनेः सुतात्मजोऽप्यसौ विहाय हंसकानुजम् । रथान्तरं
समास्थितो जगाम तातमस्य च ॥२८४॥ वयोगतः पिता तयोर्युयोध
तेन वृष्णिना । शरं च कण्ठकूबरे व्यसर्जयत्स सात्यकेः ॥ २८५ ॥



स सात्यकिर्दृढाहतो जगाम मोहमाशु च । सुलब्धसंज्ञ उत्थितः समा-
ददेऽर्धचन्द्रकम् ॥ २८६ ॥ स तेन तच्छिरो बली चकर्त शुक्र-
मूर्धजम् । यदम्बयाभिकामितं पुरा पपात तत्क्षितौ ॥ २८७ ॥ नदंश्च
सात्यकिर्हरेर्जगाम पार्श्वमुद्धतः । बलोऽपि हंसकानुजं युयोध सेनया
युतम् ॥ २८८ ॥ हरिस्तु हंसमुल्बणैः शरैः समर्दयन्बलम् । जघान
तस्य सर्वशो न कश्चिदत्र शेषितः ॥ २८९ ॥ स एक एव केशवं
महास्त्रमुक्ससार ह । निवार्य तानि सर्वशो हरिर्निजास्त्रमाददे ॥२९०॥
स वैष्णवास्त्रमुद्यतं निरीक्ष्य यानतो महीम् । गतः पराद्रवद्भयात्पपात
यामुनोदके ॥ २९१ ॥ वरास्त्रपाणिरीश्वरः पदाऽहनच्छिरस्यमुम् । स
मूर्च्छितो मुखेऽपतन्महाभुजङ्गमस्य हि ॥ २९२ ॥ स धार्तराष्ट्रकोदरे
यथा तमोऽन्धमेयिवान् । तथा सुदुःखसंयुतो वसन्मनोः परं म्रियेत् ॥
॥ २९३ ॥ ततोऽन्धमेव तत्तमो हरेर्द्विडेति निश्चयात् । तदाऽस्य
चानुजोऽग्रजं विमार्गयञ्जलेऽपतत् ॥ २९४ ॥ विहाय रोहिणीसुतं
जले निमज्य मार्गयन् । अपश्यमान आत्मनो व्यपाटयच्च काकुदम् ॥
॥ २९५ ॥ विहाय देहमुल्बणं तमोऽवतीर्य चाग्रजम् । प्रतीक्षमाण
उल्बणं समत्ति तत्सुखेतरम् ॥ २९६ ॥

ततो हरिर्बलैर्युतो बलान्वितो मुनीश्वरैः । समं कुशस्थलीं ययौ
स्तुतः कशङ्करादिभिः ॥२९७॥ स्वकीयपादपल्लवाश्रयं जनं प्रहर्षयन् ।
उवास नित्यसत्सुखार्णवो रमापतिर्गृहे ॥ २९८ ॥ (२१३७) ॥ इति
श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये
श्रीकृष्णचरिते कृष्णविजयो नाम सप्तदशोऽध्यायः ॥ १७ ॥

---

## अथ अष्टादशोऽध्यायः

॥ ॐ ॥ यदा रामादवाप्तानि दिव्यास्त्राणि प्रपेदिरे । द्रोणा-
त्कुमारास्तेष्वासीत्सर्वेष्वप्यधिकोऽर्जुनः ॥ १ ॥ निजप्रतिभया जान-

न्सर्वास्त्राणि ततोऽधिकम् । नास्त्रयुद्धं कचिद्भीमो मन्यते धर्ममञ्जसा ॥
॥ २ ॥ न हि भागवतो धर्मो देवताभ्युपयाचनम् । ज्ञानभक्ती
हरेस्तृप्तिं विना विष्णोरपि कचित् ॥ ३ ॥ नाकाङ्क्षयं किमुतान्येभ्यो
ह्यस्त्रं काम्यफलप्रदम् । शुद्धे भागवते धर्मे निरतो यवृकोदरः ॥ ४ ॥
न काम्यकर्मकृत्तस्मान्नायाचद्देवमानुषान् । हरिश्च नाथितस्तेन कदाचि-
त्काम्यलिप्सया ॥ ५ ॥ भिक्षामटंश्च हुङ्कारात्करवद्वैश्यतोऽग्रहीत् ।
नान्यदेवा नतास्तेन वासुदेवान्न पूजिताः ॥ ६ ॥ न प्रतीपं हरेः कापि
स करोति कथञ्चन । अनुपस्कारिणो युद्धे नाभियाति ह्युपस्करी ॥७॥
नापयाति युधः कापि न कचिच्छद्म वा(चा)चरेत् । न चौर्ध्वदैहिकानुज्ञा-
मवैष्णवकृतेऽकरोत् ॥८॥ न करोति स्वयं नैषां प्रियमप्याचरेत्कचित् ।
सख्यं नावैष्णवैश्चक्रे प्रतीपं वैष्णवे न तु (च) ॥९॥ परोक्षेऽपि हरेर्निन्दां
कृतो जिह्वां छिनत्ति च । प्रतीपकारिणो हन्ति विष्णोर्वितानजीघनत् ॥
॥१०॥ न संशयं कदाप्येष धर्मे ज्ञानेऽपि वा(चा)ऽकरोत् । विद्योपजीवनं
नैव चकारापद्यपि कचित् ॥ ११ ॥ अतो न धर्मनहुषौ प्रत्युवाच
कथञ्चन । आज्ञयैव हरेर्द्रौणेरस्त्राण्यस्त्रैरशाम(त)यत् ॥१२॥ अदृश्योऽ-
लम्बुसो भग्नो नान्यत्र तु कथञ्चन । न ह्यस्त्रयुद्धे सदृशो द्रौणे-
रस्त्यर्जुनादृते ॥ १३ ॥ सर्ववित्त्वं ततो भीमे प्रदर्शयितुमीश्वरः ।
अदादाज्ञामस्त्रयुद्धे तथैवालम्बुसं प्रति ॥ १४ ॥ प्रत्यक्षीभूतदेवेषु
बन्धुज्येष्ठेषु वा नतिम् । मर्यादास्थितयेऽशासद्भगवान्पुरुषोत्तमः ॥१५॥
तत्रापि विष्णुमेवासौ नमेन्नान्यं कथञ्चन । आज्ञयैवास्त्रदेवांश्च प्रेरयामास
नार्थनात् ॥ १६ ॥

अन्वेनमेव तद्धर्मे कृष्णैका संस्थिता सदा । धृतराष्ट्रादपि वरं
ततो नात्मार्थमग्रहीत् ॥१७॥ नाशपद्धार्तराष्ट्रांश्च महापद्यपि सा ततः ।
न वाचा मनसा वापि प्रतीपं केशवेऽचरत् ॥ १८ ॥

अन्ये भागवतत्वेऽपि छिन्नधर्माः कचित्कचित् । स्यमन्तकार्थे



रामोऽपि कृष्णस्य विमनाऽभवत् ॥१९॥ अवमेनेऽर्जुनः कृष्णं विप्रस्य
शिशुरक्षणे । प्रद्युम्न उद्धवः साम्बोऽनिरुद्धाद्याश्च सर्वशः ॥ २० ॥
हरेरिष्टं सुभद्रायाः फल्गुने दानमञ्जसा । ज्ञात्वाऽपि रुरुधुः सम्य-
क्सात्यकिः कृष्णसंमितम् ॥ २१ ॥ कदाचिन्मन्यतेऽपार्थं धर्मजोऽपि
नरं हरिम् । मत्वा बिभेज्जरासन्धवधे कृष्णमुदीरितुम् ॥ २२ ॥
बन्धनं शङ्कमानो हि कृष्णस्य विदुरोऽपि तु । कौरवेयसभामध्ये
नावतारमरोचयत् ॥ २३ ॥ नकुलः करदानाय प्रेषयामास केशवे ।
अवमेने हरेर्बुद्धिं सहदेवः कुलक्षयात् ॥२४॥ देवकीवसुदेवाद्या मेनिरे
मानुषं हरिम् । भीष्मस्तु भार्गवं राममवमेने युयोध च ॥ २५ ॥
द्रोणकर्णद्रौणिकृपाः कृष्णाभावे मनो दधुः । देवाः शिवाद्या अपि तु
विरोधं चक्रिरे कचित् ॥२६॥ ऋषिमानुषगन्धर्वा वक्तव्याः किमतः
परे । जन्मजन्मान्तराज्ञानादवजानन्ति यत्सदा ॥ २७ ॥
तस्मादेको वायुरेव धर्मे भागवते स्थितः । लक्ष्मीः सरस्वती
चेति परशुक्लत्रयं स्मृतम् ॥ २८ ॥ सर्वमेतच्च कथितं तत्र तत्रामि-
तात्मना । व्यासेनैव पुराणेषु भारते च स्वसंविदा ॥ २९ ॥
यदा ते सर्वशस्त्रास्त्रवेदिनो राजपुत्रकाः । बभूवू रङ्गमध्ये
तान्भारद्वाजो व्यदर्शयत् ॥३०॥ रक्तचन्दनसत्पुष्पवस्त्रशस्त्रगुडोदनैः ।
संपूज्य भार्गवं राममनुजज्ञे कुमारकान् ॥ ३१ ॥ ते भीष्मद्रोणविदुर-
गान्धारीधृतराष्ट्रकान् । स राजमण्डलान्नत्वा कुन्तीं चादर्शयच्छ्रमम् ॥
॥ ३२ ॥ सर्वैः प्रदर्शितेऽस्त्रे तु द्रोणादात्तमहास्त्रवित् । द्रौणिरस्त्राण्य-
मेयानि दर्शयामास चाधिकम् ॥ ३३ ॥ ततोऽप्यतितरां पार्थो
दिव्यास्त्राणि व्यदर्शयत् । अविध्यन्माशके पादे पक्षिणः पक्ष्म एव
च ॥ ३४ ॥ एवमादीनि चित्राणि बहून्येष व्यदर्शयत् । तदैव कर्ण
आगत्य रामोपात्तास्त्रसम्पदम् ॥३५॥ दर्शयन्नधिकः पार्थादभूद्राजन्य-
संसदि । कुन्ती निजसुतं ज्ञात्वा लज्जया नावदच्च तम् ॥ ३६ ॥

पार्थोऽसहंस्तं युद्धायैवाह्वयामास संसदि । रणायाक्षत्रियाह्वानं जानन्धर्म-
प्रतीपकम् ॥ ३७ ॥ भीमो निवार्य बीभत्सुं कर्णायादात्प्रतोदकम् ।
अक्षत्रसंस्कारयुतो जातोऽपि क्षत्रिये कुले ॥ ३८ ॥ न क्षत्रियो हि
भवति यथा व्रात्यो द्विजोत्तमः । निरुत्तरे कृते कर्णे भीमेनैव
सुयोधनः ॥ ३९ ॥ अभ्यषेचयदङ्गेषु राजानं पित्रनुज्ञया । धृतराष्ट्रः
पक्षपातात्पुत्रस्यानुवशोऽभवत् ॥ ४० ॥ अभिषिक्ते तदा कर्णे प्राया-
दधिरथः पिता । सर्वराजसदोमध्ये ववन्दे तं वृषा तदा ॥ ४१ ॥
तुतुषुः कर्मणा तस्य सन्तः सर्वे समागताः । भीमदुर्योधनौ तत्र शिक्षा-
सन्दर्शनच्छलात् ॥ ४२ ॥ समादाय गदे गुर्वी संरम्भादभ्युदीयतुः ।
देवासुरमनुष्यादि जगदेतच्चराचरम् ॥ ४३ ॥ सर्वं तदा द्विधाभूतं
भीमदुर्योधनाश्रयात् । देवा देवानुकूलाश्च भीममेव समाश्रिताः ॥४४॥
असुरा आसुराश्चैव दुर्योधनसमाश्रयाः । द्विधाभूता मनुष्याश्च देवासुर-
विभेदतः ॥ ४५ ॥ जय भीम महाबाहो जय दुर्योधनेति च ।
हुङ्कारांश्चैव फट्कारांश्चक्रुर्देवासुरा अपि ॥ ४६ ॥ दृष्ट्वा जगत्सुसंरब्धं
द्रोणोऽथ द्विजसत्तमः । नेदं जगद्विनश्येत भीमदुर्योधनाश्रयात् ॥४७॥
इति पुत्रेण तौ वीरौ न्यवारयदरिन्दमौ । स्वकीयायां स्वकीयायां
योग्यतायां न तु क्वचित् ॥ ४८ ॥ युवयोः सम इत्युक्त्वा द्रौणिरेतौ
न्यवारयत् । द्रोणाज्ञया वारितौ तौ ययतुः स्वं स्वमालयम् ॥ ४९ ॥
सुरासुरान्सुसंरब्धान्कालेन द्रक्ष्यथेऽति च । ब्रह्मा निवार्य ससुरो ययौ
सेशः स्वमालयम् ॥ ५० ॥ कर्णं हस्ते प्रगृह्यैव धार्तराष्ट्रो गृहं ययौ ।
पार्थं हस्ते प्रगृह्यैव भीमः प्रायात्स्वमालयम् ॥ ५१ ॥ पार्थेन कर्णो
हन्तव्य इत्यासीद्भीमनिश्चयः । वैपरीत्येन तस्यासीद्दुर्योधनविनिश्चयः॥
॥५२॥ तदर्थं नीतिमतुलां चक्रतुस्तावुभावपि । तथोत्कर्षे फल्गुनस्य
यशसो विजयस्य च ॥ ५३ ॥ उद्योग आसीद्भीमस्य धार्तराष्ट्रस्य
चान्यथा । भीमार्थं केशवोऽन्ये च देवाः फल्गुनपक्षिणः ॥ ५४ ॥



आसन्यथैव रामाद्याः सङ्ग्रहेण हनूमतः । सुराः सुग्रीवपक्षस्थाः पूर्वमासं-
स्तथैव हि ॥ ५५ ॥ तदर्थमेव भीमस्य ह्यनुजत्वं सुरेश्वरः । आप
पूर्वानुतापेन तेन भीमस्तथाऽकरोत् ॥५६॥ दुर्योधनार्थं कर्णस्य पक्षिणो
दैत्यदानवाः । आसुः सर्वे स्पृहावेतावासतुः कर्णफल्गुनौ ॥ ५७ ॥
अथ पृष्टो दक्षिणार्थं द्रोण आह कुमारकान् । बध्वा पाञ्चाल-
राजानं दत्तेत्यूचुस्तथेति ते ॥ ५८ ॥ ते धार्तराष्ट्राः कर्णेन सहिताः
पाण्डवा अपि । ययुर्द्रोणेन सहिताः पाञ्चालनगरं प्रति ॥ ५९ ॥
अथाह भीमः सामर्थ्यविवेकाभीप्सया गुरुम् । गर्व एष कुमाराणा-
मनिवार्यो द्विजोत्तम ॥ ६० ॥ गच्छन्त्वेतेऽग्रतो नैषां वशगो द्रुपदो
भवेत् । निवृत्तेष्वकृतार्थेषु वयं बध्वा रिपुं तव ॥ ६१ ॥ आनयामो
न सन्देह इति तस्थौ ससोदरः । सद्रोणकेषु पार्थेषु स्थितेष्वन्ये
समुतजाः ॥ ६२ ॥ ययुरात्तप्रहरणाः पाञ्चालान्तःपुरं द्रुतम् । कुमारा-
न्ग्रहणेप्सूंस्तानुपयातानुदीक्ष्य सः ॥६३॥ अक्षौहिणीत्रितययुङ्क्षिःसृतो
द्रुपदो गृहात् । ते शरैरभिवर्षन्तः परिवार्य कुमारकान् ॥ ६४ ॥
अर्दयामासुरुद्वृत्तांस्त्रियो बालाश्च सर्वशः । हर्म्यसंस्थाः स्त्रियो बाला
ग्ला(ग्रा)वभिर्मुसलैरपि ॥६५॥ अत्यर्थमर्दयामासुः कुमारान्सुसुखैधितान् ।
द्रुपदस्य वरो ह्यस्ति सूर्यदत्तस्तपोबलात् ॥ ६६ ॥ आयोजनात्पुरमुप
न त्वां जेष्यति कश्चन । इति तेन वरेणैव सुखसंवर्धिताश्च ते ॥६७॥
भग्नाः कुमारा आवृत्य दुद्रुवुर्यत्र पाण्डवाः । स्त्रीबालवृद्धसहितैः पाञ्चालै-
रप्यनुद्रुताः ॥ ६८ ॥ भीमार्जुनेति वाशन्तो ययुर्यत्र स्म पाण्डवाः ।
तान्प्रभग्नान्समालोक्य भीमः प्रहरतां वरः ॥ ६९ ॥ आरुरोह रथं
वीरः पुर आत्तशरासनः । तमन्वयादिन्द्रसूनुर्यमौ तस्यैव चक्रयोः ॥
॥ ७० ॥ युधिष्ठिरस्तु द्रोणेन सह तस्थौ निरीक्षकः । आयान्तमग्रतो
दृष्ट्वा भीममात्तशरासनम् ॥७१॥ दुद्रुवुः सर्वपाञ्चाला विविशुः पुरमेव
च । द्रुपदस्त्वभ्ययाद्भीमं सपुत्रः सह सेनया ॥ ७२ ॥ चक्ररक्षौ तु

तस्यास्तां युधामन्यूत्तमौजसौ। धात्रर्यमावेशयुतौ विश्वावसुपरावसू ।।७३।। सुतौ तस्य महावीर्यौ सत्यजित्पृष्ठतोऽभवत्। स मित्रांशयुतो वीरश्चित्रसेनो महारथः ॥ ७४ ॥ अग्रतस्तु शिखण्ड्यागाद्रथोदारः शरान्क्षिपत्। जनमेजयस्तमन्वेव पूर्वं चित्ररथो हि यः ॥ ७५ ॥ त्वष्टुरावेशसंयुक्तः स शरानभ्यवर्षत। तावुभौ विरथौ कृत्वा विचापौ च विवर्मकौ ॥ ७६ ॥ भीमो जघान तां सेनां सवाजिरथकुञ्जराम्। अथैनं शरवर्षेण युधामन्यूत्तमौजसौ ॥ ७७ ॥ अभीयतुस्तौ विरथौ चक्रे भीमो निरायुधौ। हस्तप्राप्तं च पाञ्चालं नाग्रहीत्स वृकोदरः ॥ ॥ ७८ ॥ गुर्वर्थमर्जुनस्योर्वी प्रतिज्ञां कर्तुमप्यृताम्। मानभङ्गाय कर्णस्य पार्थमेव न्ययोजयत् ॥ ७९ ॥ स शरान्क्षिपतस्तस्य पाञ्चालस्यार्जुनो द्रुतम्। पुप्लुवे स्यन्दने चापं छित्वा तं चाग्रहीत्क्षणात् ॥८०॥ सिंहो मृगमिवादाय स्वरथं चाभिपेदिवान्। अथ प्रकुपितं सैन्यं फल्गुनं पर्यवारयत् ॥ ८१ ॥ जघान भीमस्तरसा तत्सैन्यं शरवृष्टिभिः। अथ सत्यजिदभ्यागात्पार्थं मुञ्चञ्शरान्बहून् ॥ ८२ ॥ तमर्जुनः क्षणेनैव चक्रे विरथकार्मुकम्। घ्नन्तं भीमं पुनः सैन्यमर्जुनः प्राह मा भवान् ॥ ॥ ८३ ॥ सेनामर्हति राज्ञोऽस्य वीर हन्तुमशेषतः। सम्बन्धयोग्यस्तातस्य सखाऽयं नः सुधार्मिकः ॥८४॥ नेष्याम एनमेवातो गुरोर्वचनगौरवात्। स्नेहपाशं ततश्चक्रे बीभत्सौ द्रुपदोऽधिकम् ॥ ८५ ॥ ततः सेनां विहायैव भीमो बीभत्सुमन्वगात्। मुक्ता कथञ्चिद्भीमास्यात्सा सेना दुद्रुवे भयात् ॥८६॥ द्रुपदं स्थापयामासाथार्जुनो द्रोणसन्निधौ। पप्रच्छैनं तदा द्रोणः सख्यमस्त्युत नेति वा ॥८७॥ अस्तीदानीमिति प्राह द्रुपदोऽङ्गिरसां वरम्। अथाह द्रुपदं द्रोणः सख्यमिच्छेऽक्षयं तव ॥८८॥ न ह्यराज्ञो भवेत्सख्यं तवेतीदं कृतं मया। न विप्रधर्मो यद्युद्धमतस्त्वं न मया धृतः ॥ ८९ ॥ शिष्यैरेतत्कारितं मे तव सख्यमभीप्सता। अतः सख्यार्थमेवाद्य त्वद्राज्यार्धो हृतो मया ॥९०॥



गङ्गाया दक्षिणे कूले त्वं राजैवोत्तरे त्वहम्। न ह्यराजत्व एकस्य सख्यं स्यादावयोः सखे ॥ ९१ ॥ इत्युक्त्वोन्मुच्य तं द्रोणो राज्यार्धं गृह्य चामुतः। ययौ शिष्यैर्नागपुरं न्यवसत्सुखमत्र च ॥ ९२ ॥ ब्राह्मण्यत्यागभीरुः सन्नागृह्णाद्धनुरप्यसौ। धार्तराष्ट्रैस्तु भीमस्य भयात्पादौ प्रणम्य च ॥ ९३ ॥ शरणार्थं याचितत्वात्सुपुत्रो युयुधे परैः। एवं हरीच्छयैवासौ क्षात्रं धर्ममुपेयिवान् ॥ ९४ ॥

द्रुपदस्तु दिवारात्रं तप्यमानः पराभवात्। भीमार्जुनबलं दृष्ट्वा चैच्छत्पाण्डवसंश्रयम् ॥ ९५ ॥ सम्बन्धीत्यर्जुनवचश्चिकीर्षुः सत्यमेव च। मार्दवं चार्जुने दृष्ट्वा सुतामैच्छत्तदर्थतः ॥ ९६ ॥ पुत्रं च द्रोणहन्तारमिच्छन्विप्रवरौ ययौ। याजोपयाजावानीयाथार्वुदेन गवां नृपः ॥ ॥ ९७ ॥ चकारेष्टिं च तद्भार्या द्विजाभ्यामत्र चाहुता। द्रुपदात्सुतलब्ध्यर्थं साऽहङ्काराद्व्यलम्बयत् ॥ ९८ ॥ किमेतयेत्यवज्ञाय तावुभौ विप्रसत्तमौ। अजुहुतां तत्पुत्रार्थं पत्न्या प्राश्यं हविस्तदा ॥ ९९ ॥ हुते हविषि मन्त्राभ्यां वैष्णवाभ्यां तदैव हि। दीप्ताङ्गारनिभो वह्निकुण्डमध्यात्समुत्थितः ॥ १०० ॥ किरीटी कुण्डली दीप्तो हेममाली वरासिमान्। रथेनादित्यवर्णेन नदन्द्रुपदमाद्रवत् ॥ १०१ ॥ धृष्टत्वाद्द्योतनत्वाच्च धृष्टद्युम्न इतीरितः। मुनिभिर्द्रुपदेनापि सर्ववेदार्थतत्त्ववित् ॥ १०२ ॥ अन्वेनं भारती साक्षाद्वेदिमध्यात्समुत्थिता। प्राणो हि भरतो नाम सर्वस्य भरणाच्छ्रुतः ॥ १०३ ॥ तद्भार्या भारती नाम वेदरूपा सरस्वती। शंरूपमाश्रिता वायुं श्रीरित्येव च कीर्तिता ॥ ॥ १०४ ॥ आवेशयुक्ता शच्याश्च श्यामलायास्तथोषसः। ताश्चेन्द्रधर्मनासत्यसंश्रयाच्छ्रिय ईरिताः ॥ १०५ ॥ सा कृष्णा नामतश्चासीदुत्कृष्टत्वाद्धि योषिताम्। कृष्णा सा वर्णतश्चासीदुत्कृष्टानन्दिनी च सा ॥ १०६ ॥ उत्पत्तितश्च सर्वज्ञा सर्वाभरणभूषिता। सम्प्राप्तयौवनैवासीदजरा लोकसुन्दरी ॥१०७॥ उमांशयुक्ता नितरां सर्वलक्षणसंयुता।

ततो वरेण्यं वरदं विष्णुं प्राप्य स वासवः ॥१४३॥ तत्प्रसादान्नरांशेन
युक्तो भूमावजायत। मदवज्ञानिमित्तेन पतिता इति तान्सुरान्॥१४४॥
मारुतादीन्मृषावादीरिति ब्रह्मा शिवं तदा। शशाप मानुषेषु त्वं क्षिप्रं
जातः पराभवम् ॥ शक्रान्नरतनोर्यासि यस्मै त्वं तु मृषा वदः ॥१४५॥
मच्छसानां च देवीनामविचार्य मया यतः। पतियोगवरं प्रादा नावा-
प्स्यसि ततः प्रियाम् ॥ १४६ ॥ मानुषेषु ततः पश्चाद्भारती देह-
निर्गताम्। स्वलोके प्राप्स्यसि स्वार्थे वरोऽयं ते मृषा भवेत् ॥१४७॥
एषा सा द्रौपदी नाम पञ्चदेवीतनुर्भवेत्। मृषावाग्येषु ते प्रोक्ता
मारुताद्यास्तु तेऽखिलाः ॥१४८॥ तासां पतित्वमाप्स्यन्ति भारत्यैव
तु पार्वती। संयुक्ता व्यवहारेषु प्रवर्तेत न चान्यथा ॥१४९॥ एते हि
मारुताद्यास्ते देवकार्यार्थगौरवात्। जाता इति श्रुतिस्तत्र (तस्मात्) नावज्ञा
तेऽत्र कारणम् ॥१५०॥ दीर्घकालं मनुष्येषु ततस्त्वं स्थितिमाप्स्यसि।
इत्युक्त्वा प्रययौ ब्रह्मा सोऽश्वत्थामा शिवोऽभवत् ॥१५१॥ पञ्चदेवी-
तनुस्त्वेषा द्रौपदी नाम चाभवत् ॥ १५२ ॥ वेदेषु सपुराणेषु भारते
चावगम्यते। उक्तोऽर्थः सर्व एवायं तथा पूर्वोदिताश्च ये ॥ १५३ ॥
मुमुदुः सर्वपाञ्चाला जातयोः सुतयोस्तयोः ॥१५४॥ मानुषान्नोप-
भोगेन संसर्गान्मानुषेषु च। मनुष्यपुत्रतायाश्च भावो मानुष एतयोः।
अभून्नातितरामासीत्तदयोनित्वहेतुतः ॥ १५५ ॥ याजोपयाजौ तावेव
दयिता द्रुपदस्य च। मातृस्नेहार्थमनयोर्ययाचे ददतुश्च तौ ॥ १५६ ॥
जातमात्मनि हन्तारं भारद्वाजो निशम्य तम्। यशोऽर्थमस्त्राणि
ददावग्रहीत्सोऽपि लोभतः ॥१५७॥ रामास्त्राणां दुर्लभत्वात्त्रिदशेष्वपि
वीर्यवान्। भीमार्जुनाभ्यां बद्धं तं श्रुत्वा पाञ्चालभूपतिम् ॥ १५८ ॥
प्राहिणोत्कृतवर्माणं पाण्डवानां जनार्दनः। पाण्डवेष्वतुलां प्रीतिं लोके
ख्यापयितुं प्रभुः ॥ १५९ ॥ संमान्य पाण्डवान्सोऽपि शूरानुजसुता-
सुतः। तैर्मानितः कृष्णभक्त्या भ्रातृत्वाच्च हरिं ययौ ॥ १६० ॥



ततः प्रभृति संत्यज्य देवपक्षा जरासुतम्। पाण्डवानाश्रिता
भूपा ज्ञात्वा भैमार्जुनं बलम् ॥ १६१ ॥ विशेषतश्च कृष्णस्य विज्ञाय
स्नेहमेषु हि। पराजिताश्च बहुशो कृष्णेनाचिन्त्यकर्मणा ॥ १६२ ॥
प्रतापादेव ते पूर्वं जरासन्धवशं गताः ॥१६३॥ न स्नेहात्तद्बलं ज्ञात्वा
पार्थानां केशवस्य च। जन्मान्तराभ्यासवशात्स्निग्धाः कृष्णे च
पाण्डुषु ॥ १६४ ॥ जरासन्धभयं त्यक्त्वा तानेव च समाश्रिताः।
अपि तं बहुशः कृष्णविजितं नैव तत्यजुः ॥ असुराः पूर्वसंस्कारा-
त्संस्कारो बलवान्यतः ॥ १६५ ॥ देवा हि कारणादन्यानाश्रयन्तोऽपि
नान्तरम्। स्नेहं त्यजन्ति देवेषु तथाऽन्येष्वपि च स्फुटम् ॥ १६६ ॥
धृतराष्ट्रो बलं ज्ञात्वा (दृष्ट्वा) बहुशो भीमपार्थयोः। देवत्वाच्च स्वभावेन
ज्येष्ठत्वाद्धर्मजस्य च ॥ सुप्रीत एव तं चक्रे यौवराज्येऽभिषेकिणम् ॥
॥ १६७ ॥ भीमार्जुनावथो जित्वा सर्वदिक्षु च भूपतीन्। चक्रतुः
करदान्सर्वान्धृतराष्ट्रस्य दुर्जयौ ॥ १६८ ॥ तयोः प्रीतोऽभवत्सोऽपि
पौरजानपदास्तथा। भीष्मद्रोणमुखाः सर्वेऽप्यतिमानुषकर्मणा ॥१६९॥
॥(२३०६)॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्हा-
भारततात्पर्यनिर्णये भीमार्जुनदिग्विजयो नाम अष्टादशोऽध्यायः ॥१८॥

---

## अथ एकोनविंशोऽध्यायः

॥ ॐ ॥ एवं शुभोच्चगुणवत्सु जनार्दनेन युक्तेषु पाण्डुषु चर-
स्वधिकं शुभानि। नास्तिक्यनीतिमतुलां गुरुदेवतादिसत्स्वज्ञसैव
जगृहुर्धृतराष्ट्रपुत्राः ॥ १ ॥ नाम्ना कलिंगइति चासुरको द्विजोऽभू-
च्छिष्यः सुरेतरगुरोः शकुनेर्गुरुः सः। नीतिं स कुत्सिततमां धृतराष्ट्र-
पुत्रेष्वाधाद्द्रहो वचनतः शकुनेः समस्ताम् ॥ २ ॥ छद्मैव यत्र परमं न

सुराश्च पूज्याः स्वार्थेन वञ्चनकृते जगतोऽखिलं च । धर्मादिकार्यमपि यस्य महोपधिः स्याच्छ्रेष्ठः स एव निखिलासुरदैत्यसङ्घात् ॥ ३ ॥ इत्यादिकुत्सिततमां जगृहुः स्म विद्यामज्ञात एव धृतराष्ट्रमुखैः समस्तैः । तेषां स्वभावबलतो रुचिता च सैव(षा) विस्तारिता च निजबुद्धिबलादतोऽपि ॥ ४ ॥ सम्पूर्णदुर्मतिरथो धृतराष्ट्रसूनुस्तातप्यमानहृदयो निखिलान्यहानि । दृष्ट्वा श्रियं परमिकां विजयं च पार्थेष्वाहेदमेत्य पितरं सह सौबलेन ॥ ५ ॥ ज्येष्ठस्य तेऽपि हि वयं हृदयप्रजाता नार्हत्वमेव गमिता भवतैव राज्ये । भ्रातुः कनीयस उतापि हि दारजाता अन्यैश्च राज्यपदवीं भवतैव नीताः ॥ ६ ॥ राज्यं महच्च समवाप्स्यति धर्मसूनुस्त्वत्तोऽथ चा(वा)नुजबलात्प्रसभं वयं तु । दासा भवेम निजतन्तुभिरेव साकं कुन्तीसुतस्य परतोऽपि तदन्वयस्य ॥७॥ नात्मार्थमस्ति मम दुःखमथातिशुद्धलोकप्रसिद्धयशसस्तव कीर्तिनाशः । अस्मिन्निमित्तमतिदुःखमतो हि सर्वेऽपीच्छाम मर्तुमथ नः कुरु चाप्यनुज्ञाम् ॥ ८ ॥ एवं स्वपुत्रवचनं स निशम्य राजा प्रोवाच नानुगुणमेतदहो मनस्ते । को नाम पाण्डुतनयेषु गुणोत्तमेषु प्रीतिं न याति निजवीर्यभवोच्चयेषु ॥ ॥ ९ ॥ ते हि स्वबाहुबलतोऽखिलभूपभूतिं मय्याकृषन्ति न च वः प्रतिषेधकास्ते । तस्माच्छमं व्रज शुभाय कुलस्य तात क्षेमाय नो भवति वो बलवद्विरोधः ॥ १० ॥ एवं ब्रुवत्यपि नृपे पुनराह पाप आश्रित्य सौबलमतं यदि नैव पार्थान् । अन्यत्र यापयसि नागपुरात्परेतान्दृष्ट्वाखिलानपि हि नो मुदमेहि पार्थैः ॥ ११ ॥ एवं निशम्य गदितं सुतहार्दपाशैराकृष्यताशु स नृपोऽरिधरेच्छयैव । प्रोवाच पुत्रमपि ते बलिनो हि पार्थाः शक्याः पुरात्तु न च (त्तनय) यापयितुं कथञ्चित् ॥ १२ ॥ इत्युक्त आह पितरं शकुनिं निरीक्ष्य सृष्टो मया विधिरिहाद्य शृणुष्व तं च । आसंस्त्रयोदशसमा हि पुरं प्रविष्टेष्वेतेषु तावदयमेव विधिर्मयेष्टः ॥ ॥ १३ ॥ द्रौणेर्हि नास्ति सदृशो बलवान्प्रतापी सोऽयं मया बहुविधैः



परमैरुपायैः । नीतो वशं वशगतोऽस्य च मातुलेन साकं पिता तमनु चैष नदीप्रसूतः ॥१४॥ एवं हि सैनिकगणा अपि दानमानैः प्रायो वशं मम गता अपि चैष कर्णः । अस्त्रे बलेऽप्यधिक एव सुरेन्द्रसूनोर्जेष्ये च मन्त्रबलतस्त्वहमेव भीमम् ॥ १५ ॥ त्रिंशच्छतं परमकाः सुरदुर्लभाश्च दुर्वाससो हि मनवोऽद्य मया गृहीताः । अन्यत्र ते प्रविहिता न हि वीर्यवन्तः स्युर्भीम इत्यहममून्न नियोजयामि ॥ १६ ॥ ते वीर्यदा विजयदा अपि वह्निवारिस्तम्भादिदाः सकलदेवनिकायरोधाः । सृष्ट्याद्यभीप्सितसमस्तकरा अमूभिर्जेष्यामि भीमममुमेकमयातयामैः ॥ ॥१७॥ सौहार्दमेषु यदि चा(वा)तितरां करोषि तत्रापि नैव हि मया क्रियते विरोधः । वत्स्यन्तु वारणवते भवतु स्म राष्ट्रं तेषां तदेव मम नागपुरं त्वदर्थे ॥१८॥ एवं स्वपुत्रपरिपालनतो यशस्ते भूयाद्विनश्यति परप्रसवातिपुष्टौ । जाते बले तव विरोधकृतश्च ते स्युः स्वार्थं हि तावदनुयान्त्यपि केवलं त्वाम् ॥ १९ ॥ क्षत्तैक एव सततं परिपोषकोऽलं तेषां मम द्विडथ मन्त्रबलादमुष्य । पौराश्च जानपदिकाः सततं द्विषन्ति मां तेष्वतीवदृढसौहृदचेतसश्च ॥२०॥ एतेषु दूरगमितेषु निराश्रयत्वान्मामेव दुर्बलतया परितः श्रयन्ते । भीष्मादयश्च न हि तन्निकटे विरोधं र्युर्विनश्यति गतेषु हि सौहृदं तत् ॥ २१ ॥ भेदः कुलस्य भविता कुलनाशहेतुरस्माभिरेषु सहितेषु पुरेव सत्सु । तस्मादुपायबलतः प्रतियाप(त)नीयास्ते वारणावतमितो विहितोऽप्युपायः ॥२२॥ विष्णुर्जयन्त इति शम्भुसहाय आस्ते देवोत्सवश्च सुमहान्भविताऽत्र सुष्ठु । भक्ताश्च ते हि नितरामरिशङ्खपाणौ त्वच्चोदिताः समुपयान्ति तमुत्सवं द्राक् ॥ ॥ २३ ॥ आज्ञाप्य मत्पुरुषतां पुरुषैर्मदीयैर्मध्यस्थवद्बहुगुणा उदिताश्च तत्र । तेषां पुरोऽत्र गमनाभिरुचिश्च जाता द्रष्टुं पुरं बहुगुणं ननु पाण्डवानाम् ॥ २४ ॥

इत्युक्तवत्यथ सुते स तथेत्युवाच प्राप्तेषु पाण्डुतनयेषु तदैव चोचे ।

ज्ञात्वैव तेऽपि नृपतेर्हृदयं समस्तं जग्मुः पितेति पृथया सह नीतिहेतोः ॥ ॥ २५ ॥ भीमस्तदाऽऽह भविताऽत्र हि भैक्षचार इत्येव सम्यगनुविद्य निजं न कर्म । त्याज्यं त्विति प्रतिजगाद निजाग्रजाय यामो वयं न तु गृहात्स हि नः स्वधर्मः ॥२६॥ निष्काल(स)यन्ति यदि नो निजधर्मसंस्थान्योत्स्थामहेऽत्र न हि दस्युवधोऽप्यधर्मः । इत्यूचिवांसममुमाह च धर्मसूनुः कीर्तिर्विनश्यति हि नो गुरुभिर्विरोधे ॥ २७ ॥ इत्युक्तवाक्य(वन्त)ममुमग्रजमन्वगात्स भीमः प्रदर्श्य निजधर्ममथानुवृत्त्यै । दोषो भवेदुभयतो यत एव तेन वाच्यः स्वधर्म उत नः स्थितिरत्र कार्या ॥ ॥ २८ ॥ कीर्त्यर्थमेव निजधर्मपरिग्रहाणे प्राप्तेऽग्रजस्य वचनात्प्रविहातुमेव । भीमस्य दोषमुभयं प्रविहातु(तिहन्तु)मीशो ज्येष्ठं चकार हरिरत्र सुतं वृषस्य ॥२९॥ हन्तव्यतामुपगतेषु सुयोधनादिष्वन्यो वधान्न हि भवेन्निजधर्म एव । पूर्वं वधेन हि समस्तश एव दोषास्तेषां प्रयान्ति विवृतिं च तदर्थतोऽपि ॥ ३० ॥ क्षत्ताथ चाह सुवचोऽन्त्यजभाषयैव धर्मात्मजं विषहुताशभयात्प्रतीताः । आध्वंत्विति स्म स तथेति वचोऽभ्युदीर्य प्रायाच्च वारणवतं पृथयाऽनुजैश्च ॥ ३१ ॥ तान्हन्तुमेव च तदा धृतराष्ट्रसूनुर्लाक्षागृहं सपदि काञ्चनरत्नगूढम् । कृत्वाभ्ययातयदमुत्र हि विष्णुपद्या स्वामात्यमेव च पुरोचननामधेयम् ॥ ३२ ॥ पूर्वं प्रहस्त इति यस्त्वभवत्सुपापः सोऽभ्येत्य पाण्डुतनयानभवच्च मन्त्री । दुर्योधनं प्रतिविहाय भवत्सकाशमायात इत्यवददेषु स कूटवाक्यम् ॥ ३३ ॥ दिव्यं गृहं च भवतां हि मयोपनीतं प्रीत्यैव पापमनुयातुमहं न शक्तः । युष्मासु धर्मधृतिमत्सु सदा निवत्स्य इत्यूचिवांसममुमाहुरहो सुभद्रम् ॥ ॥ ३४ ॥ दृष्ट्वैव जातुषगृहं वसया समेतं तद्गन्धतो वृषसुतः पवमानजातम् । तं चातिपापमवदत्सुमुखैष पापो हन्तुं न इच्छति सदा भव च प्रतीतः ॥३५॥ क्षत्ताथ नीतिबलतोऽखिललोकवृत्तं जानन्स्वचारमुखतः खनकाय चोचे । उक्त्वैव धर्मतनयाय मदीयवाक्यं पूर्वोक्तमाशु कुरु



तत्र बिलं सुदूरम् ॥ ३६ ॥ चक्रे स चैवमथ वर्त्मवृतिच्छलेन द्वारं च तस्य स पिधाय ययौ गृहं स्वम् । भीमः पुरोचन उभावपि तौ वधाय छिद्रार्थिनौ मिथ उतोपतुरब्दकार्धम् ॥ ३७ ॥ तस्याग्रजा च सहिता सुतपञ्चकेन तत्रागमत्तदनु मारुतिरेष कालः । इत्थं विचिन्त्य स निशम्य च तान्प्रसुप्तान्भ्रातॄंश्च मातरमथाशु बिले न्यधात्प्राक् ॥ ३८ ॥ तं भागिनेयसहितं भगिनीं च तस्य पापां ददाह सगृहां पवमानसूनुः । साप्यागता हि गरलेन निहन्तुमेतान्भीमस्य पूर्वभुजिनो न शशाक चैतत् ॥ ३९ ॥ तप्तं तया ससुतया च तपो नितान्तं स्वां सूनुभिः सह बलाददितिस्तथाब्दात् । तस्या उदाच्च गिरिशो यदि पुत्रकैस्त्वं युक्ता न यासि मृतिमेष वरस्तवेति ॥ ४० ॥ जानन्निदं सकलमेव च भीमसेनो हत्वा सुतैः सह कुबुद्धिमिमां हि तं च । भ्रातॄंश्च मातरमुदूह्य ययौ बिलात्स निर्गत्य भीतिवशतोऽबलतां प्रयातान् ॥ ४१ ॥ ज्ञात्वा पुरोचनवधं यदि भीष्ममुख्यैर्वैचित्रवीर्यतनया अभियोधयेयुः । किन्नो भवेदिति भयं सुमहद्विवेश भीमं त्वृते च तनयान्सकलान्पृथायाः ॥ ॥ ४२ ॥ भीमोऽभयोऽपि गुरुभिः स्वमुखेन युद्धमप्रीयमाण उत धर्मजवाक्यहेतोः । ऊढ्वैव तानपि ययौ द्युनदीं च तीर्त्वा क्षत्त्रातिसृष्टमधिरुह्य जलप्रयाणम् ॥ ४३ ॥ विश्वासिता विदुरपूर्ववचोभिरेव दाशोदिताभिरधिरुह्य च भीमपृष्ठम् । सर्वे ययुर्वनमथाभ्युदिते च सूर्ये दृष्ट्वैव सप्तमृतकान्प्ररुदु(नरुदं)श्च पौराः ॥४४॥ हा पाण्डवानदहदेष हि धार्तराष्ट्रो धर्मस्थितान्कुमतिरेव पुरोचनेन । सोऽप्येष दग्ध इह दैववशात्सुपापः को नाम सत्सु विषमः प्रभवेत्सुखाय ॥ ४५ ॥ पौरेभ्य एव निखिलं ननु भीष्ममुख्या वैचित्रवीर्यसहितास्तु निशम्य हेति । ऊचुः सुदुःखितधियोऽथ सुयोधनाद्याः क्षत्ता मृषैव रुरुदुर्युयुजुश्च कर्म ॥४६॥

भीमोऽप्युदूह्य वनमाप हिडिम्बकस्य भ्रातॄन्पृथां च तृषितैरभियाचितश्च । पानीयमुत्तरपु(प)टेऽम्बुजपत्रनद्धं दूरादुदूह्य ददृशे स्वपतोऽथ

तांश्च ॥४७॥ रक्षार्थमेव परिजाग्रति भीमसेने रक्षः स्वसारमभियापयते हिडिम्बीम् । सा रूपमेत्य शुभमेव ददर्श भीमं साक्षात्समस्तशुभलक्षणसारभूतम् ॥४८॥ सा राक्षसीतनुमवाप सुरेन्द्रलोकश्रीरेव शक्रदयितात्वपरैव शच्याः । शापात्स्पृधा पतिमवाप्य च मारुतिं सा प्राप्तुं निजां तनुमयाचत भीमसेनम् ॥ ४९ ॥ तां भीम आह कमनीयतनुं न पूर्वं ज्येष्ठादुपैमि वनितां न हि धर्म एषः । सा चाह कामवशगा पुनरेतदेव स्वावेशयुग्घि मरुदग्र्यपरिग्रहस्य ॥ ५० ॥ सा भारती वरमिमं प्रददावमुष्यै स्वावेशमात्मदयितस्य च सङ्गमेन । शापाद्विमुक्तिमतितीव्रतपःप्रसन्ना तेनाप सा निजतनुं पवमानसूनोः ॥ ५१ ॥ ज्ञानं च नैजमभिदर्शयितुं पुनश्च प्राहेश्वरोऽखिलजगद्गुरुरिन्दिरेशः । व्यासस्वरूप इह चेत्य परश्व एव मां ते प्रदास्यति तदा प्रकरोपि मेऽर्घ्यम् ॥ ५२ ॥ काले तदैव कुपितः प्रययौ हिडिम्बो भीमं निहन्तुमपि तां च निजस्वसारम् । भक्षार्थमेव हि पुरा स तु तां न्ययुङ्क्त नेतुं च तानथ समासददाशु भीमम् ॥ ५३ ॥ सा भीममेव शरणं प्रजगाम तां च भ्रातॄंश्च मातरमथावितुमभ्ययात्तम् । भीमः सुदूरमपकृष्य सहोदराणां निद्राप्रभङ्गभयतो युयुधेऽमुना च ॥५४॥ तौ मुष्टिभिस्तरुभिरश्मभिरद्रिभिश्च युध्वा नितान्तरवतः प्रतिबोधितांस्तान् । सश्वक्रतुस्तदनु सोदरसम्भ्रमं तं दृष्ट्वैव मारुतिरहन्नुरसि स्म रक्षः ॥ ५५ ॥ तद्भीमबाहुबलताडितमीशवाक्यात्सर्वैरजेयमपि भूमितले पपात । वक्त्रस्रवद्बहुलशोणितमाप मृत्युं प्रायात्तमोऽन्धमपि नित्यमथ क्रमेण ॥ ५६ ॥ हत्वैव शर्ववररक्षितराक्षसं तं सर्वैरवध्यमपि सोदरमात्रयुक्तः । भीमो ययौ तमनु सा प्रययौ हिडिम्बी कुन्तीं युधिष्ठिरमथास्य कृते ययाचे ॥ ॥ ५७ ॥ ताभ्यामनूक्तमपि यन्न करोति भीमः प्रादुर्बभूव निखिलोरुगुणाभिपूर्णः । व्यासात्मको हरिरनन्तसुखाम्बुराशिर्विद्यामरीचिविततः सकलोत्तमोऽलम् ॥ ५८ ॥ दृष्ट्वैव तं परममोदिन आशु पार्था मात्रा



सहैव परिपूज्य गुरुं विरिञ्चेः । उल्लासिताश्च हरिणा परमातिहार्दप्रोत्फुल्लपद्मनयनेन तदोपविष्टाः ॥५९॥ तान्भक्तिनम्रशिरसः समुदीक्ष्य कृष्णो भीमं जगाद नत आशु हिडिम्बया च । एतां गृहाण युवतीं सुरसद्मशोभां जाते सुते सहसुता प्रतियातु चैषा ॥ ६० ॥ एवं ब्रुवत्यगणितोरुगुणे रमेशे ओमित्युदीर्य कृतवांश्च तथैव भीमः । स्कन्धेन चोह्य विबुधाचरितप्रदेशान्भीमं प्रयात्युदय एव रवेर्हिडिम्बी ॥ ६१ ॥ सा नन्दनादिषु वनेषु विहृत्य तेन सायं प्रयाति पृथया सहितांश्च पार्थान् । एवं ययावपि तयोरिह वत्सरार्धो जातश्च सूनुरतिवीर्यबलोपपन्नः ॥ ६२ ॥ देवोऽपि राक्षसतनुर्निर्ऋतिः पुरा य आवेशयुक्च गिरिशस्य घटोत्कचाख्यः । पूर्वं घटोपममसुष्य शिरो बभूव केशा निमेषत उदासुरतो हि नाम ॥६३॥ जाते सुते समयतो भगवत्कृतात्स भीमो जगाद ससुतां गमनाय तां च । स्मृत्याभियान उभयोरपि सा प्रतिज्ञां तेषां विधाय च ययौ सुरलोकमेव ॥ ६४ ॥

व्यासोऽपि पाण्डुतनयैः सहितो बकस्य रौद्राद्धराज्ञयवधापगतस्य नित्यम् । यातो वधाय परमागणितोरुधामा पूर्णाक्षयोरुसुख आशु तदैकचक्राम् ॥ ६५ ॥ तान्ब्राह्मणस्य च गृहे प्रणिधाय कृष्णः शिष्या ममैत इति विप्रकुमाररूपान् । आयामि काल इतिताननुशास्य चायात्तत्र वासमथ चक्रुरनूच्य वेदान् ॥ ६६ ॥ भिक्षामटत्सु सततं प्रतिहुङ्कृतेन भीमो विशां सदन एव गृहप्रमाणम् । भाण्डं कुलालविहितं प्रतिगृह्य गच्छत्याशङ्कयावगमनस्य तमाह धर्मः ॥ ६७ ॥ स्थूलं हि सम पृथिवीसहितं त्वरक्ष उद्धृत्य वह्निमुखतस्तु तदेकदोष्णा । भाण्डं तदर्थमुरुकुम्भकरेण दत्तं भिक्षां च तेन चरसि प्रतिहुङ्कृतेन ॥ ६८ ॥ धर्मस्य ते सुनियतेर्बलतश्च बोधो भूयात्सुयोधनजनस्य ततो भयं मे । मात्रा सहैव वस फल्गुनपूर्वकैस्त्वमानीतमेव परिभुङ्क्ष्व न तु व्रजेथाः ॥ ॥ ६९ ॥ इत्युक्त आशु स चकार तथैव भीमस्तेऽपि स्वधर्मपरिरक्षण-

हेतुमौनाः। भिक्षां चरन्त्यथ चतुर्ष्वपि तेषु यातेष्वेकत्र मातृसहितः
स कदाचिदास्ते ॥ ७० ॥ तत्काल एव रुदितं निजवासहेतोर्विप्रस्य
दारसहितस्य निशम्य भीमः। स्त्रीबालसंयुतगृहे शिशुलालनादौ लज्जे-
दिति स्म जननीमवदन्न चागात् ॥ ७१ ॥ जानीहि विप्ररुदितं कुत
इत्यतश्च योग्यं विधास्य इति सा प्रययौ च शीघ्रम्। सा संवृतैव सकलं
वचनं गृहेऽस्य शुश्राव विप्रवर आह तदा प्रियां सः ॥ ७२ ॥ दातव्य
एव हि करोऽद्य च राक्षसस्य साक्षाद्बकस्य गिरिसन्निभभक्ष्यभोज्यः।
पुंसाऽनसा च सहितानडुहा पुमांस्तु नैवास्ति नो प्रददतां च समस्त-
नाशः ॥ ७३ ॥ अन्यत्र याम इति पूर्वमुदाहृतं मे नैतत्प्रिये तव
मनोगतमास तेन। यास्यामि राक्षसमुखं स्वयमेव मर्तुं भार्यैनमाह न
भवानहमत्र यामि ॥ ७४ ॥ अर्थे तवाद्य तनुसंत्यजनादहं स्वां लोके
सती प्रचरिते तद्दते त्वधश्च। कन्याऽऽह चैनमहमेमि न कन्ययार्थ
इत्युक्त आह धिगिति स्म स विप्रवर्यः ॥ ७५ ॥ कन्योदिता बत
कुलद्वयतारिणीति जाया सखेति वचनं श्रुतिगं सुतश्च। आत्मैव तेन न
तु जीवनहेतुतोऽहं धीपूर्वकं त्र्यशनके प्रतिपादयामि ॥ ७६ ॥ एवं
रुदत्सु सहितेषु कुमारकोऽस्य प्राह स्वहस्तगतृणं प्रतिदर्श्य चैषाम्।
एतेन राक्षसमहं निहनिष्य एवेत्युक्ते सुवाक्यमनु सा प्रविवेश कुन्ती ॥
॥७७॥ पृष्टस्तयाऽऽह स तु विप्रवरो बकस्य वीर्यं बलं च दितिजारिभि-
रप्यसह्यम्। संवत्सरत्रययुते दशके करं च प्रातिस्विकं दशमुखस्य च
मातुलस्य ॥ ७८ ॥ श्रुत्वा तमुग्रबलमत्युरुवीर्यमेव रामायणे रघुवरोरु-
शरातिभीतम्। विष्टं बिलेष्वथ नृपान्वशमाशु कृत्वा भीत्यैव तैस्तदनु
दत्तकरं ननन्द ॥७९॥ एवं बलाढ्यममुमाशु निहत्य भीमः कीर्तिं च
धर्ममधिकं प्रतियास्यतीह। सर्वे वयं च तमनुप्रगृहीतधर्मा यास्याम
इत्यवददाशु धरासुरं तम् ॥ ८० ॥ सन्ति स्म विप्रवर पञ्चसुता ममाथ
तेष्वेक एव नरवैरिमुखाय यातु। इत्युक्त आह स न ते सुतवध्ययाहं



पापो भवामि तव हन्त मनोऽतिधीरम् ॥ ८१ ॥ उक्तैनमाह च पृथा
तनये मदीये विद्याऽस्ति दिक्पतिभिरप्यविपह्यरूपा। उक्तोऽपि नो
गुरुभिरेष नियुङ्क्त एतां वध्यस्तथापि न सुरासुरपालकैश्च ॥ ८२ ॥
उक्त्वैवमेत्य निखिलं च जगाद भीम उद्धर्ष आस स निशम्य महा-
स्वधर्मम्। प्राप्तं विलोक्य तमतीव विघूर्णनेत्रं दृष्ट्वा जगाद यमसूनुरुपेत्य
चान्यैः ॥ ८३ ॥ मातः किमेष मुदितो नितरामिति स्म तस्मै च सा
निखिलमाह स चाब्रवीत्ताम्। कष्टं त्वया कृतमहो बलमेव यस्य सर्वे
श्रिता वयममुं च निहंसि भीमम् ॥८४॥ यद्बाहुवीर्यपरमाश्रयतो हि
राज्यमिच्छाम एव निखिलारिवधं स्वधर्मम्। सोऽयं त्वयाद्य निशि-
चारमुखाय मातः प्रस्थाप्यते वद ममाशु कयैव बुद्ध्या ॥ ८५ ॥
इत्युक्तवन्तममुमाह सुधीरबुद्धिः कुन्ती न पुत्रक निहन्तुमयं हि शक्यः।
सर्वैः सुरैरसुरयोनिभिरप्यनेन चूर्णीकृतो हि शतशृङ्गगिरिः प्रसूत्याम् ॥
॥ ८६ ॥ एष स्वयं हि मरुदेव नरात्मकोऽभूत्को नाम हन्तुमिममाप्त-
बलो जगत्सु। इत्येवमस्त्विति स तामवदत्परेद्युर्भीमो जगाम शकटेन
कृतोरुभोगः ॥ ८७ ॥ गत्वा त्वरन्बकवनस्य सकाशमाशु भीमः स
पायससुभक्ष्यपयोघटाद्यैः। युक्तं च शैलनिभमुत्तममन्नराशिं स्पर्शात्पुरैव
नरभक्षितुरत्तुमैच्छत् ॥८८॥ तेनैव चान्नसमितौ परिभुज्यमान उत्पाट्य
वृक्षममुमाद्रवदाशु रक्षः। वामेन मारुतिरपोह्य तदा प्रहारान्हस्तेन
भोज्यमखिलं सहभक्ष्यमादत् ॥ ८९ ॥ पीत्वा पयो त्वरित एन-
मवेक्ष्यमाण आचम्य तेन युयुधे गुरुवृक्षशैलैः। तेनाहतोऽथ बहुभि-
र्गिरिभिर्बलेन जग्राह चैनमथ भूमितले पिपेष ॥ ९० ॥ आक्रम्य
पादमपि पादतलेन तस्य दोर्भ्यां प्रगृह्य च परं विददार भीमः। मृत्वा
स घोरुतम एव जगाम पापो विष्णुद्विडेव हि शनैरनिवृत्ति चोग्रम् ॥
॥ ९१ ॥ हत्वा तमक्षतबलो जगदन्तकं स यो राक्षसो न वश आस
जरासुतस्य। भौमस्य पूर्वमपि नो भरतस्य राज्ञो भीमो न्यधापयदमुष्य

शरीरमग्रे ॥ ९२ ॥ द्वार्येव तत्प्रतिनिधाय पुरः स भीमः स्नात्वा जगाम निजसोदरपार्श्वमेव । श्रुत्वाऽस्य कर्म परमं तुतुषुः समेता मात्रा च ते तदनु भीतियुताः पुरस्थाः ॥९३॥ दृष्ट्वैव राक्षसशरीरमुरुप्रभीता ज्ञात्वैव हेतुभिरथ क्रमशो मृतं च । विप्रस्य तस्य वचनादपि भीमसेन-भग्नं निशम्य परमं तुतुषुश्च तस्मै ॥ ९४ ॥ अन्नात्मकं करममुष्य च सम्प्रचक्रुः सोऽप्येनमाशु नरसिंहवपुर्धरस्य । चक्रे हरेस्तदनु सत्यवती-सुतस्य विष्णोर्हि वाक्प्रमुदिताः प्रययुस्ततश्च ॥ ९५ ॥ उत्पत्तिपूर्वक-कथां द्रुपदात्मजाया व्यासो ह्यनूच्य जगतां गुरुरीश्वरश्च । यातेत्य-चोदयदथाप्यपरे द्विजाग्र्यास्तान्ब्राह्मणा इति भुजिर्भवितेति चोचुः ॥ ॥९६॥ पूर्वं हि पार्षत इमाञ्जतुगेहदग्धाञ्श्रुत्वाऽतिदुःखितमनाः पुनरेव मन्त्रः । याजोपयाजमुखनिःसृत एवमेष नासत्यतार्ह इति जीवनमेषु मेने ॥ ९७ ॥ यत्र क्वचित्प्रतिवसन्ति निलीनरूपाः पार्था इति स्म स तु फल्गुनकारणेन । चक्रे स्वयंवरविघोषणमाशु राजा त्वन्यैरधार्यधनु-रीशवराच्च चक्रे ॥ ९८ ॥

तत्काल एव वसुदेवसुतोऽपि कृष्णः सम्पूर्णनैजपरिबोधत एव सर्वम् । जानन्नपि स्म हलिना सहितो जगाम पार्थान्निशम्य च मृतानथ कुल्यहेतोः ॥ ९९ ॥ सम्प्राप्य हस्तिनपुरं धृतराष्ट्रपुत्रान्संवञ्चयंस्तदनु-सारिकथाश्च कृत्वा । भीष्मादिभिः परिगतोऽप्रियवज्जगाम द्वारावती-मुदितपूर्णसुनित्यसौख्यः ॥ १०० ॥ तस्यान्तरे हृदिकसूनुरनन्तरं स्वं श्वाफल्किबुद्धिबलमाश्रित इत्युवाच । सत्राजिदेष हि पुरा प्रतिजज्ञ एनामस्मत्कृते स्वतनयां मणिना सहैव ॥ १०१ ॥ सर्वांश्च नः पुनरसाववमत्य कृष्णायादात्सुतां जहि च तं निशि पापबुद्धिम् । आदाय रत्नमुपयाहि च नौ विरोधे कृष्णस्य दानपतिना सह साह्यमेमि ॥ ॥ १०२ ॥ इत्युक्त आशु कुमतिः स हि पूर्वदेहे दैत्यो यतस्तदकरो-दथ सत्यभामा । आनन्दसंविदपि लोकविडम्बनाय तद्देहमस्य तिलजे



पतिमभ्युपागात् ॥ १०३ ॥ श्रुत्वा तदीयवचनं भगवान्पुरीं स्वामायात एव तु निशम्य महोत्सवं तम् । पाञ्चालराजपुरुषोदितमाशु वृष्णिवर्यै-रगान्मुसलिना सह तत्पुरीं च ॥ १०४ ॥

भीमोऽपि रुद्रवररक्षितराक्षसं तं हत्वा तृणोपमतया हरिभक्त-वन्द्यः । उष्याथ तत्र कतिचिद्दिनमच्युतस्य व्यासात्मनो वचनतः प्रययौ निजैश्च ॥१०५॥ माङ्गल्यमेतदतुलं प्रतियात शीघ्रं पाञ्चालका-न्परमभोजनमत्र सिध्येत् । विप्रैरितस्तत इतीरितवाक्यमेते शृण्वन्त एव परिचक्रमुरुत्तराशाम् ॥ १०६ ॥ षण्णां च मध्यगमुदीर्णभुजं विशाल-वक्षस्थलं बहुलपौरुषलक्षणं च । दृष्ट्वैव मारुतिमसावुपलप्स्यतीह कृष्णा-मिति स्म च वचः प्रवदन्ति विप्राः ॥ १०७ ॥ रात्रौ दिवा च सततं पथि गच्छमानाः प्रापुः कदाचिदथ विष्णुपदीं निशायाम् । सर्वांश्च रक्षितुमगादिह पृष्ठतश्च भीमोऽग्र एव शतमन्युसुतोऽन्तरेऽन्ये ॥१०८॥ प्राप्ते तदोल्मुकधरेऽर्जुन एव गङ्गां गन्धर्वराज इह चित्ररथोऽर्धरात्रे । दृष्ट्वैव विप्ररहितानुदकान्तरस्थः क्षत्रात्मजा इति हि धर्षयितुं स चागात् ॥ १०९ ॥ हन्ताऽस्मि वो ह्युपगतानुदकान्तमस्या नद्याश्च मर्त्य-चरणाय निषिद्धकाले । इत्थं वदन्तममुमाह सुरेन्द्रसूनुर्गन्धर्व नास्त्र-विदुषां भयमस्ति तेऽद्य ॥ ११० ॥ सर्वं हि फेनवदिदं बहुलं बलं ते नार्थप्रदं भवति चास्त्रविदि प्रयुक्तम् । इत्युक्तवन्तममुमुत्तमयानसंस्थो बाणान्क्षिपन्नभिससार सुरेन्द्रभृत्यः ॥ १११ ॥ आग्नेयमस्त्रमभिमन्त्र्य तदोल्मुके स चिक्षेप शक्रतनयोऽस्य रथश्च दग्धः । तं चाग्निना परि-गृहीतमभिप्रगृह्य केशेषु सञ्चकर्षाशु सुरेन्द्रसूनुः ॥ ११२ ॥ पार्थेन सन्धर्षितः शरणं जगाम धर्मात्मजं तमपि सोऽथ निजास्त्रमुग्रम् । सञ्जह एव तत आस च नामतोऽसावङ्गारवर्ण इति वर्णविपर्ययेण ॥ ११३ ॥ गन्धर्व उल्बणसुरक्ततनुः स भूत्वा स्वर्णावदात उत पूर्वमुपेत्य सख्यम् । पार्थेन दुर्लभमहास्त्रमिदं ययाचे जानन्नपि स्म न हि तादृशमेष वेद ॥

॥११४॥ विद्या सुशिक्षिततमा हि सुरेन्द्रसूनौ तामस्य चावददसावपि कालतोऽस्मै । गन्धर्वगामवददन्वगदश्यविद्यां पश्चादिति स्म पुरुहूतसुतस्य वाक्यात् ॥ ११५ ॥ आधिक्यतः स्वगतसंविद एव साम्येनैवेच्छति स्म नियमं स धनञ्जयोऽत्र । धर्मार्थमेव स तु तां परिदाय तस्मै कालेन संविदममुष्य च धर्मतोऽयात् ॥ ११६ ॥ पार्थेन सोऽपि बहुलाश्च कथाः कथित्वा धौम्यस्य सङ्ग्रहणमाह पुरोहितत्वे । दास्यामि दिव्यतुरगानिति सोऽर्जुनाय वाचं निगद्य दिवमारुहदप्यगुस्ते ॥ ११७ ॥

ते धौम्यमाप्य च पुरोधसमुत्तमज्ञं विप्रात्मजोपमतया विविशुः पुरं च । पाञ्चालकस्य निखिलां ददृशुश्च तत्र मूर्धाभिषिक्तसमितिं समलङ्कृतां च ॥ ११८ ॥ राजन्यमण्डलमुदीक्ष्य सुपूर्णमत्र कृष्णां प्रगृह्य सहजः प्रगृहीतमालाम् । तेषां च मध्यमगमत्कुलवीर्यसम्पद्युक्तां विभूतिमथ चाह समस्तराज्ञाम् ॥ ११९ ॥ तांश्च प्रदर्श्य सकलान्स हुताशनांशश्चापं च तत्प्रतिनिधाय सपञ्चबाणम् । आहाभिभाष्य सकलान्नृपतीनथोच्चैर्दीप्यद्धुताशनवपुर्घनतुल्यघोषः ॥ १२० ॥ एतेन कार्मुकवरेण तरूपरिस्थमत्स्यावभासमुदके प्रतिवीक्ष्य येन । एतैः शरैः प्रतिहतो भवतीह मत्स्यः कृष्णाऽनुयास्यति तमद्य नरेन्द्रवीराः ॥१२१॥ इत्यस्य वाक्यमनु सर्वनरेन्द्रपुत्रा उत्तस्थुरुद्धतमदाश्चलकुण्डलास्याः । अस्त्रं बलं च बहु नैजमभीक्षमाणाः स्पर्धन्त एव च मिथः समलङ्कृताङ्गाः ॥१२२॥ केचिन्निरीक्ष्य धनुरेत्य न मे सुशक्यमित्येव चापययुरन्य उत प्रचाल्य । तत्राससाद शिशुपाल उरुप्रतापः सङ्गृह्य तत्समधिरोपणयत्न आसीत् ॥ ॥ १२३ ॥ माषान्तराय स चकर्ष यदैव कोट्या उन्नम्य तत्प्रतिजघान तमेव चाशु । अन्यत्र फल्गुनत एतदशक्यमेवेत्यज्ञो गिरीशवरतः स ययौ च भग्नः ॥ १२४ ॥ मद्रेश एत्य चकृषे स्थविरोऽपि वीर्याच्चेदीशतोऽप्यधिकमेव स मुद्गमात्रे । शिष्टेऽमुना प्रतिहतः स ययावशक्यं मत्वाऽऽत्मनस्तदनु भूपतयो विषण्णाः ॥१२५॥ सन्नेषु भूपतिषु



मागध आससाद सोऽवज्ञयैव बलवीर्यमदेन दृप्तः । चापं चकर्ष चलपादतलो बलेन शिष्टे स सर्षपमितेऽभिहतोऽमुनैव ॥१२६॥ जानुन्यमुष्य धरणीं ययतुस्तदैव दर्पेण चास्थिरपदस्थितिमात्रहेतोः । रौद्राद्वरात्स जडतां गमितोऽथ राजा राज्ञां मुखान्यनभिवीक्ष्य ययौ स्वराष्ट्रम् ॥ १२७ ॥ प्रायो गतास्तदनु भूपतयोऽथ कर्णो दुर्योधनार्थमनुगृह्य धनुश्चकर्ष । रामादुपात्तशुभशिक्षितमात्रतोऽसौ रोमावशिष्टमकरोद्धनुषोऽन्तमाशु ॥ १२८ ॥ तस्मिंश्च तेन विहते प्रतिसन्निवृत्ते भीमार्जुनौ द्विजसदस्युपसन्निविष्टौ । उत्तस्थतू रविशशिप्रतिमानरूपौ विप्रेषु तत्र च भिया विनिवारयत्सु ॥ १२९ ॥ विप्राश्च केचिदतियुक्तमिमौ च वीरौ देवोपमाविति वचो जगदुस्ततस्तौ । दृष्ट्वैव कृष्णमुखपङ्कजमाशु चापसान्निध्यमाययतुरुत्तमवीर्यसारौ ॥१३०॥ तत्रार्जुनः पवनजात्प्रियतोऽप्यनुज्ञामादाय केशवमजं मनसा प्रणम्य । कृत्वा गुणान्वितमदो धनुरश्रमेण यन्त्रान्तरेण स शरैरधुनोच्च लक्ष्यम् ॥१३१॥ कृष्णा तदाऽस्य विदधे नवकञ्जमालां मध्ये च तां प्रतिनिधाय नरेन्द्रपुत्रौ । भीमार्जुनौ ययतुरच्युतमाभिनम्य क्षुब्धस्तदा नृपवराब्धिरिमावधावत् ॥१३२॥ द्रष्टुं हि (च) केवलगतिर्न तु कन्यकाया अर्थे न चापमिह वृष्णिवराः स्पृशन्तु । इत्याज्ञयैव वरचक्रधरस्य लिप्सामप्यत्र चक्रुरिह नैव यदुप्रवीराः ॥ १३३ ॥ भीमस्तु राजसमितिं प्रतिसम्प्रयातां दृष्ट्वैव योजनदशोच्छ्रयमाशु वृक्षम् । आरुज्य सर्वनृपतीनभितो ह्यतिष्ठद्दृष्ट्वा पलायनपराश्च बभूवुरेते ॥ १३४ ॥ भीमोऽयमेष पुरुहूतसुतोऽन्य एते पार्था इति स्म हलिने हरिरभ्यवोचत् । दृष्ट्वैव सोऽपि मुदमाप शिनेश्च पौत्रः खड्गं प्रगृह्य हर्षात्परिपुप्लुवेऽत्र ॥ १३५ ॥ प्रीतेषु सर्वयदुषु प्रपलायितेषु दुर्योधनादिनृपतिष्वखिलेषु भीमात् । कर्णोऽभ्ययाद्धरिहयात्मजमाशु मद्रराजो जगाम पवनात्मजमेव वीरः ॥१३६॥ विप्रेषु दण्डपटदर्भमहाजिनानि कोपात्क्षिपत्सु न विनाशनमत्र भूयात् । क्षत्रस्य

वैरत इति द्रुपदे च कृष्णां विप्रांश्च याचति स मारुतिरार शल्यम् ॥ ॥ १३७ ॥ वृक्षं त्वसौ प्रतिनिधाय च मद्रराजं दोर्भ्यां प्रगृह्य जवतो गगने निधाय । बन्धुत्वतो भुविशनैरदधात्स तस्य विज्ञाय वीर्यमगमन्निजराजधानीम् ॥ १३८ ॥ पार्थोऽपि तेन धनुषा युयुधे स्म कर्णे सोऽप्यत्र बाहुबलमाविरमुत्र चक्रे । तौ धन्विनावनुपमौ चिरमस्यतां च सूर्यात्मजोऽत्र वचनं व्यथितो बभाषे ॥ १३९ ॥ त्वं फल्गुनो हरिहयो द्विजसत्तमो वा मूर्तं न मे प्रमुखतः स्थितिमन्य ईष्टे । यो वाऽस्मि कोऽपि यदि ते क्षममद्य बाणान्मुञ्चान्यथैहि रणतस्त्विति पार्थ आह ॥ १४० ॥ कार्यं न मे द्विजवरैः प्रतियोधनेनेत्युक्त्वा ययौ रविसुतः स सुयोधनाद्यैः । नागाह्वयं पुरम् ।

अथ द्रुपदात्मजां तामादाय चार्जुनयुतः प्रययौ स भीमः ॥१४१॥ अग्रेऽश्विपुत्रसहितः स तु धर्मसूनुः प्रायात्कुलालगृहमन्वपि भीमपार्थौ । भिक्षेति तैरभिहिते प्रजगाद कुन्ती भुङ्ध्वं समस्तश इति प्रददर्श कन्याम् ॥१४२॥ प्रामादिकं च वचनं न मृषा तयोक्तं प्रायो हि तेन कथमेतदिति स्म चिन्ता । तेषां बभूव वसुदेवसुतो हरिश्च तत्राजगाम परमेण हि सौहृदेन ॥१४३॥ संभाष्य तैः स भगवानमितात्मशक्तिः प्रायान्निजां पुरममा यदुभिः समस्तैः । ज्ञातुं च तान्निशि स तु द्रुपदः स्वपुत्रं प्रास्थापयत्स च निलीन इमानपश्यत् ॥ १४४ ॥ भिक्षान्नभोजिन उतो भगिनीं निजां च तत्रातितृप्तहृदयामथ युद्धवार्ताम् । तेषां निशम्य नदतां घनवद्गभीरं क्षत्रोत्तमा इति मतिं स चकार वीरः ॥ ॥ १४५ ॥ प्रातस्तु तस्य जनितुर्वचसा पुरोधास्तान्प्राप्य मन्त्रविधिना मरुदात्मजेन । सम्पूजितोऽतिविदुषा प्रतिगृह्य तांश्च प्रावेशयन्नृपतिगेहममैव मात्रा ॥ १४६ ॥ तानागतान्समभिपूज्य निजात्मजां च विप्रादियोग्यपृथगुक्तपदार्थजातैः । पूर्णान्गृहांश्चतुर एव दिदेश राजा तत्रायुधादिपरिपूर्णगृहं च तेऽगुः ॥ १४७ ॥ चेष्टास्वराकृतिविवक्षित-



वीर्यशौर्यप्रागल्भ्यपूर्वकगुणैः क्षितिभर्तृपुत्रान् । विज्ञाय तान्द्रुपद एत्य च धर्मसूनुं पप्रच्छ कोऽसि नरवर्य वदस्व सत्यम् ॥ १४८ ॥ स प्राह मन्दहसितः किमिहाद्य राजन्पूर्वं हि वर्णविषये न विशेष उक्तः । पुत्रीकृते तव सुतेन तु लक्ष्यवेध उक्तो नरेन्द्रसमितौ स कृतोऽप्यनेन ॥ ॥१४९॥ एवं ब्रुवाणमथ तं पृथया सहैव राजा वदेति पुनरेव ययाच एषः । सर्वं पृथाऽप्यवदतां स च तेन तुष्टो वाचं जगाद कृतकृत्य इहासमद्य ॥१५०॥ पार्थार्थमेव हि मयैष कृतः प्रयत्नस्त्वं फल्गुनोऽन्य उत वाऽद्य करं सुतायाः । गृह्णात्वितीरित इमं स तु धर्मसूनुराह स्म सर्व इति मे मनसि प्ररूढम् ॥ १५१ ॥ नात्र प्रमा मम हृदि प्रतिभात्यथापि धर्माचला मम मतिर्हि तदेव मानम् । इत्युक्तवत्यपि सहैव सुतेन राजा नैवैच्छदत्र भगवानगमच्च कृष्णः ॥ १५२ ॥ व्यासं तमीक्ष्य भगवन्तमगण्यपूर्णनित्याव्ययात्मगुणमाशु समस्त एव । नत्वाऽभिपूज्य वरपीठगतस्य चाज्ञामादाय चोपविविशुः सहितास्तदन्ते ॥ ॥ १५३ ॥ कृष्णस्तदाऽऽह नृपतिं प्रतिदेहि कन्यां सर्वेभ्य एव वृषवायुपुरन्दरा हि । नासत्यदस्रसहिता इम एव इन्द्राः पूर्वं च सम्प्रतितनश्च हरेर्हि पश्चात् ॥ १५४ ॥ एषां स्त्रियश्च निखिला अपि चैकदेहा(:) पुत्री तवैव न ततोऽत्र विरुद्धता हि । इत्युक्तवत्यपि य(त)दा द्रुपदश्चकार संवादिनीं न धियमेनमथाह कृष्णः ॥ १५५ ॥ दिव्यं हि दर्शनमिदं तव दत्तमद्य पश्याशु पाण्डुतनयान्दिवि संस्थितांस्त्वम् । एतां च ते दुहितरं सह तैः पृथक्स्थां तल्लक्षणैः सह ततः कुरु ते यथेष्टम् ॥ १५६ ॥ इत्युक्तवाक्यमनु तान्स ददर्श राजा कृष्णप्रसादबलतो दिवि तादृशांश्च । एतान्निशाम्य चरणौ जगदीशितुश्च भीतो जगाम शरणं तदनादरेण ॥ १५७ ॥ दत्वाऽभयं स भगवान्द्रुपदस्य कार्ये तेनोमिति स्म कथिते स्वयमेव सर्वाम् । वैवाहिकीं कृतिमथ व्यदधाच्च धौम्ययुक्तः क्रमेण जगृहुर्निखिलाश्च पाणिम् ॥ १५८ ॥

पाञ्चालकेषु च महोत्सव आस राजा तुष्टोऽभवत्सह सुतैश्च निजैश्च सर्वैः। पौरैश्च जानपदिकैश्च यथैव रामे दत्वा सुतां जनक आप मुदं ततो नु ॥ १५९ ॥

उद्वाह्य तत्र निवसत्स्वथ(त्सु च) पाण्डवेषु श्रुत्वैव रामसहितः सह यादवैश्च। आदाय पारिबर्हं बहुलं स कृष्ण आयान्मुदैव पृथया सहितांश्च पार्थान् ॥ १६० ॥ दृष्ट्वैव तं मुमुदुराशु कुरुप्रवीरा आश्लिष्य कृष्णमथ नेमुरसौ च कृष्णाम् । दृष्ट्वा प्रदाय गृहयोग्यसमस्तभाण्डं सौवर्णमेभ्य उरुभूषणमच्युतोऽदात् ॥ १६१ ॥ देवाङ्गयोग्यशुभकुण्डलहारमौलि-केयूरवस्त्रसहितान्युरुभूषणानि । षण्णां पृथक्पृथगदात्पृथगेव योग्या-न्यन्यद्ददावथ पितृष्वसुरात्मयोग्यम् ॥ १६२ ॥ रत्नानि गोगजतुरङ्ग-रथान्सुवर्णभारान्बहूनपि ददावथ चाशिषोऽग्र्याः । व्यासोऽप्यदादिह परत्र च पार्षतोऽपि भूपारथाश्वगजरत्नसुकाञ्चनानि ॥१६३॥ दासीश्च दाससहिताः शुभरूपवेषाः साहस्रशो ददतुरत्र हरिर्नृपश्च । तासां विचित्रवसनान्युरुरत्नमालाः प्रत्येकशो ददतुरप्युरुभूषणानाम् ॥१६४॥ मासान्बहूनपि विहृत्य सहैव पार्थैः कृष्णो ययौ यदुपुरीं सहितो-ऽग्रजेन ।

अन्तर्हिते भगवति प्रततोरुशक्तौ व्यासे च वत्सरमिहोषुरिमे च पार्थाः ॥१६५॥ वैचित्रवीर्यतनयाः सह सौबलेन कर्णेन सिन्धुपतिना रथहस्तियोधैः । भूरिःश्रवःप्रभृतिभिश्च सहैव हन्तुं पाञ्चालराजमगुरेत्य पुरीं पुनस्ते ॥ १६६ ॥ तैरर्दिते स्वपुर आशु स सोमकानां राजा सुतैः सह ससैनिक उद्गतोऽभूत् । तेषां च तस्य च बभूव महान्विमर्दः पुत्रौ च तस्य निहतौ विधुताश्च सेनाः ॥ १६७ ॥ चित्रे हते समर आशु सचित्रकेतौ धावत्सु सैनिकवरेषु च पार्षतस्य । पार्था रथैरभिययु-र्धृतचापबाणा वैचित्रवीर्यतनयात्रविसृनुयुक्तान् ॥ १६८ ॥ तैस्तेषु पञ्चसु समं प्रतियोधयत्सु भूरिश्रवाः सरविजो विरथं चकार ।



शक्रात्मजं तदनु पर्वतसन्निकाशं दोर्भ्यां तु मारुतिरुरुं तरुमुद्रबर्ह ॥ ॥ १६९ ॥ आयान्तमीक्ष्य तरुहस्तमिमं समीरसूनुं सुयोधनमुखा निखिलाः सकर्णाः । भूरिश्रवाः शकुनिभूरिजयद्रथाश्च सर्वेऽपि दुद्रुवु-रथो विविशुः पुरं स्वम् ॥ १७० ॥ ज्ञात्वा समस्तमपि तद्विदुरोऽग्रजं स्वं वर्धन्त एव तनया भवतो नरेन्द्र । इत्याह सोऽपि मुदितः स्वसुतेन कृष्णा प्राप्तेति भूषणवराण्यदिशच्च वासः ॥ १७१ ॥ पार्था इति स्म विदुरोऽवददाशु सोऽपि स्वाकारगूहनपरो यदि तर्ह्यतीव । भद्रं मृता नहि पृथासहिताः स्म पार्थास्तेषां प्रवृत्तिमपि मे वद सर्वशस्त्वम् ॥ ॥१७२॥ इत्युक्त आह विदुरः सहिडिम्बवध्यापूर्वां प्रवृत्तिमखिलामपि लक्ष्यवेधम् । उद्वाहमप्यथ नदीजमुखाश्च सर्वे तुष्टा बभूवुरपि वत्सर-मूषुरेवम् ॥ १७३ ॥

श्रुत्वाऽथ कृष्णमुपयान्तमुरु प्रदाय रत्नं च पाण्डुतनयेषु गतं पुनश्च । तातप्यमानहृदयास्तु सुयोधनाद्या मन्त्रं प्रचक्रुरथ कर्णमुखा ययुश्च ॥ १७४ ॥ युद्धाय तेषु पुनरेव रथैः प्रयातेष्वाहाग्रजं स विदुरोऽपि नदीजमुख्यान् । एते हि पापतमचेतस एत्य पार्थान्युद्धाय मृत्युमुपयान्ति न संशयोऽत्र ॥ १७५ ॥ भीमार्जुनौ विषहितुं नहि कश्चनास्ति सामर्थ्ययुक्सुरवरेष्वपि वर्धितास्ते । ज्ञात्वैव वत्सरत एव महानधर्मस्तेषामुपेक्षणकृतस्तदलं नियुङ्क्ष्व ॥ १७६ ॥ आनीतये च विनियुज्य सुसान्त्वपूर्वमानीय योजय नृपैषु तथार्धराज्यम् । एवं कृते (तं) तत्र भवेत्कुलवृद्धये हि धर्माय चोभयविनाशकरोऽन्यथा स्याः ॥१७७॥ इत्युक्तवत्यनु तथेत्यवदन्नदीजो द्रोणः कृपश्च विदुरं स नृपोऽप्युवाच । [illegible]ानयेति स च वेगवता रथेन तत्रागमत्तदनु तैरभिपूजितश्च ॥१७८॥ तत्काल एव वसुदेवसुतश्च कृष्णो व्यासश्च तानुपसमेत्य दुरन्तशक्ती । आदाय कुन्तिसहितान्विदुरेण युक्तौ नागाह्वयं पुरमितां सह भार्ययैव ॥ ॥१७९॥ तेष्वागतेषु सुमहानभवत्प्रहर्षः पौरस्य जानपदिकस्य जनस्य

चोचैः। भीष्मादिकाश्च मुदिताः प्रतिपूज्य गेहमावेशयन्सह नृपेण महोत्सवेन ॥ १८० ॥ कृष्णामपूजयदतीव च सौबली सा दुर्योधनस्य दयिता सहितात्र तेऽपि। ऊपुस्ततश्च निजपुत्रकदुर्विनीत्या कृष्णानिमित्तमुरुभीतित आह भीमात् ॥ १८१ ॥ कुन्ति प्रयाहि सहिता स्नुषया गृहं स्वं भीमाद्बिभेमि निजपुत्रकदुर्विनीत्या। कृष्णा त्रिलोकवनिताधिकरूपसारा यस्मादिति स्म ससुता प्रययौ गृहं सा ॥ १८२ ॥

ऊपुस्तथैव परिवत्सरपञ्चकं ते पाण्डोर्गृहे सुसुखिनोऽखिलभोगयुक्ताः। कृष्णा च तेषु पृथगेव चतुःस्वरूपा रेमे तथैकतनुरप्यभिमानिभेदात् ॥ १८३ ॥ कन्यैव साऽभवदतः प्रतिवासरं च जन्माभवच्चाभिमतेः पृथगेव नाशात्। प्रायो हि नाभिमतिनाशमवाप वाणी तस्मान्मरुच्च सकलेष्वभिविष्ट आसीत् ॥१८४॥ धर्मात्मजादिषु मरुत्प्रतिविष्ट एषां बुद्धिं विमोह्य रमते सततं तया यत्। शुद्धैव सा हि तत एव दिनेदिने च संमोहतो मरणवद्भवतीह कन्या ॥ १८५ ॥ नो सुप्तिवच्चिदमतोऽन्यवशत्वतो हि देहस्य संस्मृतित एव हरेर्न मोहः। नावेशवच्च तत एव मृतेः स्वरूपमेतच्चतः प्रतिदिनं जननाद्धि कन्या ॥ ॥ १८६ ॥ एवं स वायुरनुविष्टयुधिष्ठिरादिभीमात्मनैव रमते सततं तयैकः। अन्यादृशा हि सुरभुक्तिरतोऽन्यरूपा मानुष्यभुक्तिरिति नात्र विचार्यमस्ति ॥ १८७ ॥ वासिष्ठयादववृषावपि केशवौ तौ तत्रोपतुः परमसौहृदतो हि तेषु। ताभ्यामनन्तगुणपूर्णसुखात्मकाभ्यां पार्थाश्च ते मुमुदिरे युतसत्कथाभिः ॥ १८८ ॥

पूर्वं हि तेषु वनगेषु बभूव काशिराज्ञः सुताकृत उरुक्षितिपालयोगः। तत्र स्वयंवरगतां धृतराष्ट्रपुत्रः कन्यां बलाज्जगृह आत्मबलातिदृप्तः ॥ १८९ ॥ पूर्वं हि राजगणने मगधाधिराजः सङ्ख्यातइत्यतिरुषा प्रगृहीतकन्ये। दुर्योधने नृपतयो युयुधुः स्म तेन भग्नाश्च कर्णसहितेन सहानुजेन ॥ १९० ॥ भग्नेषु तेषु पुनरात्तशरासनेषु कर्णो जगाद



धृतराष्ट्रसुतं प्रयाहि। युक्तः सहोदरजनैर्गुरुभीष्ममुख्यैर्युक्तस्य ते न पुरमेत्य हि धर्षणेशाः ॥१९१॥ एकान्ततो जयमवीक्ष्य च नानुयाति बार्हद्रथः पुरगतस्य जये न निष्ठा। द्रौणिं हि (च) रुद्रतनुमेष सदा विजानन्नो तेन युद्धमभिवाञ्छति रुद्रभक्तः ॥ १९२ ॥ एकोऽहमेव नृपतीन्प्रतियोधयिष्य एतैर्मयि प्रवि(ति)जितेऽपि न तेऽस्त्यकीर्तिः। एकं च तेऽनुजमिमे यदि पौरुषेण गृह्णीयुरत्र तव कीर्तिरुपैति नाशम् ॥ ॥ १९३ ॥ भीष्मादयोऽपि नहि योधयितुं समर्था राज्ञा ह्यनेन तत एव च बाह्लिकोऽस्य। भृत्यो बभूव नहि भीष्ममयं युधेऽगाद्राजा नहीति न च तेन विरोध आसीत् ॥ १९४ ॥ इत्युक्त आशु स विमृश्य ययौ पुरं स्वं कर्णोऽपि तैः प्रतियुयोध जिगाय चैतान्। कर्णस्य वीर्यमगणय्य जरासुतोऽपि ह्येकैकमेव नृपतिं स दिदेश योद्धुम् ॥ ॥ १९५ ॥ सर्वेषु तेषु विजितेष्वभिजग्मिवान्स योद्धुं बृहद्रथसुतोऽप्यमुना रथेन। तं चैव रामवरतो विरथं विशस्त्रं चक्रे स चैनमथ मुष्टिभिरभ्युपेतौ ॥ १९६ ॥ सन्धौ यदैव जरया प्रतिसन्धितस्य कर्णो जघान न परत्र तुतोष राजा। न ज्ञातमेतदपि हो हलिना तदेतज्ज्ञातं त्वया भव ततो मम भृत्य एव ॥ १९७ ॥ एवं विधं सुकुशलं बहुयुद्धशौण्डं न त्वां हनिष्य उत ते पितुरेव पूर्वम्। बाहोर्बलादभिहृतं हि मयाङ्गराज्यं तत्त्वं गृहाण युधि कर्मकरश्च मे स्याः ॥१९८॥ इत्युक्त आशु स तथैव चकार कर्णः पूर्वं हि तस्य निजराज्यपदैकदेशः। दुर्योधनेन विहितो मगधाधिराजं जित्वा वृकोदरहृतः पितुरेव दत्तः ॥ ॥ १९९ ॥ अङ्गाधिराज्यमुपलभ्य जरासुतस्य स्नेहं च सूर्यसुत आशु कुरूञ्जगाम। दृष्ट्वैव तं मुमुदिरे धृतराष्ट्रपुत्रा नानेन तुल्यमधिजग्मुरतो हरिं च ॥२००॥ उद्वाह्य काशितनयां गिरिजाभि(धि)विष्टां साक्षान्नरेषु जनितां प्रथमामलक्ष्मीम्। तस्यां सुतं त्वजनयत्पुर आस योऽक्षः कन्यां पुरा प्रियतमां च षडाननस्य ॥ २०१ ॥ पुत्रो बभूव स तु लक्षण-

नामधेयः सा लक्षणेत्यधिकरूपगुणा सु(ऽऽस)कन्या । तस्यानुजाश्च निजयोग्यगुणा अवापुर्भार्याः पुनश्च स सुयोधन आप भार्याः ॥२०२॥ पूर्वं सुरान्तक इति प्रथितः सुतोऽभूद्दुःशासनस्य तदनु प्रतितप्यमानाः । दृष्ट्वैव पार्थबलवीर्यगुणान्समृद्धिं तां चैव ते प्रतिययुः स्म कलिङ्गदेशम् ॥ ॥ २०३ ॥ आसीत्स्वयंवर उतात्र कलिङ्गराजपुत्र्याः सुवज्र इति यं प्रवदन्ति भूपाः । रौद्राद्वरादविजितस्य च तस्य कन्यां दृष्ट्वा बलात्स जगृहे धृतराष्ट्रसूनुः ॥ २०४ ॥ तत्राथ रुद्रवरतः स जरासुतेन युक्तो बबन्ध च सुयोधनमाशु जित्वा । कर्णः पराद्रवदिह स्म सुतेषु पाण्डोर्यस्मात्स्पृधाऽऽगमदतः स पराजितोऽभूत् ॥२०५॥ दुर्योधनेऽनुजजनैः सहिते गृहीते भीष्माम्बिकेयविदुराग्रजवाक्यनुन्नः । भीमो विजित्य नृपतीन्सजरासुतांस्तान्हत्वा सुवज्रममुचद्धृतराष्ट्रपुत्रान् ॥ २०६ ॥

तेऽपि स्म कर्णसहिता मृतकप्रतीका नागाह्वयं पुरमथाययुरप्यमीषाम् । दृष्ट्वा विरोधमवदन्नृपतिश्च धर्मपुत्रं पुरन्दरकृतस्थलमाशु याहि ॥ २०७ ॥ तत्रार्धराज्यमनुभुङ्क्ष्व सहानुजैस्त्वं कोशार्धमेव हि गृहाण पुरा हि शक्रः । तत्राभिषिक्त उत कञ्जभवादिदेवैस्तत्रस्थ एव स चकार चिरं च राज्यम् ॥२०८॥ त्वं वीर शक्रसम एव ततस्तवैव योग्यं पुरं तदित आश्वभिषेचयामि । इत्युक्त आह स युधिष्ठिर ओमिति स्म चक्रेऽभिषेकमपि तस्य स आम्बिकेयः ॥ २०९ ॥ तस्याभिषेकमकरोत्प्रथमं स कृष्णो वासिष्ठनन्दन उरुर्भव चक्रवर्ती । यश्चाऽश्वमेधनिखिलात्मकराजसूयपूर्वैर्मखैः सततमेव च धर्मशीलः ॥२१०॥ इत्येव पार्षतसुतासहितेऽभिषिक्ते कृष्णोऽपि वृष्णिवृषभः स तथाभ्यषिञ्चत् । एवं च मारुतिशिरस्यभिषेकमेतौ सञ्चक्रतुः स्म युवराजपदे सभार्यम् ॥ २११ ॥ भीमे च पार्षतसुतासहितेऽभिषिक्ते ताभ्यामनन्तसुखशक्तिचिदात्मकाभ्याम् । अन्यैश्च विप्रवृषभैः सुकृतेऽभिषेके धर्मात्मजानु मुमुदुर्निखिलाश्च सन्तः ॥ २१२ ॥ तस्मिन्महोत्सवके



दिनसप्तकानुवृत्ते वसिष्टवृषभेण च वृष्णिपेण । कृष्णेन ते ययुरमा पृथया तया च पाञ्चालराजसुतया स्थलमिन्द्रवासम् ॥२१३॥ कोशस्य चार्धसहितास्तु यदैव पार्था गच्छन्तिताननुययुर्निखिलाश्च पौराः । ऊचुश्च हा बत सुयोधन एष पापो दूरे चकार ननु पाण्डुसुतान्गुणाढ्यान् ॥ २१४ ॥ भीमप्रतापमवलम्ब्य कलिङ्गबन्धान्मुक्तः सुतामपि हि तस्य पुरं निनाय । द्वेष्ट्येवमप्यतिबलान्हि सदैव पार्थान्यामो वयं गुणिभिरद्य सहैव पार्थैः ॥ २१५ ॥ आज्ञापयत्यपि सभेरिरवेण पार्थान्नैवानुगच्छथ यदि व्रजथानु वोऽद्य । वित्तं हरिष्य इह सर्वमपीति तच्च पापः करोतु न वयं विजहाम पार्थान् ॥ २१६ ॥ सद्भिर्हि सङ्गतिरिहैव सुखैकहेतुर्मोक्षैकहेतुरुत तद्विपरीतमन्यत् । तस्माद्व्रजेम सह पाण्डुसुतैर्हि शक्रप्रस्थं त्विति स्म धृतचेतस आह धर्मः ॥ ॥२१७॥ प्रीतिर्यदि स्म भवतां मयि सानुजेऽस्ति तिष्ठध्वमत्र पितुरेव हि शासने मे । कीर्तिर्हि वोऽनुगमनात्पितुरत्ययेन नश्येन्न इत्यनुसरध्वमिहाम्बिकेयम् ॥ २१८ ॥ इत्येव तैः पुरजना निखिलैर्निषिद्धाः कृच्छ्रेण तस्थुरपि तान्मनसा त्वगच्छन् । प्राप्याथ शक्रपुरमस्मरतां च कृष्णौ देवेशवार्धकिमथागमदत्र सोऽपि ॥ २१९ ॥ वासिष्ठपेन यदुपेन च पाण्डवानां रत्नोत्करं कुरु पुरं पुरुहूतपुर्याः । सादृश्यतस्त्विति नियुक्त उभौ प्रणम्य सर्वेश्वरौ स कृतवांश्च पुरं तथैव ॥ २२० ॥ देशं च नातिजनसंवृतमन्यदेशसंस्थैर्जनैरभिपुपूरिर आशु पार्थाः । तेषां गुणैर्हरिपदानतिहेतुतश्च राष्ट्रान्तरा इह शुभा वसतीः(तिं) स्म चक्रुः ॥२२१॥

प्रस्थाप्य दूरमनुजस्य सुतान्स राजा चक्रेऽभिषेकमपि तत्र सुयोधनस्य । दुःशासनं च युवराजमसौ विधाय मेने कृतार्थमिव च स्वमशान्तकामः ॥ २२२ ॥ पार्थाश्च ते मुमुदुरत्र वसिष्ठवृष्णिवर्योदितानखिलतत्त्वविनिर्णयांस्तु । शृण्वन्त एव हि सदा पृथिवीं च धर्मादभुञ्जन्त आश्रितरमापतिपादयुग्माः ॥ २२३ ॥ (२५२९) ॥ इति

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये पाण्डवराज्यलाभो नाम एकोनविंशोऽध्यायः ॥ १९ ॥

---

## अथ विंशोऽध्यायः

॥ ॐ ॥ यज्ञोरुदाननरदेववन्द्यताप्रश्नर्षिपूजासु युधिष्ठिरोऽभूत् । धर्मानुशास्तिहरितत्त्वशंसनस्वराष्ट्ररक्षादिषु भीम आसीत् ॥ १ ॥ स्त्रीधर्मसंशासनभृत्यकोशरक्षाव्ययादौ गुणदोषचिन्तने । अन्तःपुरस्थस्य जनस्य कृष्णा ह्यासीद्धरेर्धर्मनिदर्शिनी च ॥ २ ॥ बीभत्सुरासीत्परराष्ट्रमर्दने तेनानियम्यांस्तु जरासुतादीन् । सकीचकादींश्च ममर्द भीमस्तस्यैव ते बलतो नित्यभीताः ॥ ३ ॥ राष्ट्रेषु भीमेन विमर्दितेषु जिताश्च युद्धेषु निरुद्यमास्ते । बभूवुरासीद्धरिधर्मनिष्ठः प्रायेण लोकश्च तदीयशासनात् ॥ ४ ॥ आजीविनां वेतनदस्तदाऽऽसीन्माद्रीसुतः प्रथमोऽथ द्वितीयः । सन्धानभेदादिषु धर्मराजपश्चाच्च खड्गी स बभूव रक्षन् ॥५॥ धृष्टद्युम्नस्तत्र सेनाप्रणेता शक्रप्रस्थे नित्यमास्तेऽतिहार्दात् । विशेषतो भीमसखा स आसीद्राष्ट्रं चैषां सर्वकामैः सुपूर्णम् ॥६॥ नावैष्णवो न दरिद्रो बभूव न धर्महानिश्च बभूव कस्यचित् । तेषां राष्ट्रे शासति भीमसेने न व्याधितो नापि विपर्ययान्मृतिः ॥ ७ ॥ युधिष्ठिरं यान्त्यथ दर्शनोत्सुकाः प्रतिग्रहायाप्यथ याजनाय । कार्यार्थिनो नैव वृकोदरेण कार्याणि सिध्यन्ति यतोऽखिलानि ॥ ८ ॥ गन्धर्वविद्याधरचारणाश्च सेवन्त एतान्सततं समस्ताः । यथा सुरेन्द्रं मुनयश्च सर्वे आयान्ति देवा अपि कृष्णमर्चितुम् ॥ ९ ॥ तेषां राष्ट्रे कार्तयुगा हि धर्माः प्रवर्तिता एव ततोऽधिकाश्च । वृद्धिश्च तस्मादधिका सुवर्णरत्नाम्बरादेरपि सत्यसम्पदाम् ॥ १० ॥



अथोपयेमे शिशुपालपुत्रीं युधिष्ठिरो देवकीं नाम पूर्वाम् । स्वीयां भार्यां यत्सहजो धृष्टकेतुरनुह्लादस्सवितुश्चांशयुक्तः ॥ ११ ॥ तस्यां सुहोत्रो नामतः पुत्र आसीद्यश्चित्रगुप्तो नाम पूर्वं सुलेखः ।

कृष्णा सैवाप्यन्यरूपेण जाता काशीशपुत्री यां प्रवदन्ति कालीम् ॥ ॥ १२ ॥ सा केवला भारती नान्यदेव्यस्तत्राविष्टास्तत्कृते काशिराजः । स्वयंवरार्थे नृपतीनाजुहाव सर्वांस्तेऽपि ह्यत्र हर्षात्समेताः ॥ १३ ॥ तेषां मध्ये भीमसेनांस एषा मालामधात्तत्र जरासुताद्याः । क्रुद्धा विष्णोराश्रितानां क्षि(नाक्षि)पन्त आसेदुरुच्चैः शिवमास्तुवन्तः ॥ १४ ॥ पूर्वं वाक्यैर्वैदिकैस्तान्स भीमो जिग्ये तर्कैः साधुभिः सम्प्रयुक्तैः । वेदा ह्यदोषा इति पूर्वमेव संसाधयित्वैव सदागमैश्च ॥ १५ ॥ वेदवाक्यं शैवशास्त्राणि चाहुर्वेदोज्झितानां बहुलां च निन्दाम् । तथा शाक्तेयस्कान्दसौरादिकानां तत्रैवोक्तं छन्दसां वैष्णवत्वम् ॥१६॥ विष्णोराधिक्यं तानि शास्त्राणि चाहुः शिवादिभ्यः कुत्रचिन्नैव वेदे । विष्णूत्कर्षः कथितो बौद्धपूर्वाश्चाहुर्विष्णुं परमं सर्वतोऽपि ॥ १७ ॥ लोकायताश्च क्वचिदाहुरग्र्यं विष्णुं गुरुं सर्ववरं बृहस्पतेः । सर्वागमेषु प्रथितोऽत एव विष्णुः समस्ताधिक एव मुक्तिदः ॥१८॥ तेष्वागमेष्वेव परस्परं च विरुद्धता ह्यन्यपक्षेषु भूपाः । प्रत्यक्षतश्चात्र पश्यध्वमाशु बलं बाह्वोर्विष्णुपदाश्रयस्य ॥ १९ ॥ पूर्वं हि गङ्गा मम विष्णुपूजाविघ्नार्थमायाद्वामकरेण सा मे । नुन्ना परस्ताद्बहुयोजनं गता पुरे कुरूणां शिव आगतस्तदा ॥ २० ॥ स व्याघ्ररूपी कपिलात्मकामुमां परीक्षयन्हन्तुमिवाद्रवद्द्रुतम् । स मे युद्धे विजितो मूर्च्छितश्च गदाप्रहारादास लिङ्गान्तरस्थः ॥ २१ ॥ व्याघ्रेश्वरं नाम लिङ्गं पृथिव्यां ख्यातं तदा तद्वदन्यत्र युद्धम् । तीरे गोमत्या हैमवते गिरौ हि जितस्तत्राप्यास शार्दूललिङ्गम् ॥ २२ ॥ एवं प्रत्यक्षे विष्णुपदाश्रयस्य बलाधिक्ये किमु वक्तव्यमत्र । विष्णोराधिक्ये क्षत्रियाणां प्रमाणं बलं विप्रे ज्ञानमेवेति

चाहुः ॥ २३ ॥ मया केदारे विप्ररूपी जितश्च रुद्रोऽविशल्लिङ्गमेवाशु भीतः । ततः परं वेदविदामगम्यतां शापं प्रादाच्छङ्करो व्रीडितोऽत्र ॥ ॥ २४ ॥ एवं प्रत्यक्षे विष्णुबले प्रतीपं मनो यस्य ह्युत्तरं स ब्रवीतु । क्रोधाधिकश्चेत्क्षिप्रमायातु योद्धुमित्युक्तास्तेऽभ्या(ह्या)ययुरात्तशस्त्राः ॥ ॥ २५ ॥ विद्राव्य तान्बाणसङ्घैः समस्ताञ्जरासुतं गदया पोथयित्वा । बाहुभ्यां चैनं परिगृह्याशु विष्णोः पदोत्थायां प्राक्षिपद्देवनद्याम् ॥२६॥ स व्रीडितः प्रययौ मागधांश्च भूपैः समेतो भीमसेनो रथं स्वम् । आरुह्य काशीश्वरपूजितश्च ययौ काल्या शक्रसनामकं पुरम् ॥ २७ ॥ तस्यां त्रिलोकाधिकरूपसद्गुणैरासंमितायां रममाणः सुतं च । शर्वत्रातं नामाजनयत्पुरा यः समानवायुर्बलवीर्ययुक्तः ॥ २८ ॥

कृष्णोऽपि गत्वा द्वारवतीं सरामः सत्यापितुर्वधकर्तारमेव । शतधन्वानं हन्तुमैच्छत्स चैव ययाचेऽक्रूरं कृतवर्मानुयुक्तम् ॥ २९ ॥ तावब्रूतां सर्वलोकैककर्तुर्नावां विरोधं मनसाऽपि कुर्वः । कृष्णस्य सर्वेशितुरित्यनूक्त आरुह्य चाश्वीं भयतः पराद्रवत् ॥ ३० ॥ अन्वेव तं कृष्णरामौ रथेन यातौ शतं योजनानां दिनेन । गत्वा मृतायां बडवायां पदैव सम्प्राद्रवत्कृष्ण एनं पदाऽगात् ॥ ३१ ॥ छित्त्वा शिरस्तस्य चक्रेण कृष्णो जानन्नक्रूरे मणिमेतेन दत्तम् । अप्यज्ञवल्लोकविडम्बनाय परीक्ष्य वासोऽत्र नेत्याह रामम् ॥ ३२ ॥ अविश्वासात्स तु सक्रोध एव ययौ विदेहानवसत्पञ्च चाब्दान् । जानन्पार्थेभ्योऽहार्यतां केशवस्य वशीकर्तुं धार्तराष्ट्रो बलं गात् ॥ ३३ ॥ बभूव शिष्योऽस्य तथा गदायामसन्निधानं केशवस्य प्रतीक्षन् । तदा ययाचे भगिनीं च तस्य स च प्रतिज्ञामकरोत्प्रदाने ॥३४॥ ज्येष्ठं ह्येनं केशवो नातिवर्तेदित्येव मेने धार्तराष्ट्रः स तस्मात् । जग्राह हस्तं दक्षिणं सत्यहेतोर्ददौ च रामः करमस्मै हलाङ्कम् ॥ ३५ ॥ रूपेण तस्या मोहितो धार्तराष्ट्रो विशेषतः कृष्णरामौ भगिन्याः । स्नेहाद्वशं यास्यत इत्यगृह्णाद्धस्तं हलाङ्कं हलिनो



रिपुघ्नम् ॥ ३६ ॥ जाता देवक्यां सा सुभद्रेति नाम्ना भद्रारूपेणानकदुन्दुभेस्ताम् । कृत्वा पुत्रीं रोहिणीं स्वामरक्षत्पूर्वं तु याऽसीत्त्रिजटैव नाम्ना ॥ ३७ ॥ सीतायाः प्राक्तित्यशुश्रूषणात्सा बभूव विष्णोर्भगिनी प्रिया च । उमाऽऽवेशाद्रूपगुणोपपन्ना पद्मेक्षणा चम्पकदामगौरी ॥३८॥ एतत्कृत्वा धृतराष्ट्रात्मजः स ययौ कुरून्निवसत्यत्र रामे । कृष्णोऽक्रूरं विवसन्तं भयेन सहार्दिक्यं चानयित्वा जगाद ॥ ३९ ॥ आनीय रामं च समस्तसात्वतां यदाऽवादीत्केशवः सन्निधाने । मणिस्त्वय्यास्ते दर्शयेत्येव भीतस्तदाऽक्रूरोऽदर्शयद्रत्नमस्मै ॥४०॥ अव्याजतामात्मनो दर्शयित्वा हलायुधे केशवस्तस्य जानन् । रत्नाकाङ्क्षामुग्रसेनस्य चैव मातुश्च साम्बस्य पुनर्बभाषे ॥ ४१ ॥ आस्तामक्रूरे मणिरन्यैरधार्यः सदा यज्ञाद्दानपतेः स धार्यः । न सत्या कृष्णावाञ्छितं किञ्चिदिच्छेत्तथापि तस्या योग्य इत्याह कृष्णः ॥ ४२ ॥ लब्ध्वा रत्नं दानपतिः सदैव सन्दीक्षितोऽभूद्यज्ञकर्मण्यतन्द्रः । प्रदर्श्य कृष्णो हलिने रत्नमेतच्छक्रप्रस्थं पाण्डवस्नेहतोऽगात् ॥ ४३ ॥

वसन्नजस्तत्र बहूंश्च मासान्सफल्गुनोऽयान्मृगयां कदाचित् । हत्वा मृगान्यमुनातीरसंस्थः सोऽन्यां कालिन्दीं ददृशे तत्स्वसारम् ॥ ४४ ॥ सा सूर्यपुत्री यमुनानुजाता तपश्चरन्ती कृष्णपत्नीत्वकामा । पृष्टाऽर्जुनेनाह समस्तमेतत्पत्नीं च तां जगृहे वासुदेवः ॥ ४५ ॥ ततो गत्वा नग्नजितो गृहं च स्वयंवरे सप्तवृषानगृह्णात् । सर्वैरग्राह्यानसुरान्वरेण शिवस्य यैर्निर्जिता भूमिपालाः ॥ ४६ ॥ ततो नीलां तस्य सुतां च लेभे पूर्वं नीला गोपकन्यापि याऽसीत् । सा देहेऽस्याः प्राविशत्पूर्वमेषा यस्मादेका द्विविधा सम्प्रजाता ॥ ४७ ॥ पितृष्वसुर्मित्रविन्दा सुता च कृष्णे मालामासृजद्राजमध्ये । विन्दानुविन्दौ भ्रातरावेव तस्या न्यपेधतां धार्तराष्ट्रार्थमुग्रौ ॥ ४८ ॥ जित्वाऽवन्त्यौ नृपतींश्चैव सर्वानादाय तां प्रययौ वासुदेवः । पितृष्वसुस्तनयां च द्वितीयां भद्रां दत्तामग्रही-

र्भ्रातृभिः सः ॥ ४९ ॥ विश्वेषां देवानामवतारा हि पञ्च ते कैकया
भ्रातरोऽस्या हरेश्च। भक्ता नित्यं पाण्डवानां च तातो ह्येषां वशे
शैब्यनामर्भुरग्रे ॥ ५० ॥ स्वयंवरो लक्षणायास्तथाऽऽसीद्यथा द्रौपद्या
लक्ष्यवेधात्मकः सः। मद्रेषु तस्याश्च पिता पिनाकं स्वयंवरार्थं जगृहे
गिरीशात् ॥ ५१ ॥ लक्ष्यं च तत्सर्वतश्छन्नमेव द्वारं च तस्याप्युपरि
स्म लक्ष्यात। छिन्नेषुणा पातनीयं च तद्धि द्रौपद्यर्थात्तदशक्यं
ततोऽलम् ॥ ५२ ॥ तत्राजग्मुर्मागधाद्याश्च सर्वे पार्था अपि द्रष्टुमिहा-
भ्युपाययुः। दुर्योधनाद्याश्च ससूतपुत्राः सज्जीकर्तुं धनुरप्युत्सहं ते ॥
॥५३॥ केचिन्निपेतुर्धनुषैव ताडिता न वै केचिच्चालयितुं च शेकुः।
दुर्योधनो मागधः सूतपुत्रः सज्जं कृत्वा लक्ष्यवीक्षां न शेकुः ॥ ५४ ॥
धनञ्जयः स्वात्मबलं प्रकाशयन्सज्जङ्कृत्वा धनुरक्षैच्च लक्ष्यम्। नैवाददे
बाणमनिच्छयैव प्राप्यां जानन्केशवेनैव तां च ॥ ५५ ॥ भीमश्चापं
लक्ष्यमप्येतदत्र द्रष्टुं च नैवैच्छदरीन्द्रधारिणः। योग्ये कर्मण्यायतं-
श्चापराधी स्यामित्यज्ञः पश्यमानो महात्मा ॥ ५६ ॥ कृष्णश्च तच्चाप
मधिज्यमाशु कृत्वाऽचिन्त्यश्छिन्नबाणेन लक्ष्यम्। अपातयद्दुन्दुभयश्च
दिव्या नेदुः प्रसूनं ववृषुः सुराश्च ॥ ५७ ॥ कृष्णे ब्रह्माद्यैस्तूयमाने
नरेन्द्रकन्या मालां केशवांसे निधाय। तस्थावुपास्याथ सर्वे नरेन्द्रा
युद्धायागुः केशवं ह्यात्तशस्त्राः ॥ ५८ ॥ विद्राव्य तान्मागधादीन्स
कृष्णो भीमार्जुनाभ्यां सहितः पुरीं स्वाम्। ययावेता अष्टमहामहिष्यः
कृष्णस्य दिव्या लोकसुन्दर्य इष्टाः ॥ ५९ ॥ भैष्मी सत्या चैकतनु-
र्द्विधैव जाता भूमौ प्रकृतिर्मूलभूता। तयैवान्याः सर्वदानुप्रविष्टास्तासां
मध्ये जाम्बवती प्रधाना ॥ ६० ॥ रामेण तुल्या जाम्बवती प्रियत्वे
कृष्णस्यान्याः किञ्चिदूनाश्च तस्याः। यदाऽऽवेशो बहुलः स्याद्रमाया-
स्तदा तासु प्रीयते केशवोऽलम् ॥ ६१ ॥ यदाऽऽवेशो ह्रासमुपैति तत्र
प्रद्युम्नतो विंशगुणाधिकाः स्युः। अनादितस्ताः केशवान्नान्यसंस्था रेमे



ताभिः केशवो द्वारवत्याम् ॥ ६२ ॥
एवं कृष्णे द्वारकामध्यसंस्थे गिरिं भूपा रैवतकं समाययुः।
दुर्योधनाद्याः पाण्डवाश्चैव सर्वे नानादेश्या ये च भूपालसङ्घाः ॥ ६३ ॥
आत्मानं तान्द्रष्टुमभ्यागतान्स कृष्णो गिरौ रैवतके ददर्श। नमस्कृते
सर्वनरेन्द्रमुख्यैः कृष्णे वैदर्भ्या सह दिव्यासनस्थे ॥ ६४ ॥ एत्या-
काशान्नारदः कृष्णमाह सर्वोत्तमस्त्वं त्वादृशो नास्ति कश्चित्। इत्याश्चर्यो
धन्य इत्येव शब्दद्वये तूक्ते वासुदेवस्तमाह ॥ ६५ ॥ दक्षिणाभिः
साकमित्येव कृष्णं पप्रच्छुरेतत्किमिति स्म भूपाः। नारायणो मुनिमूचे
वदेति शृणुध्वमित्याह स नारदोऽपि ॥ ६६ ॥ कूर्मो दृष्टो विष्णुपद्यां
मयोक्तस्त्वमुत्तमो नास्त्यधिकस्तवेति। ऊचे गङ्गामुत्तमां सा जलेश-
मुमामूचे पृथिवीनामिकां सः ॥ ६७ ॥ या मादृशा देवतास्सर्वशस्ता
धृतास्तया प्रथितत्वात्पृथिव्या। शिवं शेषं गरुडं चाह साऽपि परावना-
त्पर्वतनामधेयान् ॥ ६८ ॥ तैरेवाहं मत्समाश्चैव देव्यो ध्रियन्त इत्येव
तमूचिरेऽथ। ब्रह्माणमेवोत्तममाह सोऽपि वेदात्मिकां प्रकृतिं विष्णु-
पत्नीम् ॥ ६९ ॥ सैका देवी बहुरूपा बभाषे युक्ता यदाहं ज्ञेन
नारायणेन। यज्ञक्रियामानिनी यज्ञनाम्नी तदोत्तमा तत्प्रवेशात्तदाख्या ॥
॥७०॥ विष्णवाविष्टा यज्ञनाम्नी तदङ्कस्थिता सोचे केशवो ह्युत्तमोऽलम्।
न तत्समश्चाभ्यधिकः कुतः स्यादृषे सत्यं नान्यथेति स्म भूयः ॥ ७१ ॥
तयोक्तोऽहं नावतारेषु कश्चिद्विशेष इत्येव यदुप्रवीरम्। सर्वोत्तमोऽसी-
त्यवदं स चाह न केवलं मेऽङ्कगायाः श्रियोऽहम् ॥ ७२ ॥ सदोत्तमः
किन्तु यदा तु सा मे वामार्धरूपा दक्षिणानामधेया। यस्मात्तस्या
दक्षिणतः स्थितोऽहं तस्मान्नाम्ना दक्षिणेत्येव सा स्यात् ॥ ७३ ॥ सा
दक्षिणामानिनी देवता च सा च स्थिता बहुरूपा मदर्धा। वामार्धो मे
तत्प्रविष्टो यतो हि ततोऽहं स्यामर्धनारायणाख्यः ॥ ७४ ॥ तदाप्यस्या
उत्तमोऽहं सुपूर्णो न मादृशः कश्चिदस्त्युत्तमो वा। इत्येवावादी-

दक्षिणाभिः सहेति सर्वोत्तमत्वं दक्षिणानां स्मरन्सः ॥ ७५ ॥ ताभिश्चैताभिर्दक्षिणाभिः समेताद्धरिष्ठोऽहं जगतः सर्वदैव । मत्सामर्थ्यान्नैव चानन्तभागो दक्षिणानां विद्यते नारदेति ॥ ७६ ॥ उक्तं कृष्णेनाप्रतिमेन भूपा अन्योत्तमत्वं दक्षिणानां च शश्वत् । सेयं भैष्मी दक्षिणा केशवोऽयं तस्याः श्रेष्ठः पश्यत राजसङ्घाः ॥ ७७ ॥ प्रत्यक्षं वो वीर्यमस्यापि कुन्त्या युद्धेऽर्थितः केशवो वीर्यमस्यै । अदर्शयत्पाण्डवान्धार्तराष्ट्रान्भीष्मद्रोणद्रौणिकृपान्सकर्णान् ॥ निरायुधांश्चक्र एकक्षणेन लोकश्रेष्ठान्दैवतैरप्यजेयान् ॥७८॥ व्रतं भीमस्यास्ति नैवाभिकृष्णमियामिति स्माज्ञया तस्य विष्णोः । चक्रं रथस्याग्रहीत्स प्रणम्य कृष्णं स तं केशवोऽपाहरच्च ॥७९॥ एवं क्रीडन्तोऽप्यात्मशक्त्या प्रयत्नं कुर्वन्तस्ते विजिताः केशवेन । ततः सर्वे नेमुरस्मै पृथा च सविस्मया वासुदेवं ननाम ॥ ८० ॥ एवं विधान्यद्भुतानीह कृष्णे दृष्टानि वः शतसाहस्रशश्च । तस्मादेष ह्यद्भुतोऽत्युत्तमश्चेत्युक्ता नेमुस्तेऽखिला वासुदेवम् ॥ ॥८१॥ वाय्वाज्ञया वायुशिष्यः स सत्यमित्याद्युक्त्वा नारदो रुक्मिणीं च । स्तुत्वा पुष्पं पारिजातस्य दत्वा ययौ लोकं क्षिप्रमब्जोद्भवस्य ॥ ८२ ॥

साक्षात्सत्या रुक्मिणीत्येकसंविद्द्विधा भूता नात्र भेदोऽस्ति कश्चित् । तथापि सा प्रमदानां स्वभावप्रकाशनार्थं कुपितेवास सत्या ॥ ॥८३॥ साकं रुक्मिण्या राजमध्ये प्रवेशात्स्तवादृषेः पुष्पदानाच्च देवीम् । कोपाननं दर्शयन्तीमुवाच विडम्बनार्थं कामिजनस्य कृष्णः ॥ ८४ ॥ दाताऽस्म्यहं पारिजातं तरुं त इत्येव तत्राथागमद्वासवोऽपि । सर्वं देवै-भौंमजितोऽप्यदित्यास्तेनैवाथो कुण्डलाभ्यां हृताभ्याम् ॥ ८५ ॥ तदैवागुर्मुनयस्तेन नुन्ना बदर्यास्ते सर्व एत्याशु कृष्णम् । ययाचिरे भौमवधाय नत्वा स्तुत्वा स्तोत्रैर्वैदिकैस्तान्त्रिकैश्च ॥ ८६ ॥ इन्द्रेण देवैः सहितेन याचितो विप्रैश्च सस्मार विहङ्गराजम् । आगम्य नत्वा पुरतः



स्थितं तमारुह्य सत्यासहितो ययौ हरिः ॥८७॥ नित्यैव या प्रकृतिः स्वेच्छयैव जगच्छिक्षार्थं द्वादशीं भीमसंज्ञाम् । उपोष्य बभ्रे कोटिधाराजलस्य विष्णोः प्रीत्यर्थं सैव हि सत्यभामा ॥ ८८ ॥ तया युक्तो गरुडस्कन्धसंस्थो दूरानुयातो वज्रभृताऽप्यनुज्ञाम् । दत्वाऽमुष्मै प्रययौ वायुजुष्टामाशां कृष्णो भौमवधे धृतात्मा ॥ ८९ ॥ भौमो ह्यासीद्ब्रह्मवरादवध्यो न शस्त्रभृज्जीयस इत्यमुष्मै । दत्तो वरो ब्रह्मणा तद्वदेव तस्यामात्यानां तद्वदवध्यता च ॥ ९० ॥ भौमेन जेयत्वमपि ह्यमीषां दत्तं भौमाय ब्रह्मणा क्रोडरूपात् । विष्णोर्जातायास्य दुर्गं च दत्तं प्राग्जोतिषं नाम पुरं समस्तैः ॥ ९१ ॥ आसीद्बाह्ये गिरिदुर्गं तदन्तः पानीयदुर्गं मौरवं पाशदुर्गम् । तस्याप्यन्तः क्षुरधारोपमं तत्पाशाश्च ते षट्सहस्राः सुघोराः ॥९२॥ अभेद्यत्वमरिभिरतार्यता च दत्ता दुर्गाणां ब्रह्मणाऽऽराधितेन ॥ ९३ ॥ तस्यामात्याः पीठमुरौ निशुम्भहयग्रीवौ पञ्चजनश्च शूराः । सङ्कल्प्य तान्लोकपालानहं च ब्रह्मेत्यद्धा भाषमाणः स आस्ते ॥ ९४ ॥ हन्तुं कृष्णो नरकं तत्र गत्वा गिरिं दुर्गं गदया निर्बिभेद । वायव्यास्त्रेणोदकं शोषयित्वा चकर्त खड्गेन मुरस्य पाशान् ॥ ९५ ॥ अथाभिपेतुर्मुरपीठौ निशुम्भहयग्रीवौ पञ्चजनश्च शूराः । ताञ्छैलशस्त्रास्त्रशिलाभिवर्षिणश्चक्रे व्यसूंश्चक्रनिकृत्तकन्धरान् ॥ ९६ ॥ तेषां सुताः सप्त सप्तोरुवीर्या वरादवध्या गिरिशस्याभिपेतुः । तानस्त्रशस्त्राभिमुचः शरोत्तमैः समर्पयामास च मृत्यवेऽच्युतः ॥ ९७ ॥ हत्वा पञ्चत्रिंशतो मन्त्रिपुत्राञ्जगाम भौमस्य सकाशमाशु । श्रुत्वा भौमः कृष्णमायान्तमारादक्षौहिणीस्त्रिंशकेनाभ्यपात्तम् ॥ ९८ ॥ जघ्ने सेनां गरुडः पक्षपातैः पादं शेषं केशवः सायकौघैः । अथाससादाशु भौमोऽच्युतं तं मुञ्चन्बाणानस्त्रसम्मन्त्रितान्द्राक् ॥ ९९ ॥ विव्याध तं केशवः सायकौघैर्भौमः शतघ्नीं ब्रह्मदत्तामुमुञ्चत् ॥ १०० ॥ अच्छेद्योऽभेद्यो नित्यसंवित्सुखात्मा नित्याव्ययः

पूर्णशक्तिः स कृष्णः । निगीर्य तां देववरः शतघ्नीं नित्याश्रान्तोऽ-
दर्शयच्छ्रान्तवच्च ॥ १०१ ॥ बहून्वरान्ब्रह्मणोऽन्येष्वमोघान्मोघीकृता-
न्वीक्ष्य परात्परेशः । भवेत्कथश्चिद्बहुमानेन युक्त इत्येव कृष्णोऽदर्शय-
च्छ्रान्तवत्स्वम् ॥ १०२ ॥ तदा दृष्टं नरकं वीक्ष्य देवी सत्याऽऽददे
कार्मुकं शार्ङ्गसंज्ञम् । चकार तं यतमानं च भौमं निरायुधं विरथं च
क्षणेन ॥१०३॥ आलिङ्ग्य कृष्णः सत्यभामां पुनश्च रथान्तरे संस्थितं
भौममुग्रम् । सृजन्तमस्त्राण्यरिणा निकृत्तस्कन्धं मृत्योरर्पयामास
शीघ्रम् ॥ १०४ ॥ स मन्त्रिभिर्मन्त्रिपुत्रैः समेतो जगाम कृष्णावज्ञ-
याऽन्धन्तमश्च । तदाविष्टो वायुरगाच्च कृष्णमन्तःपुरं प्राविशत्सत्ययेशः ॥
॥१०५॥ तदा भूमिः पञ्चभूतावरा या यस्यां जज्ञे नरकः श्रीवराहात् ।
मूलप्रकृत्यैव भूम्या नितान्तमाविष्टा या साऽगमत्कृष्णपादौ ॥ १०६ ॥
साऽदित्यास्ते कुण्डले पादयोश्च निधाय पौत्रं भगदत्तसंज्ञम् । समर्पया-
मास तस्याभिषेकं प्राग्जोतिषे कारयामास कृष्णः ॥ १०७ ॥ संस्थाप्य
तं सर्वकिरातराज्ये भौमाहृतं वैश्रवणाद्बलेन । शिवेन दत्तं धनदायाति-
सत्त्वं भगदत्तेऽधात्सुप्रतीकं रमेशः ॥१०८॥ करीन्द्रमेकं तं निधायैव
तस्मिन्कृत्वा प्रसादं च वसुन्धरायाः । चतुर्दन्तान्षट्सहस्रान्करीन्द्रा-
न्पयोऽब्धिजान्प्राहिणोद्वारवत्यै ॥ १०९ ॥ नराधिपान्देवगन्धर्वनागा-
ञ्जित्वाऽऽनीतं हेमरत्नोच्चराशिम् । शतद्वयं योजनानां समृद्धं समन्ता
प्राहिणोत्स्वां पुरीं सः ॥ ११० ॥ महावीर्यैर्नैर्ऋतै राक्षसेन्द्रैर्भौमानीतै
र्निर्ऋतिं योधयित्वा । स प्राहिणोत्सर्वरत्नोच्चराशिं गजांश्च नाराय
आदिदेवः ॥ १११ ॥ तत्रापश्यत्कन्यका भूमिपानां भौमानीताः
तान्विजित्य । ह्यष्टौ सहस्राणि शतं च रूपशीलोदारा अ
सद्व्रतस्थाः ॥ ११२ ॥ काश्चित्तत्रासन्देवगन्धर्वकन्यास्तासां प्र
त्वष्टृपुत्री कशेरुः । पुत्रा अग्नेः पूर्वमासंश्च तेऽथ स्त्रीत्वप्राप्त्यै
तपश्च ॥ ११३ ॥ भार्यात्वार्थे वासुदेवस्य योषित्तनुं तासामि



समीरः । अदाद्वरं तपसाऽऽराधितः सन्स्त्रीभूतास्ते बदरीं सम्प्रजग्मुः ॥
॥ ११४ ॥ नारायणं तत्र शु(शि)श्रूषमाणाः प्राप्याप्सरस्त्वं राजकुलेषु
जाताः । काश्चित्स्वर्गे ता निशम्यैव कृष्णं वव्रुः पतिं सर्वगुणाभि-
रामम् ॥ ११५ ॥ आजानदेवैः सर्वगुणैः समस्ताः स्वभावतोऽथेन्दिरा-
वेशतोऽतः । गुणाधिकास्ताः शिबिकासु कृष्ण आरोपयित्वा प्राहिणो-
द्वारवत्यै ॥ ११६ ॥ समन्ततो योजनानां शते द्वे प्रवृद्धमिन्द्रस्य स
रत्नपर्वतम् । नित्यामृतस्त्रावि जलेश्वरस्य छत्रं च दोर्भ्यां गरुडे न्यधा-
द्धरिः ॥ ११७ ॥ स्वयं च सत्यासहितः समारुह्तस्स चाश्रमेणैव ययौ
त्रिविष्टपम् । अभिप्रयातोऽखिललोकपालैर्जनार्दनः शक्रगृहं विवेश ॥
॥ ११८ ॥ सम्पूजितः सत्यभामासहायः शक्रेण शच्या सहितेन
सादरम् । ददावदित्या अपि कुण्डले शुभे समस्तदेवैर्मुनिभिश्च
वन्दितः ॥ ११९ ॥ तमासुरावेशवशादजानती सत्यां च सर्वप्रभवौ
जगत्प्रभू । निर्दोषसौख्यैकतनू शुभाशिषस्ताभ्यां ददौ साऽदितिरात्म-
पुत्रवत् ॥ १२० ॥

अथो सदानन्दचिदात्मदेहः स नन्दनोद्यानमजोऽनुरूपया ।
अनन्तशक्तिः सह सत्यभामया विवेश रन्तुं प्रिययाऽखिलेश्वरः ॥१२१॥
तयाऽच्युतोऽसौ कनकावदातया सुकुङ्कुमादिग्धपिशङ्गवाससा । पूर्णेन्दु-
कोट्यौघजयन्मुखाब्जया रेमेऽमितात्मा जगदेकसुन्दरः ॥ १२२ ॥
सर्वर्तुनित्योदितसर्ववैभवे सुरत्नचामीकरवृक्षसद्मने । सदैव पूर्णेन्दु-
विराजिते हरिश्चचार देव्या पवनानुसेविते ॥ १२३ ॥ निर्दोष-
विनुरत्र सत्तरुं ददर्श सत्याऽमृतमन्थनोद्भवम् । सा पारिजातं
णिकाञ्चनात्मकं समस्तकामप्रदमार्तिहारिणम् ॥ १२४ ॥ दृष्ट्वैव तं
चन्द्रिकास्फुरन्मुखारविन्दाऽसितलोललोचना । कपोलनिर्भात-
कुण्डला जगाद देवाधिपतिं पतिं सती ॥१२५॥ तरुर्जगज्जीवद
गृहाङ्गणे संस्थापनीयोऽयमचिन्त्यपौरुष । इतीरितस्तां कलशोपम-

स्तनीमालिङ्ग्य देवस्तरुमुद्बबर्ह ॥ १२६ ॥ स तेन वृक्षेण सहैव
केशवस्तया च देव्याऽऽरुहदग्रयपौरुषम् । खगेश्वरं तच्च निशम्य शच्या
प्रचोदितो वासव आगमत्सुरैः ॥ १२७ ॥ तानासुरावेशयुतान्हरेश्च
बलप्रकाशाय समुद्यतान्सुरान् । न्यवारयच्छार्ङ्गशरासनच्युतैर्हरिप्रिया
बाणवरैः समस्तशः ॥ १२८ ॥ निरायुधं वैश्रवणं चकार चिक्षेप
चाब्धौ गरुडो जलेशम् । प्रधानवायोस्तनयं तु वायुं कोणाधिपं वह्नि-
यमादिकानपि ॥१२९॥ निबोध्य शार्ङ्गोत्थरवैः स्वकां तनुमावेशिता-
नामसुरैरगाद्धरिः । ते बोधितास्तेन रणं विसृज्य ययुर्विदित्वा
तमनादिपूरुषम् ॥ १३० ॥ शिवं च शक्रार्थमुपागतं हरिर्व्यद्रावय-
च्छार्ङ्गविनिःसृतैः शरैः । सवाहनो दूरतरे निपातितो गरुत्मता शम्भु-
रगाच्छराहतः ॥ १३१ ॥ विद्राविते बाणगणैश्च शौरिणा हरे हरौ
वज्रमवासृजद्द्रुतम् । शक्रोऽग्रहीत्तं प्रहसञ्जनार्दनः करेण वामेन स
चापजग्मिवान् ॥ १३२ ॥ अपाहसत्तं जगदेकसुन्दरी हरिप्रियाऽथो
जगदेकमातरम् । उवाच शक्रो जगतां जनित्रे प्रदर्शयामो वयमात्म-
शैशवम् ॥ १३३ ॥ जगाम चाथो शरणं जनार्दनं सुरैर्वृतो देवपतिः
क्षमापयन् । शृङ्गं च दत्वा मणिपर्वतस्य प्रणम्य देव्या सहितं
जगद्गुरुम् ॥ १३४ ॥ ययाच एनं परिरक्षणाय शचीपतिः केशव-
मर्जुनस्य । जगाद कृष्णोऽपि धरातले स्थिते न मय्यमुं कश्चन जेष्य-
तीति ॥१३५॥ तमर्जुनार्थं वरमाप्य वासवः पुनःपुनश्चक्रधरं प्रणम्य ।
प्रसन्नदृष्ट्या हरिणाऽभिवीक्षितो ययौ महाभागवतः स्वमालयम् ॥१३६॥
कृष्णोऽप्यनुज्ञाप्य पुरन्दरं पुरीं निजां व्रजन्नभ्यधिकं व्यरोचत । किरीट-
धारी चलकुण्डलोल्लसन्मुखाम्बुजः पीतपटः सकौस्तुभः ॥ १३७ ॥
विरोचमानस्य सदा जगत्प्रभोर्न वै विशेषः क्वचिदच्युतस्य । तथापि
तत्स्मारयितुं वचो भवेदपेक्ष्य चाल्पज्ञमतिं पुराणगम् ॥ १३८ ॥

प्रविश्य चेशः स्वपुरीं स यादवैः सुपूजितोऽन्तःपुरमेत्य चाङ्गणे ।



तरुं प्रियाया न्यदधद्गृहस्य सहैव शृङ्गेण च रत्नसद्गिरेः ॥ १३९ ॥
प्रदाय रत्नानि च सर्वसात्वतां यथेष्टतस्ता अपि कन्यकाः प्रभुः ।
उद्वाह्य रेमे पृथगेव रत्नप्रासादसंस्थाभिरनन्तरूपः ॥ १४० ॥ पृथ-
क्पृथक्तासु दशैव पुत्रका न्यधत्त कन्यामपि सर्वशः प्रभुः । प्रद्युम्न-
साम्बावपि भानुचारुदेष्णौ च तेषां नितरां गुणाधिकाः ॥ १४१ ॥
विवस्वतो योऽवरजोऽदितेः सुतः ख्यातश्च नाम्ना सवितेति कृष्णात् ।
जातः स सत्याजठरे(ऽत्र)सनाम्ना भानुस्तु भैष्म्या अपि चारुदेष्णः ॥
॥ १४२ ॥ स चारुदेष्णोऽपि हि विघ्नराजो येऽन्ये च कृष्णस्य सुताः
समस्ताः । ते चैव गीर्वाणगणास्तथान्ये ये द्वारकायां निवसन्ति
सर्वे ॥ १४३ ॥

तस्यां समस्तैरभिपूज्यमाने देवैः स्वपुर्यां निवसत्यनन्ते । ययौ
कदाचित्स तु रौक्मिणेयः साम्बेन साकं भुजगेन्द्रलोकम् ॥ १४४ ॥
अज्ञानतस्तैरभियोधितः स जिगाय सर्वानपि वासुकिं च । विद्राव्य
बाणैरथ रत्नसञ्चयान्समाददे नेमुरमुं ततस्ते ॥ १४५ ॥ तैः पूजितः
साम्बसहाय आशु मयं च मायाविनमस्त्रवर्षैः । विजित्य रुन्धानमनेन
पूजितो ययौ रथेनाम्बरगेन नाकम् ॥ १४६ ॥ तत्रैव कृष्णेन तु
पारिजाते हृते जयन्तं प्रजिगाय चाजौ । संस्पर्धयाऽऽयातममुष्य चानुजं
साम्बोऽजयदृषभं नाम शस्त्रैः ॥ १४७ ॥ अस्त्राणि तावस्त्रवरैर्निहत्य
तयोश्च ताभ्यां प्रतिदग्धयानौ । विद्राव्य तौ बाणवरैः सुरेन्द्रसम्पूजितौ
ययतुर्विद्यया खे ॥ १४८ ॥ स विद्यया साम्बमुदूह्य रत्या प्रदत्तया
रुक्मिणिनन्दनः पुरीम् । ययौ ततो नारद आगमद्द्रुतं ज्ञातुं हरेर्बहु-
भार्यासु वृत्तिम् ॥ १४९ ॥ तं व्यष्टसाहस्रगृहेषु दृष्ट्वा तावत्स्वरूपैर्विह-
रन्तमेकम् । सुविस्मितः प्रययौ तं प्रणम्य शक्रप्रस्थं पूजितश्चात्र
पार्थैः ॥ १५० ॥

स आज्ञया ब्रह्मण आह कृष्णां क्रमात्कर्तुं भीम एवैकसंस्थाम् ।

अन्या देवीः स्वापयित्वा शरीरे तस्या भारत्याः पूर्णभोगार्थमेव ॥१५१॥ सुन्दोपसुन्दौ भ्रातरौ ब्रह्मवाक्यात्परस्परादन्यतो नैव वध्यौ । तिलोत्तमार्थे निहतौ परस्परं तयोर्वधार्थे सृष्टया तेन दैत्यौ ॥ १५२ ॥ अतः पृथग्वत्सरतो भवत्सु क्रमात्कृष्णा तिष्ठतां योऽन्ययुक्ताम् । पश्येद्योऽसौ वत्सरं तीर्थयात्रां कुर्यादिति स्माथ चक्रुस्तथा ते ॥ १५३ ॥

ततः कदाचिद्धर्मराजेन युक्तां शस्त्रागारे विप्रगोरक्षणार्थम् । शस्त्रादित्सुः फल्गुनोऽद्राक्ससशस्त्रैर्दस्यून्हत्वा तीर्थयात्रोन्मुखोऽभूत् ॥ ॥१५४॥ युधिष्ठिराद्यैः सौहृदाद्वारितोऽपि ययौ सत्यार्थं स कदाचिद्द्युनद्याम् । कुर्वन्स्नानं मायया नागवध्वा हृतो लोकं भुजगानां क्षणेन ॥ १५५ ॥ तस्याः पिता गरुडेनात्तपत्युः पुत्राकाङ्क्षी चोदयामास पार्थम् । संवत्सरं ब्रह्मचर्ये तु पार्थैः कृष्णाहेतोः समये साधुबद्धम् ॥ १५६ ॥ पुनः पुनर्याचमानः स पार्थः पुत्रार्थमस्या भुजगेन तस्याम् । उत्पादयामास सुतं कुजांशं नाम्नेरावन्तं वरुणावेशयुक्तम् ॥ ॥ १५७ ॥ गुणाः पितुर्मातृजातिः सुतानां यस्मात्सतां प्रायशस्तेन नागः । बली च पार्थप्रथमोद्भवत्वान्मायाविदस्त्री च सुधार्मिकश्च ॥ ॥१५८॥ ततो ययावर्जुनस्तीर्थयात्राक्रमेण पाण्ड्यांस्तनयोऽस्य मात्रा । सह त्यक्तो भुजगैर्देवलोके सम्पूजितो न्यवसद्दैवतैश्च ॥ १५९ ॥ सत्यात्ययान्नैव दोषोऽर्जुनस्य तेजीयसश्चिन्तनीयः कथञ्चित् । श्रेष्ठापराधान्नान्यदोषस्य लेपस्तेजीयसां निर्णयोऽयं हि शास्त्रे ॥ १६० ॥ अतिस्नेहाच्चाग्रजाभ्यां तदस्य क्षान्तं सुता पाण्ड्यराजेन दत्ता । संवत्सरान्ते फल्गुनस्यानुरूपा चित्राङ्गदा वीरसेनेन तोषात् ॥ १६१ ॥ स वीरसेनस्त्वष्टुरंशो यमस्याप्यावेशयुक्सा च कन्या शची हि । तारादेहे सूर्यजस्याङ्गसङ्गात्स्वर्गं नागादन्तरिक्षादिहासीत् ॥ १६२ ॥ तेनैव हेतोर्नातिसामीप्यमासीत्तस्याः पार्थे पुत्रिकापुत्रधर्मात् । तस्यां जातो बभ्रुवाहोऽर्जुनेन पूर्वं जयन्तः कामदेवांशयुक्तः ॥ १६३ ॥ पुत्रं वीरं जनयि-



त्वार्जुनोऽतो गच्छन्प्रभासं शापतो ग्राहदेहाः । अमूमुचच्चाप्सरसः स पञ्च ताभिर्गृहीतः प्रविकृष्य तीरम् ॥ १६४ ॥ एवं हि तासां शापमोक्षः प्रदत्तो यदाखिला वो युगपत्सम्प्रकर्षेत् । एकस्तदा निजरूपाप्तिरेवेत्यलं तुष्टेन ब्राह्मणेनानतानाम् ॥ १६५ ॥ विप्रापहासात्कुत्सितयोनितस्ताः कन्यातीर्थे पाण्डवः सम्प्रमोच्य । प्राप्तः प्रभासं वासुदेवानुजां तां शुश्राव रामेण सुयोधनोद्यताम् ॥ १६६ ॥ विचिन्त्य कार्यं यतिरूपं गृहीत्वा कुशस्थलीं प्रययौ तं समीपे । प्राप्तं कृष्णः प्राहसत्संविजानन्सत्यासहायः शयनीयाधिरूढः ॥ १६७ ॥ सर्वज्ञा सा लीलया हासहेतुमपृच्छत्तं सोऽपि तस्यै बभाषे । लीलाभाजौ दर्शनार्थं पुनस्तावगच्छतां रैवतं शैलराजम् ॥ १६८ ॥ आक्रीडोऽसौ भोजवृष्ण्यन्धकानां तत्रापश्यत्केशवः फल्गुनं तम् । स्वसुर्दाने स प्रतिज्ञां रहोऽस्मै चक्रे कृष्णोऽथासदत्सर्ववृष्णीन् ॥ १६९ ॥ दृष्ट्वा गिरौ रौहिणेयो यतीन्द्रवेषं पार्थं ज्ञातियुक्तः प्रणम्य । चक्रे पूजां फल्गुनोऽपि प्रणामं गुणज्येष्ठोऽसीति चक्रे बलाय ॥ १७० ॥ सर्वज्ञं तं वाग्मिनं वीक्ष्य रामः कन्यागारे वर्षकाले निवासम् । सत्कारपूर्वं कारयेत्याह कृष्णं नैवेत्यूचे केशवो दोषवादी ॥ १७१ ॥ युवा बली दर्शनीयोऽतिवाग्मी नायं योग्यः कन्यकाऽऽगारवासम् । इत्युक्तवन्तं राम आहाप्तविद्ये नास्मिञ्छङ्केत्येव लोकाधिनाथम् ॥ १७२ ॥ नास्मन्मते रोचते त्वन्मतं तु सर्वेषां नः पूज्यमेवास्तु तेन । इत्युक्त्वा तं केशवः सोदरायै शुश्रूषस्वेत्याह सन्तं यतीन्द्रम् ॥ १७३ ॥ नित्याप्रमत्ता साधु सन्तोषयेति प्रोक्ता तथा साकरोत्सोऽपि तत्र । चक्रे मासान्वार्षिकान्सत्कथाभिपासं वाक्यं श्रद्दधानो हरेस्तत् ॥ १७४ ॥ संयाचितः फल्गुनेनाह वाक्यं यद्वासुदेवस्तन्न जानाति कश्चित् । ऋते पित्रोर्विपृथोः सात्यकेर्वा सुभद्रां ते प्रददानीति सत्यम् ॥ १७५ ॥ अस्त्रे शस्त्रे तत्त्वविद्यासु चैव शिष्यः शैनेयो वासुदेवेन्द्रसून्वोः । तस्मादस्मै कथयामास कृष्णः

स्वशिष्यत्वाद्विपृथोश्चापि सर्वम् ॥ १७६ ॥ अन्ये सर्वे वासुदेवस्य पार्थान्प्रियान्नित्यं जानमाना अपि स्म । रामेणादिष्टा उद्धवोऽथाहुकाद्या हार्दिक्याद्या नैव दित्सन्ति जिष्णोः ॥१७७॥ दुर्योधने दातुमिच्छन्ति सर्वे रामप्रियार्थं जानमाना हरेस्तत् । अप्यप्रियं राक्षसावेशयुक्तास्तस्मात्सर्वान्वञ्चयामास कृष्णः ॥ १७८ ॥ प्रद्युम्नसाम्बप्रमुखाश्च वञ्चिता ययुस्तीर्थार्थं रामयुक्ताः समग्राः । पिण्डोद्धारं तत्र महोत्सवेषु स्वावर्तयत्सु क्वचिदूचे सुभद्रा ॥ १७९ ॥ यते तीर्थान्याचरन्बान्धवांस्त्वमद्राक्षीर्नः क्वचिदिष्टान्स्म पार्थान् । कुन्तीं कृष्णां चेत्याह पृष्टः स पार्थ ओमित्येषामाह चानामयं सः ॥ १८० ॥ भूयः साऽवादीद्भगवन्निन्द्रसूनुर्गतस्तीर्थार्थं ब्राह्मणेभ्यः श्रुतो मे । क्वचिद्दृष्टो भवतेत्योमिति स्म पार्थोऽप्यूचे क्वेति साऽपृच्छदेनम् ॥ १८१ ॥ अत्रैवेति स्मयमानं च पार्थं पुनः पुनः पर्यपृच्छच्छुभाङ्गी । सोऽप्याहोन्मत्ते सोऽस्मि हीति स्मयंस्तां फुल्लाक्षी तं सा ददर्शातिहृष्टा ॥ १८२ ॥ ततो हर्षाल्लज्जया चोत्पलाक्षी किञ्चिन्नोचे पार्थ एनामुवाच । कामाविष्टो मुख्यकालो ह्ययं नावुद्वाहार्थेऽस्त्विवति सा चैनमाह ॥१८३॥ नातिक्रमो वासुदेवस्य युक्तस्तस्मात्तेन स्वपितृभ्यां च दत्ताम् । युक्तो निजैर्बन्धुभिश्चोत्सवे मां समुद्वहेत्यथ कृष्णं स दध्यौ ॥ १८४ ॥ मातापितृभ्यां सहितोऽथ कृष्णस्तत्रैवायाद्वासवश्चाथ शच्या । समं मुनीन्द्रैः फल्गुनेन स्मृतः स तत्रैवागात्प्रीतियुक्तो निशायाम् ॥ १८५ ॥ कृष्णस्ततः पुरुहूतेन साकं तयोर्विवाहं कारयामास सम्यक् । मातापितृभ्यां सात्यकिनापि युक्तो महोत्सवेऽन्याविदिते मुनीन्द्रैः ॥ १८६ ॥ ततः कृष्णः स्यन्दनं फल्गुनार्थे निधाय स्वं प्रययौ तद्रजन्याम् । गतेऽथ शक्रे रथमारुरोह प्रातः पार्थः सहितो भार्ययैव ॥ १८७ ॥ सर्वायुधैर्युक्तरथे समास्थिते गृहीतचापे फल्गुने द्वारवत्याम् । आसीद्रावः किं किमेतत्त्रिदण्डी कन्यां हरत्येष कोदण्डपाणिः ॥१८८॥ ततस्तु तं सतनुत्रं महेन्द्रदत्ते दिव्ये



कुण्डले वाससी च । दिव्यानि रत्नानि विभूषणानि दृष्ट्वा बिभ्राणं रक्षिणोऽवारयन्स्म ॥ १८९ ॥ ततः स आबद्धतलाङ्गुलित्रः सतूणीरश्चापमायम्य बाणैः । चक्रेऽन्तरिक्षं प्रदिशो दिशश्च निरन्तरं शिक्षया विद्यया च ॥ १९० ॥ चक्रे सारथ्यं केशवेनैतदर्थं सुशिक्षिता तस्य सम्यक्सुभद्रा । तया पार्थो वारितो नैव कश्चिद्भिन्नत्वचं कृतवान्क्रीडमानः ॥ १९१ ॥ सुशिक्षयाऽत्यद्भुतया शरौघैर्विद्राव्य तान्भीषयित्वैव सर्वान् । निर्गत्य पुर्या विपृथुं ददर्श रामेण पुर्या रक्षणे सन्नियुक्तम् ॥ ॥ १९२ ॥ प्रियं कुर्वन्निव रामस्य सोऽपि व्याजेन पार्थं सेनयैवावृणोत्तम् । कृष्णादेशान्नैव पार्थस्य चक्रे सम्यग्रोधं युयुधे च छलेन ॥ ॥ १९३ ॥ एको ह्यसौ मरुतां सौम्यनामा शिश्रूषार्थं वासुदेवस्य जातः । तं यादवं शरवर्षैर्ववर्ष यथा क्षतं न भवेत्सव्यसाची ॥१९४॥ निरायुधं विरथं चैव चक्रे पार्थः सेनां तस्य नैवाहनच्च । दृष्ट्वा शरांस्तस्य तीक्ष्णांस्त्वचोऽपि न च्छेदकान्विपृथुस्तं तुतोष ॥ १९५ ॥ शिक्षां पार्थस्याधिकां मानयान उपेत्य पार्थं च शशंस सर्वाम् । आज्ञां विष्णोः सन्नियुध्यन्निवास्मै कृत्तायुधः फल्गुनेनैव पूर्वम् ॥ १९६ ॥ ततः पराजितवच्छीघ्रमेत्य शशंस सर्वं हलिनेऽथ सोऽपि । प्रद्युम्नसाम्बादियुतोऽथ कोपादायात्पुरीं हन्तुकामोऽर्जुनं च ॥ १९७ ॥ कृष्णोऽपि सर्वं विपृथोर्निशम्य प्राप्तः सुधर्मां विमना इवासीत् । अवाङ्मुखस्तत्र यदुप्रवीराः प्रद्युम्नाद्या आहुरुच्चैर्नदन्तः ॥१९८॥ मायाव्रतं तं विनिहत्य शीघ्रं वयं सुभद्रामानयामः क्षणेन । इत्युक्तवाक्यानवदद्धलस्तान्कृष्णाज्ञया यातु न स्वेच्छयैव ॥ १९९ ॥ ज्ञातव्यमेतस्य मतं पुरस्ताद्धरेर्विरोधे न जयो भवेद्वः । इत्युक्तवाक्ये हलिनि स्म सर्वे पप्रच्छुरानम्य जनार्दनं तम् ॥ २०० ॥ अथाब्रवीद्वासुदेवोऽमितौजाः शृण्वन्तु सर्वे वचनं मदीयम् । पुरैवोक्तं तन्मया कन्यकाया मायाव्रतोऽसौ नार्हति सन्निधिस्थितिम् ॥ २०१ ॥ तां मे वाचं नाग्रहीदग्रजोऽयं बहून्दोषा-

न्व्याहरतोऽप्यतो मया । अनुल्लङ्घ्यत्वादग्रजोनुप्रवृत्तः कन्यागृहे वासने कूटबुद्धेः ॥ २०२ ॥ अतीतश्चायं कार्ययोगो समक्षं हृता कन्या नोऽत्र का मानहानिः । भूयस्तरां मानिनस्तस्य सा स्याज्ज्ञाता च वो विपृथोः पार्थताऽस्य ॥ २०३ ॥ देया च कन्या नास्ति पार्थेन तुल्यो वरोऽस्माकं कौरवेयश्च पार्थः । पौत्रश्च कृष्णस्य सुपूर्णशक्तेः पैतृष्वसेयो वीरतमो गुणाढ्यः ॥ २०४ ॥ अर्थ्योऽस्माभिः स्वयमेवाहरत्स शक्रात्मजो नात्र नः कार्यहानिः । अनुद्रुत्यैनं यदि वः स्यात्पराजयो हानिर्दृढं यशसो वो भवेत् ॥ २०५ ॥ जित्वा चैनं कन्यका चाहृता चेत्परामृष्टां नैव कश्चिद्विलिप्सेत् । अतो न मे रोचते वोऽनुयानमित्यूचिवानास तूष्णीं परेशः ॥ २०६ ॥ श्रुत्वा हली कृष्णवाक्यं बभाषे मा यात चित्तं विदितं मयाऽस्य । अस्यानुवृत्तिर्विजयाय नः स्याच्छुभाय शान्त्यै परतश्च मुक्त्यै ॥ २०७ ॥ ततोऽर्जुनो यत्र तिष्ठ(ष्ठे)न्न कश्चित्पराभवं याति कृष्णाज्ञयैव । रथेन तेनैव ययौ सभार्यः शक्रप्रस्थं चाविशद्भ्रातृगुप्तम् ॥ २०८ ॥ सम्भावितो भ्रातृभिश्चातितुष्टैरूचेऽथ सर्वं तेषु यच्चात्मवृत्तम् । शान्तेषु वाक्यादात्मनो यादवेषु कृष्णो युक्तो हलिनाऽगाच्च पार्थान् ॥ २०९ ॥ सार्धं ययौ शकटै रत्नपूर्णैः शक्रप्रस्थं पूजितस्तत्र पार्थैः । ददौ तेषां तानि रामेण युक्तस्तथा कृष्णायै भूषणानि स्वसुश्च ॥ २१० ॥ मासानुषित्वा कतिचिद्रौहिणेयो ययौ पुरीं स्वां केशवोऽत्रावसच्च । बहून्वर्षान्पाण्डवैः पूज्यमानः प्रीतिं तेषामादधानोऽधिकां स्वाम् ॥ २११ ॥

आसन्कृष्णायाः पञ्च सुता गुणाढ्या विश्वेदेवाः पञ्च गन्धर्वमुख्यैः । आविष्टास्ते चित्ररथाभिताम्रकिशोरगोपालबलैः क्रमेण ॥ ॥ २१२ ॥ प्रतिविन्ध्यः श्रुतसोमः श्रुताख्यकीर्तिः श्रुतानीक उत श्रुतक्रियः । युधिष्ठिराद्यैः क्रमशः प्रजातास्तेषां द्वयोश्चावरजोऽभिमन्युः ॥ २१३ ॥ चन्द्रांशयुक्तोऽतितरां बुधोऽसौ जातः सुभद्राजठरेऽर्जुनेन । धर्मेरशक्रांशयुतोऽश्विनोश्च तथैव कृष्णस्य च सन्निधानयुक् ॥ २१४ ॥ सर्वेऽपि ते वीर्यवन्तः सुरूपा भक्ता विष्णोः सर्वशास्त्रेष्वभिज्ञाः । मोदं ययुः पाण्डवास्तैः सुतैश्च विशेषतः सात्वतीनन्दनेन ॥ २१५ ॥



ततः कदाचित्खाण्डवं कृष्णपार्थौ चिक्रीडिषू सत्यभामासुभद्रे । आदाय यातौ परिचारकैश्च रथेन गन्धर्ववरानुगीतौ ॥ २१६ ॥ स्वैरं तयोस्तत्र चिक्रीडतोश्च स्त्रीरत्नाभ्यां मन्दवातानुजुष्टे । वने प्रसूनस्तबकोरुराजिते जले च तिग्मद्युतिकन्यकायाः ॥ २१७ ॥ भूत्वा विप्रस्तौ ययाचेऽन्नमेत्य कृशानुरूचेऽनुमते रमेशितुः । पार्थः कीदृक्तेऽन्नमिष्टं वदेति स चावादीद्ब्रह्विरहं वनार्थी ॥ २१८ ॥ प्रयाजान्देवाननुयाजांश्च शुक्रं हविर्दाने देवतानामयाचिषम् । बलह्रासस्तव भूयादिति स्म शप्त्वैव ते तांश्च ददुः पुरा मम ॥ २१९ ॥ पुनः पूर्तिः केन मे स्याद्बलस्येत्यब्जोद्भवं पृष्टवानस्मि नत्वा । यदा वनं खाण्डवं हि त्वमत्सि तदा बलं ते भवतीति सोऽब्रवीत् ॥ २२० ॥ शक्रस्येदं खाण्डवं तेन विघ्नं करोत्यसौ तेन वां प्रार्थयामि । इत्युक्ते तं पार्थ ऊचे यदि स्याद्रथो धनुश्चाथ शक्रं निरोत्स्ये ॥ २२१ ॥ नरावेशादन्नदानप्रतिश्रवात्स्वस्यापि शक्रस्य विरोधमैच्छत् । पार्थः कृष्णप्रेरणाच्चैव वह्निः पार्थं ययाचे शक्रविरोधशान्त्यै ॥ २२२ ॥ नहि स्वदत्तस्य पुनः स वरं शक्रः कुर्यात्स्वयमिन्द्रो हि पार्थः । नाप्रेरितो विष्णुना तस्य रोधं पार्थः कुर्यादिति कृष्णं ययाचे ॥ २२३ ॥ न चायुक्तः केशवेनैष शक्त इति स्म कृष्णादाप भूयोऽप्यनुज्ञाम् । ययौ समीपं च हरेर्बदर्यामादाय चक्रं चामुतः केशवेऽदात् ॥ २२४ ॥ चक्रं गोमन्ते कृष्णमायाद्धि पूर्वं भक्त्या वह्निः केशवेऽदात्पुनस्तत् । चक्रं च विष्णोर्बहुधा व्यवस्थितं तदग्निदत्तं प्राक्तनं चैकधाऽऽसीत् ॥२२५॥ धनुश्च गाण्डीवमथाब्जजस्य करोति येनाखिलसंयतिं सः । अंशेन दत्तं तदुमापतेश्च

शक्रस्य सोमस्य जलेशितुश्च ॥ २२६ ॥ तेनैव ते जिग्युरथो जगत्रयं प्रसादतस्ते क्रमशोऽब्जयोनेः । अनन्यधार्यं विजयावहं च भारेण लक्षस्य समं शुभावहम् ॥ २२७ ॥ रथं च शुभ्राश्वयुतं शुभावहं तूणी तथा चाक्षयसायकौ शुभौ । ध्वजं च रामस्य हनूमदङ्कमादाय सर्वं वरुणादर्जुनेऽदात् ॥ २२८ ॥ विशेषतो ध्वजसंस्थे हनूमत्यजेयता स्याज्ञयरूपो यतोऽसौ । सर्वं च तद्दिव्यमभेद्यमेव विद्युत्प्रभा ज्या च गाण्डीवसंस्था ॥ २२९ ॥ गाण्डीवमप्यास कृष्णप्रसादाच्छक्यं धर्तुं पाण्डवस्याप्यधार्यम् । देवैश्च तैर्ब्रह्मवराद्धृतं तद्ब्रह्मैव साक्षात्प्रभुरस्य धारणे ॥ २३० ॥ इन्द्रस्य दत्तश्च वरः स्वयम्भुवा तेनापि पार्थस्य बभूव धार्यम् । इन्द्रो ह्यसौ फल्गुनत्वेन जातस्ततः सोऽस्त्रैः शरशालां चकार ॥ २३१ ॥ आ(स) योजनद्वादशकाभिविस्तृतं पुरं चकाराशु पुरन्दरात्मजः । हुताशनोऽप्याशु वनं प्रगृह्य प्रभक्षयामास समुद्धतार्चिः ॥ २३२ ॥ प्रभक्ष्यमाणं निजकक्षमीक्ष्य सन्धुक्षयामास तदाशुशुक्षणिम् । अक्षोपमाभिर्बहुलेक्षणोऽम्भसां धाराभिराक्षुब्धमनाः क्षयाय ॥ ॥ २३३ ॥ अस्त्रैस्तु वृष्टिं विनिवार्य कृष्णः पार्थश्च शक्रं सुरपूगयुक्तम् । अयुध्यतां सोऽपि पराजितोऽभूत्प्रीतश्च दृष्ट्वा बलमात्मनस्तत् ॥ २३४ ॥ स्नेहं च कृष्णस्य तमर्जुने धृतं विलोक्य पार्थस्य बलं च तादृशम् । निवर्त्य मेघानतितुष्टचित्तः प्रणम्य कृष्णं तनयं समाश्लिषत् ॥२३५॥ विष्णुश्च शक्रेण सहैत्य केशवं समाश्लिषन्निर्विशेषोऽप्यनन्तः । स केवलं क्रीडमानः सशक्रः स्थितो हि पूर्वं युयुधे न किञ्चित् ॥ २३६ ॥ ब्रह्मा च शर्वश्च समेत्य कृष्णं प्रणम्य पार्थस्य च कृष्णनाम । सञ्चक्रतुश्चापि शिक्षाप्रकर्षाच्चक्रुश्च सर्वे स्वास्त्रदाने प्रतिज्ञाम् ॥ ॥ २३७ ॥ अनुज्ञातास्ते प्रययुः केशवेन क्रीडार्थमिन्द्रो युयुधे हि तत्र । प्रीत्या कीर्तिं दातुमप्यर्जुनस्य ततस्तुष्टः सह देवैर्ययौ स्वः ॥ ॥ २३८ ॥ दैत्याश्च नागाश्च पिशाचयक्षा हताश्च सर्वे तद्वनस्था हि



ताभ्याम् । ऋते चतुःपक्षिणश्चाश्वसेनं मयं च नान्यत्किञ्चिदासात्र मुक्तम् ॥ २३९ ॥ अयमग्ने जरितेत्यादिमन्त्रैः स्तुत्वा वह्निं पक्षिणो नैव दग्धाः । स चाश्वसेनः पुत्रकस्तक्षकस्य मात्रा ग्रस्तः प्रातिलोम्येन कण्ठे ॥ २४० ॥ छिन्नेऽर्जुनेनान्तरिक्षे पतन्त्यास्तस्याः शक्रेणावितश्छिन्नपुच्छः । वधान्मातुः पुच्छभङ्गाच्च रोषाद्धन्तुं पार्थं कर्णतूणीरगोऽभूत् ॥ २४१ ॥ मयः कृष्णेनात्तचक्रेण दृष्टो ययौ पार्थं शरणं जीवितार्थी । पार्थार्थमेनं न जघान कृष्णः स्वभक्तश्चेत्यतिमायं रमेशः ॥ ॥२४२॥ देवारिरित्येव मयि प्रकोपः कृष्णस्य तेनाहमिमं पुरन्दरम् । पार्थात्मकं शरणं यामि तेन कृष्णप्रियः स्यामिति तस्य बुद्धिः ॥२४३॥ प्राणोपकृत्प्रत्युपकारमाशु किं ते करोमीति स पार्थमाह । कृष्णप्रसादाद्धि भवान्विमुक्तस्तस्मै करोत्वित्यवदत्स पार्थः ॥ २४४ ॥ कृष्णोऽपि राज्ञेऽतिविचित्ररूपसभाकृतावादिशत्तां स चक्रे । अनिर्गमं प्राणिनामर्थितौ तौ हुताशनेनाथ विधाय जग्मतुः ॥ २४५ ॥ दृष्ट्वा च तौ पाण्डवाः सर्व एव महामुदं प्रापुरेतन्निशम्य । कृष्णोऽपि पार्थैर्मुमुदेऽनन्तशक्तिः सुखज्ञानप्रभवौदार्यवीर्यः ॥ २४६ ॥ (२७७५) ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये खाण्डवदाहो (सुभद्राहरण खाण्डवदहनादि निरूपणं) नाम विंशोऽध्यायः ॥ २० ॥

---

## अथ एकविंशोऽध्यायः

॥ ॐ ॥ जनार्दनाज्ञया मयः समस्तकौतुकोत्तराम् । सभां विधाय भूभृते ददौ गदां वृकोदरे ॥ १ ॥ स वायुधारितां गदां हि यौवनाश्वभूभृता । प्रसादतोऽस्य लम्भितामवाप्य मोदमाप ह ॥ २ ॥

पुनश्च वत्सरद्वयं समुष्य केशवो ययौ । समर्चितश्च पाण्डवैर्वियोजनेऽस्य
चाक्षमैः ॥ ३ ॥ ततो वसन्स्वपुर्यजः कचिद्रविग्रहे हरिः । सदारपुत्र-
बान्धवः स्यमन्तपञ्चकं ययौ ॥ ४ ॥ पृथासुताश्च सर्वशः सदारपुत्र-
मातृकाः । क्षितीश्वराश्च सर्वशः प्रियाप्रियाश्च ये हरेः ॥ ५ ॥ तथैव
नन्दगोपकः सदारगोपगोपिकः । मुनीश्वराश्च सर्वशः समीयुरत्र च
प्रजाः ॥ ६ ॥ प्रियाश्च ये रमेशितुर्हरिं त्रिरूपमेत्य ते । वसिष्ठवृष्णि-
नन्दनौ भृगूत्तमं तथाऽर्चयन् ॥ ७ ॥ कृतार्थतां च ते ययू रमेशपाद-
दर्शनात् । रविग्रहे समाप्लुता भृगूद्वहोत्थतीर्थके ॥ ८ ॥ अनुग्रहं
विधाय स स्वकेषु केशवस्त्रिवृत् । अयाजयच्च शूरजं मखैः समाप्त-
दक्षिणैः ॥ ९ ॥ समस्तलोकसंस्थितात्मभक्तिमज्जनस्य सः । सुकाल-
दर्शनात्परं व्यधादनुग्रहं हरिः ॥ १० ॥ ततो ययौ स्वकां पुरीं पृथा-
सुतैः सहाच्युतः । चकार तत्र चाह्निकं क्रतुं महाश्वमेधिकम् ॥ ११ ॥
हयं सभीमफल्गुना हरे रथं समास्थिताः । व्यचारयन्हरेः सुता दिनस्य
पादमात्रतः ॥ १२ ॥ जिताः समस्तभूभृतो जरासुतादयः क्षणात् ।
वृकोदरादिभिस्तु तैर्हयश्च दिव्य आययौ ॥१३॥ हयश्च कृष्णनिर्मितो
दिनेन लक्षयोजनम् । क्षमो हि गन्तुमञ्जसा दिनाश्वमेधसिद्धये ॥१४॥
पराशरात्मजो हरिर्हरिं यदा त्वदीक्षयत् । तदाऽऽससाद हि द्विजस्तृणावहो
रुराव च ॥ १५ ॥ व्रजन्ति जन्मनोऽनु मे सदा सुता अदृश्यताम् ।
इतीरितोऽर्जुनोऽब्रवीदहं हि पामि ते सुतान् ॥ १६ ॥ सकृष्णराम-
कार्ष्णिभिः सुता न मेऽत्र पालिताः । क ते ऽत्र शक्तिरित्यमुं जगाद
सोऽर्जुनं द्विजः ॥ १७ ॥ तदा जगाद फल्गुनो सुरैर्विदूपितात्मना ।
न विप्र तादृशोऽस्म्यहं यथैव केशवादयः ॥ १८ ॥ मया जिता हि
खाण्डवे सुरास्तथाऽसुरानहम् । निवातवर्मनामकान्विजेष्य उत्तरत्र हि ॥
॥ १९ ॥ उदीर्य चेति केशवं स ऊचिवान्व्रजाम्यहम् । इतीरितोऽ
वदद्धरिस्तवात्र शक्यते नु किम् ॥२०॥ विलज्जमानमीक्ष्य तं जगाद



केशवोऽरिहा । व्रजेति स प्रतिश्रवं चकार हाप्यरक्षणे ॥ २१ ॥ वह्निं
प्रवेक्ष्येऽशक्तश्चेदित्युक्त्वा सर्वयादवैः । ययौ न रामप्रद्युम्नावनिरुद्धं च
केशवः ॥ न्ययोजयत्तत्साहाय्ये यशस्तेष्वभिरक्षितुम् ॥ २२ ॥ प्रियो
हि नितरां रामः कृष्णस्यानु च तं सुतः । अनिरुद्धः कार्ष्णिमनु
प्रद्युम्नाद्योऽजनिष्ट हि ॥ २३ ॥ रुक्मिपुत्र्यां रुक्मवत्यामाहृतायां
स्वयंवरे ॥ २४ ॥ रतिरेव हि या तस्यां जातोऽसौ कामनन्दनः ।
पूर्वमप्यनिरुद्धाख्यो विष्णोस्तन्नाम्न एव च । आवेशयुक्तो बलवान्रूप-
वान्सर्वशास्त्रवित् ॥२५॥ तस्मात्तांस्त्रीनृते कृष्णः पार्थसाहाय्यकारणात् ।
न्ययोजयत्सूतिकाले ब्राह्मण्याः स च फल्गुनः ॥ २६ ॥ अस्त्रैश्चकार
दिग्बन्धं कुमारोऽथापि तत्क्षणात् । अदर्शनं ययौ पार्थो विषण्णः सह
यादवैः ॥२७॥ अधिक्षिप्तो ब्राह्मणेन ययौ यत्र श्रियः पतिः ॥२८॥
अग्निं विविक्षन्तममुं निवार्य ययौ सविप्रः सहफल्गुनो हरिः । आशा-
मुदीचीं बृहता रथेन क्षणेन तीर्त्वैव च सप्तवारिधीन् ॥ २९ ॥ ददुश्च
मार्गं गिरयोऽब्धयस्तथा विदार्य चक्रेण तमोऽन्धमीशः । घनोदकं
चाप्यतितीर्य तत्र ददर्श धाम स्वमनन्तवीर्यः ॥ ३० ॥ संस्थाप्य दूरे
सरथं सविप्रं पार्थं स्वरूपे द्विचतुष्कबाहौ । समस्तरत्नोज्ज्वलदिव्य-
भूषणे विवेश नित्योरुगुणार्णवे प्रभुः ॥ ३१ ॥ सहस्रमूर्धन्युरुशेषभोग
आसीनरूपेऽमितसूर्यदीधितौ । रमासहाये तटिदुज्ज्वलाम्बरे मुक्तै-
र्विरिञ्चादिभिरर्चिते सदा ॥ ३२ ॥ स्थित्वैकरूपेण मुहूर्तमीश्वरो
विनिर्ययौ विप्रसुतान्प्रगृह्य । सुनन्दनन्दादय एव पार्षदास्ते वैष्णवा
भूमितले प्रजाताः ॥ ३३ ॥ दर्पं निहन्तुं हरिरर्जुनस्य समानयद्विप्र-
सुतान्परेशः । प्रीतिर्महत्येव यतोऽर्जुने हरेः संशिक्षयामास ततः स
एनम् ॥३४॥ अप्राकृतात्सदनाद्वासुदेवो निःसृत्य सूर्याधिकलक्षदीधितेः ।
रथं समारुह्य सपार्थविप्र आगात्सुतांश्चैव ददौ द्विजाय ॥ ३५ ॥ लोक-
शिक्षार्थमेवासौ प्रायश्चित्तं च चालने । चक्रे सार्धमुहूर्तेन समागम्य

पुनर्मखम् ।।३६।। ब्रह्मादीनागतांश्चैव सदा स्वपरिचारकान् । पूजयित्वाभ्यनुज्ञाय ब्राह्मणानप्यपूजयत् ।। ३७ ।। सस्नाववभृथं कृष्णः सदारः ससुहृज्जनः । आयान्तं द्वारकां कृष्णं दन्तवक्रो रुरोध ह ।। ३८ ।। जघान गदया कृष्णस्तत्क्षणात्स विडूरथम् । विडूरथस्तमोऽगच्छद्दन्तवक्रे च योऽसुरः ।। ३९ ।। हरेश्च पार्षदः क्षिप्रं हरिमेव समाश्रितः ।। ।। ४० ।। कृष्णे प्राप्ते स्वलोकं च निःसृत्यास्मात्स्वरूपतः । एकीभावं स्वरूपेण द्वारपेण गमिष्यति ।। ४१ ।।

ततः कृष्णः पुरीमेत्य बोधयामास फल्गुनम् । किमेतद्दृष्टमित्येव तेन पृष्टो रमापतिः ।।४२।। अयं द्वीपः सागरश्च लक्षयोजनविस्तृतौ । तदन्ये तु क्रमेणैव द्विगुणेनोत्तरोत्तराः ।। ४३ ।। अन्त्याध्यर्धस्थलं हैमं बाह्यतो वज्रलेप(वाज्रलेपि)कम् । एतत्सर्वं लोकनाम ह्येतस्माद्विगुणं तमः ।। ।।४४।। अन्धं यत्र पतन्त्युग्रा मिथ्याज्ञानपरायणाः । घनोदकं तद्विगुणं तदन्ते धाम मामकम् ।।४५।। यत्तद्दृष्टं त्वया पार्थ तत्र मुक्तैरजादिभिः । सेव्यमानः स्थितो नित्यं सर्वैः परमपूरुषः ।।४६।। लोकालोकप्रदेशस्तु पञ्चाशल्लक्षविस्तृतः । सपञ्चाशत्सहस्रश्च तस्यापि गणनं तथा ।। ४७ ।। योजनानां पञ्चविंशत्कोटयो मेरुपर्वतात् । चतसृष्वपि दिक्षूर्ध्वमधश्चाण्डं प्रकीर्तितम् ।।४८।। अबग्नीरनभोऽहङ्कृन्महत्तत्त्वगुणत्रयैः । क्रमाद्दशगुणैरेतदावृतं परतस्ततः ।।४९।। व्याप्तोऽहं सर्वगोऽनन्तोऽनन्तरूपो निरन्तरः । अनन्तशीर्षोऽनन्ताक्षोऽनन्तपादकरोरुकः । अनन्तगुणमाहात्म्यश्चिदानन्दशरीरकः ।। ५० ।। मद्वशा एव सर्वेऽपि त्वं चान्ये च धनञ्जय । मत्प्रसादाद्बलं चैव विजयश्चाखिला गुणाः ।। ५१ ।। तस्मान्न विस्मयः कार्यो न दर्पश्च त्वयाऽनघ । मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।। ५२ ।। मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे । इत्युक्तः प्रणिपत्यैनं क्षमस्वेत्याह फल्गुनः ।। ५३ ।। उषित्वा कतिचिन्मासान्ययुः सर्वेऽपि पाण्डवाः । अनुज्ञाताः केशवेन भक्तिनम्रधियो-



ऽच्युते ।। सम्भाविताः केशवेन सौहार्देनाधिकेन च ।। ५४ ।।

ततः कदाचित्प्रवरे सभातले धर्मात्मजो राजभिर्भ्रातृभिश्च । वृतो निशम्यैव सभाः सुराणां यथास्थिता नारदमन्वपृच्छत् ।। ५५ ।। अन्तरिक्षं त्वया प्रोक्तं लक्षयोजनमुच्छ्रितम् । अर्धकोट्युच्छ्रितः स्वर्गो विमानावलिसङ्कुलः ।।५६।। भुवः स्वर्गश्च कोट्यैव योजनानां प्रविस्तृतौ । महर्जनस्तपश्चैव क्रमादध्यर्धयोजनाः ।। ५७ ।। पञ्चाशत्कोटिविस्तारो योजनानां समस्तशः । यावन्त एते मिलितास्तत्प्रमाण उदीरितः ।। ।।५८।। सत्याख्यो ब्रह्मलोकस्तु यत्र ब्रह्मा विराजते । ततश्च द्विगुणः प्रोक्तो विष्णुलोकः सनातनः ।। ५९ ।। उत्तरोत्तरतः सर्वे सुखे शतगुणोत्तराः । अनन्तजनसम्पूर्णा अपि ते हीच्छया हरेः ।। ६० ।। अवकाशवन्तो दिव्यत्वात्पूर्यन्ते न कदाचन । सर्वकामसुखैः पूर्णा दिव्यस्त्रीपुरुषोज्ज्वलाः ।। ६१ ।। दिव्यरत्नसमाकीर्णं तथा पातालसप्तकम् । अधस्ताच्छेषदेवेन बलिना समधिष्ठितम् ।। ६२ ।। कामभोगसमायुक्ता बहुवर्षसहस्रिणः । सप्तद्वीपेषु पुरुषा नार्यश्चोक्ताः सुरूपिणः ।। ६३ ।। एषां च सर्वलोकानां धाता नारायणः परः । विष्णुलोकस्थितो मुक्तैः सदा सर्वैरुपास्यते ।। ६४ ।। सेवका ब्रह्मणः सर्वे(श्चैव) वेदा देवाश्च सर्वशः । शक्रस्य मुनयः सर्वे हरिश्चन्द्रश्च भूमिपः ।। ।।६५।। अखिला अपि राजानः पाण्डुश्चास्मत्पिता मुने । यमस्यैवानुगाः प्रोक्ता राजभिस्तैर्यमेन च ।। ६६ ।। उपास्यमानो भगवान्रामो यमसभातले ।। ६७ ।। उक्त इन्द्रेण चोपास्यो वामनात्मा जनार्दनः । प्रादुर्भावाश्च निखिला ब्रह्मणोपासिताः सदा । वरुणस्यानुगा नागास्तत्र मत्स्याकृतिर्हरिः ।। ६८ ।। गन्धर्वा धनदस्यापि तत्र कल्की हरिः प्रभुः । रुद्रस्योग्राणि भूतानि नृसिंहात्मा शिवेन च ।। ६९ ।। उपास्यते सदा विष्णुरित्याद्युक्तं त्वयाऽनघ । सर्वरत्नस्थलान्दिव्यान्देवलोकान्प्रभापता ।। ७० ।। तत्र मे संशयो भूयान्हरिश्चन्द्रः कथं नृपः ।

ऐन्द्रं सभातलं प्राप्तः पाण्डुर्नास्मत्पिता मुने ॥ ७१ ॥ इत्युक्तो नारदः प्राह राजसूयक्रतोन्नतिम् । हरिश्चन्द्रस्य तां दृष्ट्वा पिता मां प्राह पाण्डव (यमसभातले) ॥ ७२ ॥ (स्थितस्त्वामवदत्पाण्डू रामद्वयसुदैवते ।) करोतु राजसूयं मे पुत्रो ज्येष्ठो(ऽजेयो)ऽनुजार्चितः । पालितो वासुदेवेन किं तस्यासाध्यमत्र हि ॥ ७३ ॥

एतच्छ्रुत्वा धर्मसुतो भ्रातृभिः सहितो वशी । अवाप्तिं राजसूयस्य मन्त्रयामास धर्मवित् ॥७४॥ सुकार्यमेतदित्यलं निशम्य सोदरोदितम् । अयातयत्स्वसारथिं स केशवाय भूपतिः ॥ ७५ ॥ तदैव केशवस्य याः स्त्रियस्तदीयतातकैः । सहोदरैश्च यापितः स दूत आप माधवम् ॥७६॥ प्रणम्य केशवं वचः स आह मागधेन ते । विवाहबान्धवा रणे विजित्य रोधिता गिरौ ॥ ७७ ॥ नृपायुतद्वयेन सोऽष्टविंशकैः शतैरपि । यियक्षुरुग्ररूपिणं त्रिलोचनं त्वयि स्थिते ॥ ७८ ॥ विमोचयस्व तान्प्रभो निहत्य मागधेश्वरम् । अवैदिकं मखं च तं विलुम्प धर्मगुप्तये ॥ ७९ ॥ इतीरितेऽथ सारथिं निशाम्य धर्मजस्य च । निशम्य तद्वचस्तदा जगाम पाण्डवालयम् ॥ ८० ॥ स पाण्डवैः समर्चितो मखाय धर्मजेन च । प्रपृष्ट आह माधवो वचो जगत्सुखावहम् ॥८१॥ क्रतुर्यथा विधानतः कृतो हि पारमेष्ठ्यकम् । पदं नयेत तत्पदे सुयोग्यमेव नान्यथा ॥ ८२ ॥ अयोग्यकान्महापदे विधातुरेष हि क्रतुः । समानयोग्यतागणात्करोति मुक्तिगं वरम् ॥ ८३ ॥ पुरा तु मुक्तितोऽधिकं स्वजातितः करोति च । अतस्त्रिशङ्कुपुत्रको नृपानतीत्य वर्तते ॥ ८४ ॥ सुरांशकोऽपि ते पिता विना हि राजसूयतः । न शक्ष्यति त्रिशङ्कुजाद्वरत्वमाप्तुमद्य तु ॥ ८५ ॥ तपश्चरन्समागते शचीपतौ पिता तव । मरुद्गणोत्तमः पुरा नतूत्थितः शशाप सः ॥ ८६ ॥ व्रजस्व मानुषीं तनुं ततो मृतः पुनर्दिवम् । गतोऽपि च स्वकां तनुं प्रवेष्टुमत्र नेशसे ॥ तदाधिकस्त्रिशङ्कुजो भविष्यति त्वदित्यथ ॥८७॥



क्षमापितश्च वासवो जगाद राजसूयतः । त्रिशङ्कुजाधिको भवानवाप्स्यति स्वकां तनुम् ॥ ८८ ॥ अतः सुकार्य एव ते युधिष्ठिर क्रतूत्तमः । भवद्भिरप्यवाप्यते स्वयोग्यतामुनाऽखिला ॥ ८९ ॥ उदीर्य चैवमीश्वरः क्रतोरमुष्य योग्यता । वृकोदरे यतोऽखिला चतुर्मुखत्वयोग्यत ॥९०॥ ततः सुपूर्णमस्य तत्फलं विधातुमञ्जसा । जगाद वायुवाहनो वचो युधिष्ठिरं त्विदम् ॥ ९१ ॥ क्व राजसूयमद्य ते जरासुते तु जीवति । जयेत्क एव तं युधा मृतो न योऽपि सीरिणा ॥ ९२ ॥ विरिञ्चशर्ववाक्यतः समस्तलोकजायिनि । स्थिते तु ते जरासुते न सेत्स्यति क्रतूत्तमः ॥९३॥ इतीरिते(तो) रथाङ्गिना जगाद धर्मनन्दनः । निवर्तितं मनः क्रतोरलं ममामुना प्रभो ॥ ९४ ॥ बभूविरे च भूभृतो न चाधिराज्यमापिरे । यदा च चक्रवर्तिनस्तदेदृशा न शत्रवः ॥ ९५ ॥ इतीरितेऽमुनाऽवदत्प्रधानमारुतात्मजः । पदं चतुर्मुखस्य वा सुसाध्यमेव यत्नतः ॥९६॥ निजानुभाववर्जिता हरेरनुग्रहोज्झिताः । महाप्रयत्नवर्जिता जना न जग्मुरुन्नतिम् ॥ ९७ ॥ स्थिरोऽनुभाव एव मे महाननुग्रहो हरेः । प्रयत्नमेकमग्रतो निधाय भूतिमाप्नुमः ॥ ९८ ॥ इतीरितेऽमुना हरिः समुद्यमात्प्रधानतः । स्थिते हि यज्ञकारणे वृकोदरे जगाद ह ॥ ९९ ॥ स एक एव पूरुषो जरासुतोऽद्य वर्तते । समस्तसद्विरोधिनां बलं कलेरनन्तरः ॥ १०० ॥ तथा सतां समाश्रयो यदुद्भवाः सतां गुणाः । स एक एव तादृशस्त्वया विचिन्त्य यात्यताम् ॥ १०१ ॥ यदि स्म तेन मागधो निहन्यते सतां जयः । विपर्ययेण चासतामिति स्म विद्धि नान्यथा ॥ १०२ ॥ स पारमेष्ठ्यसत्पदं प्रयात्यसंशयं युधि । य एव हन्ति मागधं स एव धर्मपालकः ॥ १०३ ॥ निहन्ति मागधेश्वरं स एव वैष्णवं जगत् । करोति शर्वपालितो यतः स बार्हद्रथः ॥ १०४ ॥ निहन्ति शैवनायकं य एव वैष्णवाग्रणीः । इति स्म भावसंयुते वदत्यजेऽबिभे-

न्नृपः ॥ १०५ ॥ युधिष्ठिरे ब्रुवत्यजं मखेन मे त्वलं त्विति । तमाह मारुतात्मजो निहन्मि मागधं रणे ॥ १०६ ॥ इतीरिते-ऽवदद्धरिर्व्रजामहे वयं त्रयः । अहं च भीमफल्गुनौ निहन्तुमेव मागधम् ॥ वृकोदरेण हन्यते यदि स्म मागधाधिपः ॥ १०७ ॥ मखश्च सेत्स्यते ध्रुवं जगच्च ते वशे भवेत् ॥ १०८ ॥ इतीरिते तु शौरिणा जगाद धर्मनन्दनः । स शूरसेनमण्डलप्रहाणतो हरेस्त्रसन् ॥ ॥ १०९ ॥ भयाद्धि यस्य माधुरं विहाय मण्डलं गताः । भवन्त एव सागरं ततो बिभेम्यहं रिपोः ॥ ११० ॥ इमौ हि भीमफल्गुनौ ममाक्षिणी सदा प्रभो । मनोनिभो भवान्सदा न वो विनाऽस्म्यहं(तः) पुमान् ॥ १११ ॥ अतो न जीवितात्प्रियानहं रिपोर्बलीयसः । सकाशमात्महेतुतः प्रयातयामि वः प्रभो ॥ ११२ ॥ इतीरितेऽवदत्पुनर्वृकोदरोऽरिकक्षभुक् । यदीयनेतृका रमाविरिञ्चशर्वपूर्वकाः ॥११३॥ वशे च यस्य तद्बलं सुरासुरोरगादिनाम् । स एष केशवः प्रभुः क चास्य बारुहद्रथः ॥ ११४ ॥ अधृष्यमस्ति मे बलं हरिप्रणायकस्य च । समस्तलोकनेतरि प्रभौ हि सर्वशक्तिता ॥ ११५ ॥ अजेयता तथार्जुने हरेर्वरोद्भवाऽस्ति हि । अतो वयं त्रयोऽद्य तं प्रयाम मागधं रिपुम् ॥ ॥११६॥ हनिष्य एव मागधं हरेः पुरो न संशयः । इतीरितेऽमुना हरिर्जगाद धर्मनन्दनम् ॥ ११७ ॥ वयं त्रयः समेत्य तं प्रयातयाम मृत्यवे । हनिष्यति स्फुटं रणे वृकोदरो जरासुतम् ॥ ११८ ॥ भयं न कार्यमेव ते मया हतः स नेति ह । मया हि नीतिहेतुतः स्वयं न हन्यते रिपुः ॥ ११९ ॥ स शर्वसंश्रयाग्रणीर्मदाश्रयोत्तमेन तु । निहन्यते यदा तदा प्रकाशितं हि मे बलम् ॥ १२० ॥ अतो न शङ्कितं मनः कुरुष्व भूपते क्वचित् । प्रदर्शयामि तेऽनुजौ निहत्य मागधेश्वरम् ॥ १२१ ॥ इतीरितः स विष्णुना विचार्य तद्गुणान्परान् । तथेति चाह ते त्रयः प्रतस्थुराशु मागधान् ॥ १२२ ॥



समेत्य मागधांस्तु ते शिवोरुलिङ्गमित्यलम् । सुमाल्यवस्त्रभूषणैः समर्चितं गिरिं ययुः ॥ १२३ ॥ स्वशीर्षतोऽपि चाद्दतं जरासुतेन ते गिरिम् । न्यपातयन्त बाहुभिस्तमस्य चोत्तमाङ्गवत् ॥१२४॥ अद्वारतस्ते नगरं प्रविश्य माषस्य नालेन कृतास्त्रिभेरीः । मु(पु)ष्टिप्रहा(दा)राद्वि-(बि)भिदुस्तस्य कीर्तिशास्त्रोपमा न्यक्कृतमागधेशाः ॥१२५॥ तथाऽऽपणेभ्यो बहुमाल्यगन्धान्प्रसह्य सङ्गृह्य शुभांश्च दध्रुः । अद्वारतस्तस्य गृहं च सस्रुः भोशब्दतस्तं च नृपं प्रसस्रुः ॥१२६॥ तान्विप्रवेषान्स निशाम्य राजा महाभुजान्स्नातकवेषयुक्तान् । द्वितीयवर्णान्प्रविचिन्त्य बाहूञ्ज्याकर्कशान्वीक्ष्य बभाष एतान् ॥ १२७ ॥ के ष्ठा(स्था)थ किं हेतुत आगताश्च कुतश्च मे पर्वतलिङ्गभेदनम् । कृतं भवद्भिः कुत एव दुर्नयाः कृतास्तथान्ये द्विजवर्यवेषैः ॥ १२८ ॥ इति ब्रुवाणं भगवानुवाच कार्यं हि शत्रोरखिलं प्रतीपम् । इत्युक्त ऊचे नहि विप्रशत्रुरहं कुतो वो मम शत्रुता भवेत् ॥ १२९ ॥ इत्युक्तवाक्यं नृपतिं जगाद जनार्दनो नैव हि तादृशा द्विजाः । अहं रिपुस्तेऽस्मि हि वासुदेव इमौ च भीमार्जुननामधेयौ ॥ १३० ॥ यद्बान्धवान्नः पिशिताशिधर्मतो रौद्रे मखे कल्पयितुं पशुत्वे । इच्छस्यरे वेदपथं विहाय तं त्वां बलाच्छास्तुमिहागता वयम् ॥ १३१ ॥ विमोक्षयामः स्वजनान्यदि त्वं न मोचयस्यद्य निगृह्य च त्वाम् । मुञ्चाथवा तानभियाहि चास्मात्रणाय मर्तुं कृतनिश्चयोऽत्र ॥ १३२ ॥ इतीरितोऽसौ मगधाधिपो रुषा जगाद नाहं शिवयागयुक्तान् । मोक्ष्ये पशून्युगपद्वा क्रमेण योत्स्ये च वोऽथापि चमूसहायान् ॥ १३३ ॥ निरायुधः सायुधो वा युष्मदिष्टायुधेन वा । एकोऽपि सकलैर्योत्स्ये ससैन्यो वा ससैनिकान् ॥१३४॥ इत्युक्तवन्तमवददजितोरुबलो हरिः । एह्येकमेको वास्मासु ससैन्यो वा रणे नृप ॥ १३५ ॥ येन कामयसे योद्धुं तं न आसादय द्रुतम् । निरायुधः सायुधो वा त्वदभीष्टायुधेन वा ॥ १३६ ॥ इत्याह भगवा-

न्छत्रुं यशो भीमे विवर्धयन् । घातयित्वा स्वशत्रुं च भीमसेनानुग्रहं परम् ॥१३७॥ भीमस्य कर्तुमिच्छंश्च भक्तिज्ञानादिवर्धनम् । तृणीकर्तुं रिपुं चैव निरायुधतयाऽगमत् ॥१३८॥ कृष्णभीमार्जुनस्तेन विप्रवेषाश्च तेऽभवन् । निरायुधः क्षत्रवेषो नैव योग्यः कथञ्चन ॥ १३९ ॥ ततो जग्मुर्विप्रवेषास्तृणीकर्तुं च मागधम् । मागधस्य ससैन्यस्य स्वगृहे संस्थितस्य च ॥ १४० ॥ निरायुधेन भीमेन समाह्वाने कृतेऽमितम् । धर्मं यशश्च भीमस्य वर्धयामास केशवः ॥ १४१ ॥ तृतीयमर्जुनं चैव समादाय ययौ रिपुम् । हरिस्तस्माच्च भीमस्य महाधिक्यं प्रकाशयन् ॥ ॥१४२॥ मुखेन मागधस्यैव वृण्वेकं न इति ब्रुवन् । वृण्वेकमस्मास्विति सः प्रोक्त आह जरासुतः ॥ १४३ ॥ कुर्यां नैवार्जुनेनाहमबलेनैव सङ्गरम् । पञ्चपञ्चाशदब्दोऽद्य ह्ययमेव तु बालवत् ॥ अबलत्वाद्युवाऽप्येष बाल एव मतो मम ॥ १४४ ॥ इत्युक्तोऽप्यर्जुनो नाह कुरु तर्हि परीक्षणम् । बाहुभ्यां धनुषा चेति शङ्कमानः पराजयम् ॥१४५॥ अतो भीमे बलाधिक्यं सुप्रसिद्धमभून्महत् । एतदर्थं हि कृष्णेन समानीतः स फल्गुनः ॥ १४६ ॥ जानन्कृष्णे बलं घोरमविपह्यं स मागधः । कुत्सयन्गोप इति तं भयान्नैवाह्वयत्प्रभुम् ॥ १४७ ॥ आह्वयामास भीमं तु स्याद्वा मे जीवनं त्विति ॥१४८॥ हनिष्यत्येव मां कृष्ण इत्यासीन्नृपतेर्भयम् । तस्मात्तं नाह्वयामास वासुदेवं स मागधः ॥ १४९ ॥ अर्जुने तु जिते कृष्णभीमौ मां निहनिष्यतः । त्रयाणां दुर्बलाह्वानान्नश्येत्कीर्तिश्च मे ध्रुवम् ॥ १५० ॥ इति मत्वाऽऽह्वयामास भीमसेनं स मागधः । कथञ्चिज्जीवितं वा स्यान्न तु नश्यति मे यशः ॥ १५१ ॥ इतीक्ष्य भीमं प्रतियोधनाय सङ्गृह्य राजा स जरासुतो बली । राज्ये निजं चात्मजमभ्यषिञ्चत्पुरा ख्यातं पत्रतापाख्यरुद्रम् ॥ १५२ ॥ बलं भीमे मन्यमानोऽधिकं तु गदाशिक्षामात्मनि चाधिकां नृपः । भीतो नियुद्धेऽस्य ददौ गदां स



भीमाय चान्यां स्वयमग्रहीद्बली ॥ १५३ ॥ तदर्थमेवाशु गदां प्रगृह्य भीमो ययौ मागधसंयुतो बहिः । पुरात्सकृष्णार्जुन एव तत्र त्वयुध्यतां केशवपार्थयोः पुरः ॥१५४॥ वाचाऽजयत्तं प्रथमं वृकोदरः शिवाश्रयां विष्णुगुणप्रकाशया । ततो गदाभ्यामभिपेततुस्तौ विचित्रमार्गानभिदर्शयन्तौ ॥ १५५ ॥ तयोर्गदे तेऽशनिसन्निकाशे चूर्णीकृते देहमहाद्रढिम्ना । अन्योन्ययोर्वक्षसि पातिते रुषा यथाश्मनोः पांसुपिण्डौ सुमुक्तौ ॥१५६॥ सञ्चूर्णितगदौ वीरौ मुष्टिभिर्जघ्नतुर्मिथः । ब्रह्माण्डस्फोटसङ्काशैर्यथा केशवकैटभौ ॥ १५७ ॥ चचाल पृथ्वी गिरयश्च चूर्णिताः कुलाचलाश्चेलुरलं विचुक्षुभुः । समस्तवारांपतयः सुरासुरा विरिञ्चशर्वादय आसदन्नभः ॥१५८॥ सुरास्तु भीमस्य जयाभिकाङ्क्षिणस्तथाऽसुराद्या मगधाधिपस्य । पश्यन्ति सर्वे क्रमशो बलं स्वं समाददे मारुतनन्दनोऽपि ॥ १५९ ॥ मानयित्वा वरं धातुर्दिवसान्दश पञ्च च । वासुदेवाज्ञया भीमः शत्रुं हन्तुं मनो दधे ॥१६०॥ स प्रणम्य हृषीकेशं हर्षादाश्लिष्य फल्गुनम् । रिपुं जग्राह मुकुटे वारणं मृगराडिव ॥ १६१ ॥ पृष्ठेऽस्य जानुमाधाय कूर्मदेशं बभञ्ज ह । मृतिकाले पुनर्देहं विददार यथा पुरा ॥१६२॥ मर्मण्येव न हन्तव्यो मयायमिति मारुतिः । स्वपौरुषप्रकाशाय बभञ्जैनममर्मणि ॥१६३॥ भज्यमाने शरीरेऽस्य ब्रह्माण्डस्फोटसन्निभः । बभूव रावो येनैव त्रस्तमेतज्जगत्त्रयम् ॥ १६४ ॥ निहत्य कृष्णस्य रिपुं स भीमः समर्पयामास तदर्चनं हरेः । कृतां हि भीमेन समर्चनां तां समक्षमादातुमिहागतो ह्यजः ॥ १६५ ॥ स्वीकृत्य पूजां च वृकोदरस्य दृढं समाश्लिष्य च तं जनार्दनः । प्रीतो नितान्तं पुनरेव कृष्णं ननाम भीमः प्रणतोऽर्जुनेन ॥१६६॥ जग्मुः सुराश्चातितरां प्रहृष्टा ब्रह्मादयो दीनतराश्च दैत्याः । बलादुमेशस्य वरे प्रभग्ने वृकोदरेणाच्युतसंश्रयेण ॥ ॥१६७॥ सुतो ययौ शरणं तान्त्रमेशं भीमार्जुनान्सहदेवोऽस्य धीमान् ।

रथं स्वसारं च ददौ स मारुतेर्ननाम कृष्णं परयैव भक्त्या ॥ १६८ ॥ रथो ह्यसौ वसुना वासुदेवाच्छक्रान्तराप्तो वसुवंशजत्वात् । जरासुतस्यास वृकोदरस्तं हरे रथं प्रार्पयामास तस्मै ॥ १६९ ॥ कृष्णोऽस्मरद्गरुडं स ध्वजेऽभूद्रथं कृष्णोऽथारुहत्पाण्डवाभ्याम् । भीमः कन्यां सहदेवस्य हेतोः समग्रहीदनुजस्यात्मनः सः ॥ १७० ॥ नकुलस्यादान्मद्रराजो हि पूर्वं स्वीयां कन्यां सा तथैवाप्युषा हि । एका पूर्वं तेऽश्विनोश्चैव भार्या यमौ रेमाते यदुषा अश्विभार्या ॥ १७१ ॥ ततः कृष्णाया-मग्रजभ्रातृभार्यावृत्तिं हि तौ चक्रतुर्माद्रिपुत्रौ । जरासुतस्यात्मजः केशवादीन्रत्नैः समभ्यर्च्य ययावनुज्ञया ॥ १७२ ॥ तदाज्ञया पितृ-कार्याणि कृत्वा तदाज्ञयैवामुचत्तान्नृपांश्च । तैः संस्तुतः केशवो भीम-पार्थयुक्तो ययौ भक्तिनम्रैर्यथावत् ॥ १७३ ॥ संभाविताः सहदेवेन सम्यक्प्रशस्य कृष्णं भीमसेनं च सर्वे । ययुर्गृहान्स्वानपतत्केशवद्विट् जरासुतोऽन्धे तमसि क्रमेण ॥ १७४ ॥

कृष्णश्च पार्थौ च तथैकयानं समास्थिता धर्मजमभ्यगच्छन् । तेषां शङ्खध्वनिसम्बोधितात्मा राजा प्रीतश्चातितरां बभूव ॥ १७५ ॥ द्वैपायनोऽथ भगवानभिगम्य पार्थानाज्ञापयत्सकलसम्भृतिसाधनाय । तं राजसूयसहितं परमाश्वमेधयज्ञं समादिशदनन्यकृतं विरिञ्चात् ॥१७६॥ कर्ता हि तस्य परमेष्ठिपदं प्रयाति यद्यन्यसद्गुणवरैः परमेष्ठितुल्यः । भीमे मखस्य फलमभ्यधिकं विधातुं व्यासः क्रतुं तमदिशद्गुरुरब्ज-जस्य ॥ १७७ ॥ असाधारणहेतुर्यः कर्मणो यस्य चेतनः । स एव तत्फलं पूर्णं भुङ्क्तेऽन्योऽल्पमिति स्थितिः ॥ १७८ ॥ विना विष्णुं निर्णयोऽयं स हि कर्मफलोज्झितः । हेतवोऽपि हि पापस्य न प्रायः फलभागिनः ॥१७९॥ देवाः पुण्यस्य दैत्याश्च मानुषास्तु द्विभागिनः । असाधारणहेतुश्च भीम एव प्रकीर्तितः ॥ १८० ॥ यज्ञस्यास्य जरासन्ध-वधात्कर्णजयादपि । जयाच्च कीचकादीनामन्यैर्जेतुमशक्यतः ॥१८१॥



द्वितीयः फल्गुनश्चैव तृतीयस्तु युधिष्ठिरः । तस्माद्ब्रह्मपदप्राप्त्यै व्यासो भीमस्य तं क्रतुम् ॥ अनन्यकृतमादिश्य दिशां विजयमादिशत् ॥१८२॥

अथाब्रवीद्धनञ्जयो धनुर्ध्वजो रथो वरः । ममास्ति तद्दिशां जयो ममैव वाञ्छितः प्रभो ॥ १८३ ॥ इतीरितोऽखिलप्रभुर्जगाद सत्यमस्ति ते । समस्तसाधनोन्नतिर्महच्च वीर्यमस्ति हि(ते) ॥ १८४ ॥ तथापि कीचकादयो वृकोदरादृते वशम् । न यान्ति नापि ते वशं प्रयाति कर्ण एव च ॥ १८५ ॥ बलाधिकोऽसि कर्णतस्तथापि नामृतः करम् । ददाति ते ह्यतिस्पृधा न वध्य एष तेऽद्य च ॥ १८६ ॥ सवर्मकुण्डलत्वतो न वध्य एष यत्त्वया । ततो वृकोदरो दिशं प्रयातु ते पितुः प्रियाम् ॥ १८७ ॥ जीवग्राहभयात्कर्णो ददाति करमञ्जसा । भीमाय नात्र सन्देहो जितोऽनेन च संयुगे ॥ १८८ ॥ अजेयौ शर्व-वचनाद्रणे कीचकपौण्ड्रकौ । वशं प्रयातो भीमस्य तथाऽवध्योऽपि चेदिपः ॥ १८९ ॥ जीवग्राहभयं ह्येषां भीमान्मागधपातनात् । तस्मा-त्करं प्रयच्छन्ति जिता वा पूर्वमेव वा ॥ १९० ॥ प्रयाहि च त्वं धनदप्रपालितां दिशं द्वीपान्सप्त चाशेषदिक्षु । नागांश्च दैत्यांश्च तथा-धरस्थान्विजित्य शीघ्रं पुनरेहि चात्र ॥ १९१ ॥ रथो हि दिव्यो-ऽम्बरगस्तवास्ति दिव्यानि चास्त्राणि धनुश्च दिव्यम् । येऽन्ये च बाणप्रमुखा अजेयाः शर्वाश्रयास्तानपि भीम एतु ॥ १९२ ॥ तथा सुराश्चापि समस्तशोऽस्य बलिं प्रयच्छन्ति मदाज्ञयेतरे । दिशं प्रतीची-मथ दक्षिणां च यातां यमौ क्रमशो ह्यध्वरार्थे ॥ १९३ ॥ यशश्च धर्मश्च तयोरपि स्यादिति स्म कृष्णेन सुतेन काल्याः । उक्ते ययुस्ते तमभिप्रणम्य दिशो यथोक्ताः परमोरुसद्गुणम्(णाः) ॥ १९४ ॥

वृकोदरोऽजयन्नृपान्विराटमाससाद ह । जितेऽत्र कीचके रणे समाददे करं ततः ॥ १९५ ॥ ततः क्रमान्नृपाञ्जित्वा चेदीनां विषयं गतः । मातृवाक्याद्भयाच्चैव शिशुपालेन पूजितः ॥ १९६ ॥ मातृ-

ष्वसुर्गृहे चोष्य दिवसान्कतिचित्सुखम् । करं सुमहदादाय ततः पूर्वां दिशं ययौ ॥ १९७ ॥ क्रमेण सर्वान्निर्जित्य पौण्ड्रकं च महाबलम् । विरथीकृत्य कर्णं च करमादाय सर्वतः ॥ १९८ ॥ हिमवच्छिखरे देवाञ्जित्वा शक्रपुरोगमान् । क्रीडार्थं युध्यतस्तेभ्यस्तुष्टेभ्यो रत्नसञ्चयान् ॥ १९९ ॥ बाहुयुद्धेन शेषं च गरुडं च महाबलम् । क्रीडमानौ विनिर्जित्य भूषणान्याप तोपतः ॥ २०० ॥ ताभ्यां च दृढमाश्लिष्टः स्नेहविक्लिन्नया धिया । पोप्लूयमानः स ततोऽम्बुधौ बली जगाम बाणस्य पुरं हरं च । रणेऽजयद्बारणरूपमास्थितं क्रीडन्तमेतेन च तोषितो हरः ॥ २०१ ॥ पृष्टश्च गिरिशेनासौ विस्तरं दिग्जयस्य च । सिंहव्याघ्रादिरूपाश्च आत्मना विजिता यथा ॥ गरुत्मच्छेषशक्राद्या देवाः सर्वे तदब्रवीत् ॥ २०२ ॥ निशम्य शङ्करोऽखिलं मखस्य च प्रसाधकम् । हरिं ततो बलेः सुताद्ददौ च रत्नसञ्चयम् ॥ ॥ २०३ ॥ स बाणदैत्यतो महच्छिवेन दत्तमुत्तमम् । प्रगृह्य रत्नसञ्चयं स्वकं पुरं समाययौ ॥ २०४ ॥ स विप्रयादवेश्वरं द्विधा स्थितं जनार्दनम् । पुरो निधाय तद्वसु प्रभूतमानमत्तदा ॥ २०५ ॥ सोऽभिवन्द्याग्रजं चैव यथावृत्तं न्यवेदयत् । आत्मनः कृष्णयोः सर्वं धर्मराजाग्रतो मुदा ॥ २०६ ॥ यथा जिताः कीचकाद्या एकलव्यसहायवान् । यथा जितः पौण्ड्रकश्च कर्णाद्याश्च तथा परे ॥ २०७ ॥ यथा सिंहादितनवः शेषवीन्द्रेन्द्रपूर्वकाः । यथा गजतनुः शर्वस्तच्च सर्वमवर्णयत् ॥२०८॥ सम्भावितश्च कृष्णाभ्यां राज्ञा च स महाबलः । आज्ञया व्यासदेवस्य यज्ञाङ्गानि समार्जयत् ॥ २०९ ॥ ऊचे तं भगवान्व्यासो जितं सर्वं त्वयाऽरिहन् । जये सर्वस्य यज्ञोऽयं पूर्णो भवति नान्यथा ॥२१०॥ विरिञ्चः सर्वजित्पूर्वं द्वितीयस्त्वमिहाभवः । इत्युक्त्वैनं समाश्लिष्य यज्ञाङ्गानि समादिशत् ॥ २११ ॥

तदैवान्या दिशो जित्वा समीयुस्तस्य येऽनुजाः । सहदेवो



दक्षिणाशां जित्वा रत्नान्युपाहरत् ॥ २१२ ॥ तत्र रुक्मी न युयुधे सहदेवेन वीर्यवान् ॥ २१३ ॥ जितः कृष्णेन पूर्वं यः शर्वादाप धनुर्वरम् । तपसा तोषितात्कृष्णादन्यानेवामुनाऽखिलान् ॥ २१४ ॥ विजेष्यसि यदा कृष्णविरोधस्ते तदा धनुः । मामेष्यतीति तेनोक्तो न ह्यरुध्यत केशवे ॥ २१५ ॥ स्वसुः स्नेहाच्च कृष्णस्य यज्ञकारयितृत्वतः । भीमार्जुनबलाच्चैव माद्रेयाय ददौ करम् ॥ २१६ ॥ जिग्ये बलेनान्यनृपान्सहदेवः प्रतापवान् ॥ २१७ ॥ तथा स्मृतं समागतं घटोत्कचं विभीषणे । समादिशद्ययौ च सोऽप्यसौ ददौ महाकरम् ॥ ॥ २१८ ॥ पुरा हि राघवोदितं तदस्य सोऽखिलं तदा । विचार्य केशवं च तं बलं च भीमपार्थयोः ॥ दिवौकसश्च पाण्डवानवेत्य सोऽददात्करम् ॥ २१९ ॥ महौघरत्नसञ्चयं स आप्य भीमसेनजः । ययौ च माद्रिनन्दनं स चाययौ स्वकं पुरम् ॥ २२० ॥

नकुलः पश्चिमाशायां विजिग्येऽखिलभूभृतः । करमाप च वीरोऽसौ सौहार्दादेव मातुलात् ॥ आययौ च महारत्नसञ्चयेन स्वकं पुरम् ॥ २२१ ॥

अर्जुनः कपिवरोच्छ्रितध्वजं स्यन्दनं समधिरुह्य गाण्डिवी । यात एव दिशमुत्तरां तदा पार्वतेयकुनृपाः समाययुः ॥ २२२ ॥ त्रैगर्ताः पार्वतेयाश्च सहिताः पाण्डुनन्दनम् । अभ्येत्य बोधयामासुर्जानन्तस्तच्चिकीर्षितम् ॥ २२३ ॥ तान्विजित्य युगपत्स पाण्डवः सञ्जयन्क्रमश एव तां दिशम् । प्राव्रजच्च भगदत्तमूर्जितं तेन चास्य समभून्महारणः ॥ ॥२२४॥ सोऽभियुध्य सगजो दिनाष्टकं श्रान्त आह पुरुहूतनन्दनम् । ब्रूहि ते समरकारणं त्विति प्राह देहि करमित्यथार्जुनः ॥ २२५ ॥ सोऽप्यदात्करममुष्य वासवो मद्गुरुस्तव पितेति सादरम् । नैव जेतुमिह शक्ष्यसि त्वमित्यावदद्धरिवरास्त्रतेजसा ॥ २२६ ॥ स्नेहपूर्वं प्रदत्ते तु करे नैवाह चोत्तरम् । अर्जुनो व्यर्थकलहमनिच्छन्स्नेहयन्त्रितः ॥२२७॥

पार्थो जित्वाऽष्टवर्षाणि षट्द्वीपानपरानपि । अजयच्चतुर्दिशमपि सर्वशस्त्रास्त्रतेजसा ॥ २२८ ॥ पातालसप्तकं गत्वा जित्वा दैतेयदानवान् । बलेश्च विष्णुवचनात्करं जग्राह सामतः ॥ २२९ ॥ जित्वा च वासुकिं भूरिरत्नमादाय सत्वरः । आजगाम पुरं स्वीयं वीरो वत्सरमात्रतः ॥ ॥ २३० ॥

सुवर्णरत्नगिरयश्चतुर्भिस्तैः समार्जिताः । चत्वारो योजनानां हि दश त्रिंशच्छतं तथा ॥ २३१ ॥ चतुःशतं च क्रमश उच्छ्रिता दिग्जयार्जिताः । प्रतीच्याद्यपसव्येन क्रमाद्दिग्भ्यः समार्जिताः ॥२३२॥ विश्वकर्मकृतत्वात्तु पुरस्याल्पेऽपि च स्थले । अन्तर्गतास्ते गिरयस्तदद्भुतमिवाभवत् ॥२३३॥ ततो यज्ञः प्रववृते कृष्णद्वैपायनेरितः । ऋत्विजो मुनयोऽत्रासन्सर्वविद्यासु निष्ठिताः ॥ २३४ ॥ द्वैपायनोक्तविधिना दीक्षितं चक्रिरे नृपम् । ज्येष्ठत्वाद्याजमान्यं तु प्रणिधाय युधिष्ठिरे ॥ ॥ २३५ ॥ भीमार्जुनादयः सर्वे सह तेन समासिरे । ब्रह्माणीपदयोग्यत्वात्कृष्णैका यज्ञपत्न्यभूत् ॥ २३६ ॥ पदायोग्यतया नान्याः पत्न्यस्तेषां सहासिरे । आज्ञयैव जगद्धातुर्व्यासस्यानन्ततेजसः ॥२३७॥ स्थलमप्यत्र सर्वं हि रत्नहेममयं त्वभूत् । किमु पात्रादिकं सर्वं शिबिराणि च सर्वशः ॥ २३८ ॥ आहूतं दिग्जये पार्थैस्तदा लोकद्विसप्तकम् । सर्वमत्रागमद्ब्रह्मशर्वशक्रादिपूर्वकम् ॥ २३९ ॥ भीष्मो द्रोणश्च विदुरो धृतराष्ट्रः सहात्मजः । सस्त्रीका आययुस्तत्र बाह्लीकश्च सहात्मजः ॥२४०॥ तथैव यादवाः सर्वे बलभद्रपुरोगमाः । रुक्मिणीसत्यभामाद्या महिष्यः केशवस्य च ॥ २४१ ॥

तत्र सर्वजगदेकसङ्गमे तत्त्वनिर्णयकथा बभूविरे । प्राश्निकोऽत्र परिपूर्णचिद्घनो व्यास एव भगवान्बभूव ह ॥ २४२ ॥ तत्त्वनिर्णयकथासु निर्णयो वासुदेवगुणविस्तरोऽभवत् । नास्ति तत्सदृश उत्तमः कुतः पार एष न ततोऽन्य इत्यपि ॥२४३॥ बादरायणभृगूत्थरामयोः



शृण्वतोः परमनिर्णये कृते । मोदमानजनतासमागमेऽपृच्छदत्र नृपतिर्यतव्रतम् ॥ २४४ ॥ जानमानोऽपि नृपतिः कृष्णं पूज्यतमं हरिम् । संशयं भूभृतां भेत्तुं भीष्मं पप्रच्छ धर्मवित् ॥ २४५ ॥ नास्ति नारायणसममिति वादेन निर्णये । कृते ब्रह्मादिभिरपि कृष्णं मर्त्यं हि मेनिरे ॥ २४६ ॥ नृपास्तस्मादयं कृष्णो नारायण इति स्म ह । सम्यग्ज्ञापयितुं धर्मसूनुर्भीष्ममपृच्छत ॥ २४७ ॥ ब्रह्मादयः सुरा यस्माद्दृश्यन्ते मर्त्यवन्नृभिः । न चैवातितराभ्यासो नृणामस्ति मुनिष्वपि ॥ ॥ २४८ ॥ सर्वशास्त्रविदं भीष्मं जानन्त्येते नृपा अपि । तस्माद्भीष्ममपृच्छत्स कुलवृद्धत्वतस्तथा ॥ २४९ ॥ पितामहाऽग्र्यपूजार्हः कोऽत्र लोकसमागमे । ब्रह्मशर्वादयश्चात्र सन्ति राजान एव च ॥ २५० ॥ इति पृष्टोऽब्रवीद्भीष्मः कृष्णं पूज्यतमं प्रभुम् ॥ २५१ ॥ यद्यप्येकस्त्रिधा विष्णुर्वसिष्ठभृगुवृष्णिषु । प्रादुर्भूतस्तथाप्येते नृपा हि व्यासरामयोः ॥ विप्रत्वान्न विरुध्यन्ते तत एव च युक्तताम् ॥ २५२ ॥ मन्यन्ते नविरोधश्च तेषां तत्र हि तादृशः ॥ २५३ ॥ अविवादे प्रसिद्धिश्च नैवास्य भविता क्वचित् । तस्मात्कृष्णाय दातव्यमिति भीष्मेण चिन्तितम् ॥ २५४ ॥ कृष्णाय दत्ते राजानो विवादं कुर्युरञ्जसा । विवादेन च कीर्तिः स्याद्वासुदेवस्य विस्तृता ॥ ततः कृष्णायाग्र्यपूजा दत्ता पार्थैर्जगत्पुरः ॥ २५५ ॥ व्यासभार्गवयोः साक्षाद्दैक्यात्तदनन्तरम् । अग्र्यां पूजां ददुश्चान्यान्यथायोग्यमपूजयन् ॥ ॥ २५६ ॥

अग्र्योपहार उपयापित एव कृष्णे कोपादनिन्ददमुमाशु च चेदिराजः । श्रुत्वैव तत्पवनजोऽभिययौ नृपं तं हन्तुं जगद्गुरुविनिन्दकमृद्धमन्युः ॥ २५७ ॥ दूरेऽपि केशवविनिन्दनकारिजिह्वाच्छेत्स्य इत्युरुतराऽस्य सदा प्रतिज्ञा । भीमस्य तं तु जगृहे सरिदात्मजोऽथ सम्प्रोच्य केशववचो निजयोर्वधाय ॥ २५८ ॥ मयैव वध्या-

विति तावाह यत्केशवः पुरा । तच्छ्रुत्वा भीमसेनोऽपि स्थितो भीष्मकरग्रहात् ॥ २५९ ॥ जानन्नपि हरेरिष्टं स्वकर्तव्यतयोत्थितः । भीम एतावदुचितमिति मत्वा स्थितः पुनः ॥ २६० ॥ देवसङ्घभविनां महानभूद्वीक्ष्य तोष इह केशवेऽधिकाम् । अर्चनां य इह मानुषो जनो मध्य एव स तु संस्थितोऽभवत् ॥२६१॥ आसुरा इह सुयोधनादयस्तत्र ते विमनसो बभूविरे । दुर्वचोभिरधिकं च चेदिपः कृष्णमाच्छिदुरुसद्गुणार्णवम् ॥ २६२ ॥ समाह्वयच्च केशवं युधे तमाशु केशवः । निवार्य तस्य सायकाञ्जघान चारिणा प्रभुः ॥ २६३ ॥ निकृत्तमानकन्धरः स भक्तिमानभूद्धरौ । तमाश्रितश्च योऽसुरो महातमः प्रपेदिवान् ॥ २६४ ॥ जयः प्रविश्य केशवं पुनश्च पार्षदोऽभवत् ।

असौ च पाण्डवैः क्रतुः प्रवर्तितो यथोदितः ॥ २६५ ॥ सुवर्णरत्नभारकान्बहून्नृपा उपानयन् । उपायने सुयोधनं नृपोऽदिशक्रहेऽस्य च ॥ २६६ ॥ अभोजयंस्तथा द्विजान्यथेष्टभक्ष्यभोज्यकैः । सुवर्णरत्नभारकान्बहूंश्च दक्षिणां ददुः ॥ २६७ ॥ यदिष्टमास यस्य च प्रदत्तमेव पाण्डवैः । समस्तमत्र सर्वशोऽथ सस्नुरुद्धता मुदा ॥२६८॥ नदत्सुरोरुदुन्दुभिप्रगीतदेवगायकाः । प्रनृत्तदिव्ययोषितः सुरापगां व्यगाहयन् ॥ २६९ ॥ समस्तराजसंयुता विगाह्य जाह्नवीजले । पुरं ययुः पुनश्च ते स्वसद्म चागमन्सुराः ॥ २७० ॥ गतेषु सर्वराजसु स्वकं पुरं स्वकेषु च । सभीष्मकेषु सर्वशः सहाम्बिकेयकेषु च ॥ २७१ ॥ विचित्ररत्नकारिते रविप्रभे सभातले । सकेशवो वरासने विवेश धर्मनन्दनः ॥ २७२ ॥ तथैव रुक्मिणीमुखाः परिग्रहा रमेशितुः । तथैव भीमफल्गुनावुपाविशन्हरेरुप ॥ २७३ ॥ सहैव वायुसूनुना तथैव पार्षतात्मजा । उपैव रुक्मिणीं शुभां तथैव सत्यभामिनीम् ॥ २७४ ॥ यमौ च पार्षतादयो धनञ्जयान्तिकेऽविशन् । तथैव रामसात्यकी समीप एव भूभृतः ॥ २७५ ॥ समासतां च सा सभा व्यरोचताधिकं



तथा । यथा सभा स्वयम्भुवः समास्थिता च विष्णुना ॥ २७६ ॥ विचित्रहेममालिनः शुभाम्बराश्च तेऽधिकम् । स्फुरत्किरीटकुण्डला विरेजुरत्र ते नृपाः ॥२७७॥ विशेषतो जनार्दनः सभार्यको जगत्प्रभुः । यथा दिवौकसां सदस्यनन्तसद्गुणार्णवः ॥ २७८ ॥ उपासिरे च तं नृपाः समस्तशः सुहृद्गणाः ।

तदाऽजगाम खड्गभृत्सुयोधनः सहानुजः ॥ २७९ ॥ द्वारं सभाया हरिनीलरश्मिव्यूढं त्वजानन्स विहाय भित्तिम् । अभ्यन्तराणां दृशि नो विघातिनीं संस्फाटिकामाशु दृढं चुचुम्बे ॥ २८० ॥ प्रवेशयेतां च यमौ तमाशु सभां भुजौ गृह्य नृपोपदिष्टौ । तत्रोपविश्य क्षणमन्यतोऽगादमृष्यमाणः श्रियमेषु दिव्याम् ॥२८१॥ तत्रेन्द्रनीलभुवि रत्नमयानि दृष्ट्वा पद्मानि नीरमनसा जगृहे स्ववस्त्रम् । रत्नोरुदीधितिनिगूढजलं स्थलं च मत्वा पपात सहितोऽवरजैर्जलौघे ॥ २८२ ॥ तं प्राहसद्भगवता क्षितिभारनाशहेतोः सुसूचित उरुस्वरतोऽत्र भीमः । पाञ्चालराजसुतया च समं तथान्यैः स्वीयैस्तथानु जहसुर्भगवन्महिष्यः ॥ ॥२८३॥ मन्दस्मितेन किल सद्वदनेन्दुबिम्बो नारायणस्तु मुखमीक्ष्य मरुत्सुतस्य । नोवाच किञ्चिदथ धर्मसुतो निवार्य प्रास्थापयद्वसनमाल्यविलेपनानि ॥ २८४ ॥ कृष्णावृकोदरगतं बहुलं निधाय क्रोधं ययौ सशकुनिर्धृतराष्ट्रसूनुः । सुव्रीडितो नृपतिदत्तवराम्बरादीन्न्यक्कृत्य मार्गगत आह स मातुलं स्वम् ॥ २८५ ॥ यौ मामहसतां कृष्णाभीमौ कृष्णस्य सन्निधौ । तयोरकृत्वा सन्तापं नाहं जीवितुमुत्सहे ॥२८६॥ यदि मे शक्तिरत्र स्याद्घातयेयं वृकोदरम् । अग्र्यपूजां च कृष्णस्य विलुम्पेयं न संशयः ॥ २८७ ॥ ईदृशं पाण्डवैश्वर्यं दृष्ट्वा को नाम जीवितम् । इच्छेत करदा येषां वैश्यवत्सर्वभूमिपाः ॥२८८॥ इत्युक्तः शकुनिर्वैरं दृढीकर्तुं वचोऽब्रवीत् । किं ते वैरेण राजेन्द्र भ्रातृभिर्बलिभिः पुनः ॥२८९॥ अनुजीवस्व तान्वीरान्गुणज्येष्ठान्बलाधिकान् । इतीरितो-

ऽतिसंवृद्धकोप आह सुयोधनः ॥ २९० ॥ यदि तेषां तदैश्वर्यं न मां गच्छेदशेषतः । सर्वथा नैव जीवेयमिति सत्यं ब्रवीमि ते ॥ २९१ ॥ न तु बाहुबलाच्छक्यमादातुं तां श्रियं क्वचित् । नेन्द्रोऽपि समरे शक्तस्ताञ्जेतुं किमु मानुषाः ॥ २९२ ॥ इतीरितः पापतम आह गान्धारको नृपः । पापिनामखिलानां च प्रधानं चक्रवर्तिना(न)म् ॥२९३॥ यां यां श्रियं प्रदीप्तां त्वं पाण्डवेषु प्रपश्यसि । तामक्लेशत आदास्ये क्रीडन्नक्षैस्त्वदन्तिके ॥ २९४ ॥ इतीरितः प्रसन्नधीः सुयोधनो बभूव ह ।

प्रजग्मतुश्च तावुभौ विचित्रवीर्यजं नृपम् ॥ २९५ ॥ धृतराष्ट्रमथोवाच द्वापरांशोऽतिपापकृत् । नास्तिक्यरूपः शकुनिर्विवर्णं हरिणं कृशम् ॥ २९६ ॥ दुर्योधनं च तच्छ्रुत्वा कुत इत्याह दुर्मनाः । अब्रूतां तौ नृपायाशु द्वाभ्यां यन्मन्त्रितं पथि ॥२९७॥ श्रुत्वैव तन्नेत्यवदत्स भूपतिर्विरोधि धर्मस्य विनाशकारणम् । कुमन्त्रितं वो न ममैतदिष्टं स्वबाहुवीर्याप्तमहाश्रियो हि ते ॥ २९८ ॥ त्वयाऽपि निर्जित्य दिशो मखाग्र्याः कार्याः स्पृधो मा गुणवत्तमैस्तैः । विशेषतो भ्रातृभिरग्र्यपौरुषैरित्युक्त आहाशु सुयोधनस्तम् ॥२९९॥ यदि श्रियं पाण्डवानां नाक्षैराहर्तुमिच्छसि । मृतमेवाद्य मां विद्धि पाण्डवैस्त्वं सुखी भव ॥ ॥ ३०० ॥ यदि मज्जीवनार्थी त्वमानयाश्विह पाण्डवान् । सभायां देवनायैव न चाधर्मोऽत्र कश्चन ॥ ३०१ ॥ वेदानुजीविनो विप्राः क्षत्रियाः शस्त्रजीविनः । त्रुट्यते येन शत्रुश्च तच्छस्त्रं नैव चेतरत् ॥ ॥ ३०२ ॥ अतः स्वधर्म एवायं तवापि स्यात्फलं महत् । इत्युक्तो मा फलं मेऽस्तु तवैवास्त्विवति सोऽब्रवीत् ॥ ३०३ ॥ एवं ब्रुवन्नपि नृप आविष्टः कलिना स्वयम् । पुत्रस्नेहाच्च विदुरमादिशत्पाण्डवान्प्रति ॥ ॥ ३०४ ॥ आविवेश कलिस्तं हि यदा पुत्रत्वसिद्धये । अंशेन तत आरभ्य नैवास्मादपजग्मिवान् ॥ ३०५ ॥ यावत्पुरं परित्यज्य वनमेव



विवेश ह । तदन्तरा ततस्तस्य पापयुक्तं मनोऽभवत् ॥ ३०६ ॥ न्यवारयत्तं विदुरो महामतिः पापं कुलस्यापि विनाशकोऽयम् । समुद्यमो नात्र विचार्यमस्ति कृथा न तस्मादयशश्च ते स्यात् ॥ ३०७ ॥ इति ब्रुवाणं कलहोऽत्र न स्यान्निवारयामो वयमेव यस्मात् । द्रष्टुं सुतान्क्रीडत एकसंस्थानिच्छामि पार्थांश्च सुयोधनादीन् ॥ ३०८ ॥ अतः क्षिप्रमुपानेयाः पार्था इति बलोदितः । ययौ स विदुरः पार्थान्द्वारकां केशवे गते ॥ ३०९ ॥

गते हि पार्थसन्निधेः सुयोधनेऽथ नारदः । शशंस धर्मसूनुना प्रचोदितोऽरिमागतम् ॥ ३१० ॥ क उद्यमी नृपेष्विति प्रपृष्ट आह नारदः । स सौभराड्वरं शिवादवाप वृष्णिनिर्जयम् ॥ ३११ ॥ पांसुमुष्टिं सकृद्ग्रासी बहूनब्दांस्तपश्चरन् । आजगाम हरादाप्य वरं कृष्णजये पुनः ॥ ३१२ ॥ स श्रुत्वा मागधवधं दिशां विजयमेव च । राजसूयक्रतुं चैव शिशुपालवधं तथा ॥ ३१३ ॥ यदून्प्रत्युद्यमं तूर्णं करोतीति निशम्य तत् । समैक्षद्धर्मजः कृष्णमुखशीतांशुमण्डलम् ॥ ॥ ३१४ ॥ अस्त्वित्युक्त्वा स गोविन्दः प्रेषयामास यादवान् । प्रद्युम्नादीन्दिनैः कैश्चित्स्वयं चागात्सहाग्रजः ॥ ३१५ ॥ विदुरस्तु ततो गत्वा धर्मराजमथाह्वयत् । भ्रातृभिर्वार्यमाणोऽपि कृष्णया च स धर्मराट् ॥ ३१६ ॥ सार्धं मात्रा भ्रातृभिश्च कृष्णया च ययौ द्रुतम् ॥ ॥३१७॥ ज्येष्ठाज्ञयैव विदुर आह्वयन्नपि धर्मजम् । नागन्तव्यमिति प्राह दोषानुक्त्वाऽक्षजान्बहून् ॥ ३१८ ॥ इतीह दोषसश्चयस्तथापि ते पितुर्वचः । समीक्ष्य तद्द्वयं स्वयं कुरुष्व कार्यमात्मनः ॥ ३१९ ॥ इतीरितोऽपि पाण्डवो ययौ कलिप्रवेशतः । विचित्रवीर्यजं नृपं समागदत्ससैनिकः ॥ ३२० ॥

कल्यावेशान्नृपतिः प्रतिजज्ञे पूर्वमेव धर्मात्मा । आहूतो द्यूतरणान्निवर्तेयं नैव वारितोऽपीति ॥ ३२१ ॥ तेनायात्स सुहृद्भि-

निवार्यमाणो नागपुरमाशु । नहि धर्मो द्यूतकृतो विशेषतः क्षत्रियस्य
लोकगुरोः ॥ ३२२ ॥ वैचित्रवीर्यतनयेन तु पाण्डुपुत्राः सम्भाविता-
स्तमुप च न्यवसन्निशायाम् । प्रातस्तु भीष्ममुखराः सकलाश्च भूपा
आसेदुराशु च सभां सह पाण्डुपुत्रैः ॥ ३२३ ॥ वैचित्रवीर्यनृपति-
र्विदुरान्वितोऽस्य गान्धारराजसहितास्तनयाः सकर्णाः । प्राप्ताः सभातल-
मथाह्वयदत्र धर्मराजं सुतः सुबलकस्य स देवनाय ॥ ३२४ ॥ सर्वांश्च
तत्र कलिराविशदेव भीमपूर्वान्विनैव चतुरः सपृथां च कृष्णाम् ।
क्षत्तारमेव च ततो नहि भीष्ममुख्यैस्ते वारिताः कुलविनाशनकर्मवृत्ताः ॥
॥ ३२५ ॥ भीमादिभिः स विदुरेण च वार्यमाणो द्यूते निधाय पण-
मप्यखिलं स्ववित्तम् । गान्धारकेण विदिताक्षहृदा जितो द्राक्पाण्डोः
सुतोऽथ नकुलं न्यदधात्पणाय ॥३२६॥ तस्मिञ्जितेऽथ सहदेवमथार्जुनं
च भीमं च सोमकसुतां स्वमपि क्रमेण । राजा निधाय विजितोऽथ
सुयोधनः स्वं सूतं दिदेश पृषतात्मजपुत्रिकायाः ॥ ३२७ ॥ सूतो
गत्वा तदन्तं समकथयदिमां द्यूतमध्ये जिताऽसि क्षिप्रं चायाहि राज्ञां
समितिमुरुतरामित्यथो साऽप्यवादीत् । नाहं यास्ये गुरूणां समितिमिति
ययौ सोऽप्यमुं भीमभीतं ज्ञात्वा दुःशासनं सोऽप्यदिशदथ नृपो
धार्तराष्ट्रोऽनुजं स्वम् ॥३२८॥ स पापपूरुषोत्तमः प्रगृह्य केशपक्षके ।
पुरः स्वमातुरानयत्सभामयुग्मवाससीम् ॥ ३२९ ॥ समाहृता रजस्वला
जगाद भीष्मपूर्वकान् । अधर्म एष वार्यते न धर्मिभिर्भवद्विधैः ॥३३०॥
कथं छलात्मके द्यूते जिते धर्मजयो भवेत् । नहि द्यूतं धर्म्यमाहुर्विशेषेण
च भूभुजाम् ॥ ३३१ ॥ ये धर्मं न वदन्तीह न ते वृद्धा इतीरिताः ।
अवृद्धमण्डितां नैव सभेत्याहुर्मनीषिणः ॥ ३३२ ॥ कथं द्यूते जिता
चाहमजिते स्वपतौ स्थिते । समानधर्मिणीमाहुर्भार्यां यस्माद्विपश्चितः ॥
॥ ३३३ ॥ सहैव कर्म कर्तव्यं पतौ दासे हि भार्यया । दासीत्वं मे
पृथङ्न स्याज्जितेऽपि हि पतौ ततः ॥३३४॥ इत्युक्ता अपि भीष्माद्याः



कल्यावेशेन मोहिताः । पृच्छ धर्मजमित्युक्त्वा तूष्णीमेव बभूविरे ॥
॥ ३३५ ॥ दुर्योधनप्रतीपं हि न कश्चिदशकत्तदा । उवाच विदुर-
स्तत्र न धर्मोऽयमिति स्फुटम् ॥ ३३६ ॥ न तस्य वाक्यं जग्राह
धृतराष्ट्रः सहात्मजः । ऊर्ध्वबाहुः स चुक्रोश देवानां ख्यापयंस्तदा ॥
॥ ३३७ ॥ स्वाशक्तिं द्रौपदीं चाह जिता नैवासि धर्मतः । अधर्मो
हि महानेतां सभामाक्रम्य तिष्ठति ॥ ३३८ ॥ एवं तु विदुरेणोक्ते
विकर्णः पापकोऽपि सन् । आह डम्भार्थमेवात्र धर्मवित्त्वं प्रकाशयन् ॥
॥३३९॥ अधर्म एवायमिति कर्णोऽथैनमभर्त्सयत् ॥ ३४० ॥ दृष्ट्वा
भीमः क्लिश्यमानां च कृष्णां धर्मात्ययं धर्मराजे च दृष्ट्वा । राजा
शास्यो युवराजेन धर्माच्चलन्यस्माद्वाक्यमिदं बभाषे ॥ ३४१ ॥ इमां
न्यस्तवतो द्यूते धक्षणीयौ हि ते भुजौ । नैवमित्यर्जुनोऽवादीत्तमाहाथ
वृकोदरः ॥ वक्तव्यं न तु कर्तव्यं तस्मान्नहि मया कृतम् ॥ ३४२ ॥
उत्तमे वचसा शिक्षा मध्यमेऽर्थापहारणम् । अधमे देहदण्डश्च तस्मा-
द्वाच्यो युधिष्ठिरः ॥३४३॥ अथ कर्णोऽब्रवीत्कृष्णामपतिर्ह्यसि शोभने ।
धार्तराष्ट्रगृहं याहीत्यथ दुर्योधनोऽवदत् ॥ ३४४ ॥ परस्परविरोधार्थं
पाण्डवानामिदं वचः ॥ ३४५ ॥ युधिष्ठिरो दुःखहेतुस्त्वैको यद्येन-
मन्येन गुरुर्न एषः । इति ब्रूयुरथवा भीमपार्थावेकोऽपि वा भीम इहो-
त्सृजेत्त्वाम् ॥ ३४६ ॥ इत्युक्त ऊचे पवमानसूनुः पूज्योऽस्माकं धर्मजः
संशयो न । गुरुश्चाहं वोऽखिलानां यतो हि बलज्येष्ठं क्षत्रमाहुर्महान्तः ॥
॥ ३४७ ॥ बलज्यैष्ठ्ये यदि वः संशयः स्यादुत्तिष्ठध्वं सर्व एवाद्य
वीराः । मृत्नामि वः पादतलेन सर्वान्सहानुबन्धान्यश्च मां योद्धुकामः ॥
॥ ३४८ ॥ इति ब्रुवन्समुत्थितो नदन्वृकोदरो यदा । विघूर्णिता
सभाऽखिला भयान्न चाह किञ्चन ॥३४९॥ भीष्मो द्रोणो विदुराद्याः
क्षमस्व सर्वं त्वयोक्तं सत्यमित्येव हस्तौ । गृहीत्वैनं स्थापयामासुरस्मि-
न्स्थिते शान्तिं चापिरे धार्तराष्ट्राः ॥ ३५० ॥ निवारितो धर्मजेन

गुरुभिश्चापरैस्तदा । माननार्थं गुरूणां तु भीमस्तान्न जघान ह ॥३५१॥ नैवात्यवर्तते ज्येष्ठं धर्मात्मानं युधिष्ठिरम् । तेषां पापाभिवृद्ध्यर्थं ज्येष्ठवृत्तिं च दर्शयन् ॥ ३५२ ॥

अथ दुर्योधनः पापो भीमसेनस्य पश्यतः । ऊरुं सन्दर्शयामास कृष्णायै भीम आह तम् ॥३५३॥ तवोरुमेनं गदयोरुवेगया बिभेत्स्य इत्येव पुनः सुयोधनः । ऊचे नान्यद्भवतामस्ति वित्तं द्यूते कृष्णां स्थापयध्वं पणाय ॥ ३५४ ॥ अथाब्रवीद्वृकोदरः कृतेऽवमानने हरेः । निपात्य भूतले हि ते शिरो मृदिष्य इत्यलम् ॥ ३५५ ॥ स वध्य एव मे सदा परोक्षतोऽपि यो हरिम् । विनिन्दयेदिति ध्रुवं प्रतिश्रुतं हि मारुतेः ॥ ३५६ ॥ पुनश्च पापवृद्धये तदैव नो जघान तम् । विकर्तनात्मजः पुनर्जगाद सोमकात्मजाम् ॥ ३५७ ॥ प्रयाहि भूभृतो हि नो गृहं न सन्ति पाण्डवाः । इतीरिते समुत्थितो वृकोदरोऽनु चार्जुनः ॥ उभौ च तौ युधिष्ठिरो न्यवारयत्तथाऽपरे ॥ ३५८ ॥ ततो निषण्णयोस्तयोः सुयोधनो वचोऽब्रवीत् । दुःशासनैषां वासांसि दासानां नो व्यपाकुरु ॥ ३५९ ॥ इत्युक्तोऽभ्यगमत्पार्थान्स्ववासांस्यथ ते ददुः । ते चीरवसना भूत्वा तानशिष्टान्प्रकाश्य च ॥ निषेदुश्च क्षमायां ते क्षमामालम्ब्य विस्तृताम् ॥ ३६० ॥ पुनर्दुर्योधनेनोक्तः पार्थानामथ पश्यताम् । चकर्ष वासो द्रौपद्यास्तदाऽवादीद्वृकोदरः ॥ ॥ ३६१ ॥ पापेषु पूर्वस्य तथाऽधमस्य वंशे कुरूणामुरुधर्मशालिनाम् । दुःशासनस्यास्य विदार्य वक्षः पिबामि रक्तं जगतः समक्षम् ॥ ३६२ ॥ विकृष्यमाणे वसने तु कृष्णा सस्मार कृष्णं सुविशेषतोऽपि । तदाऽन्यदासीद्वसनं च तस्या दिव्यं सुसूक्ष्मं कनकावदातम् ॥ ३६३ ॥ पुनः पुनश्चैव विकृष्यमाणे दुःशासनेऽन्यानि च तादृशानि । बभूवुरन्तं न जगाम पापः श्रान्तो न्यषीदत्स्विन्नगात्रः सभायाम् ॥ ३६४ ॥ वस्त्रोच्चये शैलनिभे प्रजाते दुर्योधनः प्राह सञ्जातकोपः । प्रवेशयैनां गृहमेव



शीघ्रं किन्नश्चिरेणेति सुमन्दबुद्धिः ॥ ३६५ ॥ तच्छ्रुत्वा वचनं कृष्णा प्रतिज्ञामकरोत्तदा । भीमो दुर्योधनं हन्ता कर्णहन्ता धनञ्जयः ॥३६६॥ शकुनिं त्वक्षकितवं सहदेवो हनिष्यति । इत्युक्ते तत्तथेत्याह भीमसेनः सभातले ॥३६७॥ प्रतिज्ञामाददे पार्थस्तां माद्रीनन्दनस्तथा । नकुलः प्रतिजज्ञेऽथ शाकुनेयवधं प्रति ॥ ३६८ ॥ ततः सुयोधनानुजश्चकर्ष पार्षतात्मजाम् । गृहाय तां निशाम्य तु क्रुधाऽऽह मारुतात्मजः ॥ ॥ ३६९ ॥ अर्जुनार्जुन नैवात्र क्षमा मे तात रोचते । पतितस्यास्य देहस्य काष्ठविष्ठासमस्य च । फलानि त्रीणि शिष्यन्ते विद्या कर्म सुता इति ॥ १७० ॥ इति वेदोदितं वाक्यं न सुतो दारधर्षणे । दुष्टदारो न चाप्नोति लोकानर्थो हि दूषितः ॥ ३७१ ॥ अरक्षणाद्दूषितायां न त्यागाच्च शुभं भवेत् ॥ ३७२ ॥ अतोऽद्य सानुबन्धकान्निहन्मि धार्तराष्ट्रकान् । इति ब्रुवन्व्यलोकयद्रिपून्दहन्निवौजसा ॥ ३७३ ॥ ददर्श च महाघोरमादातुं परिघं रुषा । कर्तुं व्यवसितो बुद्ध्या निःशेषान्धार्तराष्ट्रकान् ॥ ३७४ ॥ तदा शिवा ववाशिरे सुयोधनाग्निगेहतः । तथैव तत्पितुर्गृहेऽप्यभूद्भयानकं बहु ॥ ३७५ ॥ निमित्तान्यतिघोराणि कुपिते मारुतात्मजे । दृष्ट्वाऽऽम्बिकेयो विदुरं पप्रच्छैषां फलं द्रुतम् ॥ ३७६ ॥ आह तं विदुरो ज्येष्ठं क्षणेऽस्मिंस्तव पुत्रकाः । सानुबन्धा न शिष्यन्ति वृकोदरबलाहताः ॥३७७॥ क्रीडसेऽर्भकवत्त्वं हि किं जितं किं जितं त्विति । अधर्मेण जितानत्र जितान्पश्यसि पाण्डवान् ॥ ३७८ ॥ स्त्रीषु द्यूतेषु वा दत्तं मदान्धेन नरेण वा । न दत्तमाहुर्विद्वांसस्तस्य बन्धुभिरेव च ॥ ३७९ ॥ आहार्यं पुनराहुश्च तथापि न तु पाण्डवैः । तत्कृतं तव पुत्राणां ख्यापयद्भिरशिष्टताम् ॥ ॥ ३८० ॥ इत्युक्त आहाम्बिकेयो निमित्तानां फलं कथम् । न भवेदिति स प्राह द्रुतं कृष्णा विमोच्यताम् ॥ ३८१ ॥ तोषयस्व वरैश्चैनामन्यथा ते सुतान्मृतान् । विद्धि भीमेन निष्पिष्टान्नात्र ते

संशयो भवेत् ॥ ३८२ ॥ कृष्णा च पाण्डवाश्चैव तपोवृद्धिमभीप्सवः । तपसा नैव धक्ष्यन्ति तेन जीवन्ति ते सुताः ॥ ३८३ ॥ तथापि यदि कृष्णां त्वं न मोचयसि ते सुतान् । हनिष्यति न सन्देहो बलेनैव वृकोदरः ॥ ३८४ ॥ इतीरिते विनिर्भर्त्स्य पुत्रं दुःशासनं नृपः । अमोचयद्वरैश्चैनां छन्दयामास पार्षतीम् ॥ ३८५ ॥ छन्दिता सा वरैस्तेन धर्मे भागवते स्थिता । नैवात्मनो वरान्वव्रे वव्रे तेषां विमोक्षणम् ॥ ३८६ ॥ युधिष्ठिरस्य सभ्रातुः सराष्ट्रस्य विमोक्षणम् । ददौ नृपोऽस्या न पुनश्छन्द्यमानाऽपि साऽवृणोत् ॥३८७॥ भर्तुर्विष्णोश्च नान्यस्माद्वरस्वीकार इष्यते । एवं हि भगवद्धर्मस्तस्मात्सा नावृणोत्परम् ॥ ॥ ३८८ ॥ अधर्मतो हृतत्वात्तु तद्दानं न वरो भवेत् । इति मत्वा पाण्डवानां वव्रे कृष्णा विमोक्षणम् ॥ ३८९ ॥ श्वशुरादैहिकवराः क्षत्रियायास्त्रयो यतः । उक्ताः शतं च विप्राया धर्मे भागवते ततः ॥ हेतुना तेन वव्रे सा नान्यत्किञ्चिदतः परम् ॥ ३९० ॥

ततो विमुक्ताः प्रययुश्च पार्था गुरून्प्रणम्य स्वपुरं सकृष्णाः । दुर्योधनानन्तरजो जगाद तातं निजं पापकृतां प्रधानः ॥ ३९१ ॥ समस्तपाण्डवश्रियं समागतामहो पुनः । व्यमोचयो वृकोदराद्वधश्च नो ध्रुवं भवेत् ॥ ३९२ ॥ अतः पुनश्च पाण्डवान्समाह्वयस्व नः कृते । पुनश्च देवनं भवेज्जिता वनं प्रयान्तु च ॥ ३९३ ॥ तेनोक्तः स तदा राजा पाण्डवान्पुनराह्वयत् । पुनः पित्रा समाहूतो देवनाय युधिष्ठिरः ॥ ॥३९४॥ भ्रातृभिर्वार्यमाणोऽपि कृष्णया चागमत्सभाम् । द्वादशाब्दं वने वासमज्ञातं त्वेकवत्सरम् ॥ ३९५ ॥ वासं प्रसिद्धनृपतेः पुरे नैवातिदूरतः ॥३९६॥ कृष्णायाः पाण्डवानां वा दर्शनेऽज्ञातवासिनाम् । एकस्यापि समस्तानां द्वादशाब्दं पुनर्वनम् ॥ ३९७ ॥ वत्सराज्ञातवासे च त्यागेऽप्युक्तविधेस्तथा । दुर्योधनः पणं चक्रे बुद्ध्या दुःशासनोक्तया ॥ ॥ ३९८ ॥ गान्धारेण पुनश्चाक्षहृदयज्ञेन धर्मजः । पराजितो वने



यातुमैच्छत्सभ्रातृको यदा ॥३९९॥ तदा ननर्त पापकृत्सुयोधनानुजो हसन् । वदंश्च मारुतात्मजं पुनः पुनश्च गौरिति ॥ ४०० ॥ उवाच च पुनः कृष्णां नृत्यन्नेव सभातले । अपतिर्ह्यसि कल्याणि गच्छ दुर्योधनालयम् ॥ ४०१ ॥ एतेऽखिलाः षण्ढतिलास्तमोऽन्धं प्राप्ता न चैषां पुनरुत्थितिः स्यात् । इति ब्रुवाणोऽनुचकार भीमं तदा हसन्धार्तराष्ट्राश्च सर्वे ॥४०२॥ तदाऽकरोद्भीमसेनः प्रतिज्ञां हन्ताऽस्मि वो ह्यखिलान्सङ्गरेऽहम् । इतीरिते शरणं द्रोणमेव जग्मुः समस्ता धृतराष्ट्र-पुत्राः ॥४०३॥ यत्र द्रोणस्तत्र पुत्रस्तत्र भीष्मः कृपस्तथा । न चात्येति गुरून्(रुं) भीम इति तं शरणं ययुः ॥४०४॥ अब्रवीद्धार्तराष्ट्रांश्च द्रोणो विप्रोऽपि सन्नहम् । सपुत्रः सकृपः शस्त्रं ग्रहीष्ये भवतां कृते ॥ ॥ ४०५ ॥ रक्षणे भवतां चैव कुर्यां यत्नं स्वशक्तितः । न तु भीमाद्रक्षितुं वः शक्तः सत्यं ब्रवीम्यहम् ॥ ४०६ ॥ ततो ययुः पाण्डवास्ते सभाया वनाय कृष्णासहिताः सुशूराः । गत्याऽनुचक्रे युवसिंहखेलगतिं भीमं धार्तराष्ट्रोऽपहस्य ॥ ४०७ ॥ दृष्ट्वा सभाया अर्धनिष्क्रान्तदेहो व्यावृत्य भीमः प्राह संरक्तनेत्रः । ऊरुं तवान्यं च रणे बिभेत्स्य इत्युक्त्वाऽसौ निर्गतोऽसत्सभायाः ॥ ४०८ ॥ प्रयातानन्तु तान्कुन्ती प्रययौ पुत्रगृद्धिनी । रोरुद्यमानां विदुरः स्थापयामास तां गृहे ॥४०९॥ प्रणम्य तां ययुः पार्थाः सकृष्णाः शीघ्रगामिनः । युधिष्ठिरोऽवाग्वदनो ययौ न क्रोधचक्षुषा । दहेयं कौरवान्सर्वानिति कारुणिको नृपः ॥ ॥ ४१० ॥ उद्धृत्य बाहू प्रययौ बाहुशाली वृकोदरः । आभ्या-मेवाखिलाञ्छत्रूञ्छक्तो हन्तुमहं त्विति ॥ ४११ ॥ अबद्धकेशा प्रययौ द्रौपदी सा सभातलात् । मुक्तकेशा भविष्यन्ति धार्तराष्ट्रस्त्रियस्त्विति ॥ ॥ ४१२ ॥ वर्षन्पांसून्ययौ पार्थ इत्थं शत्रुषु सायकान् । वर्षयामी-त्यभिप्रायः परमास्त्रविदां वरः ॥ ४१३ ॥ यमाववाङ्मुखौ यातौ नावयोः शत्रवो मुखम् । पश्यन्त्वस्यामवस्थायां इत्येव धृतचेतसौ ॥४१४॥

प्रेतसंस्कारसूक्तानि पठन्धौम्योऽग्रतो ययौ। हतेषु धार्तराष्ट्रेषु मया कार्याः क्रिया इति ॥४१५॥ तानथानुययुः सूता रथैः परिचतुर्दशैः। सूदाः पौरोगवाश्चैव भृत्या ये त्वाप्तकारिणः ॥ ४१६ ॥ ततस्ते जाह्नवीतीरे वने वटमुपाश्रिताः। न्यषीदन्नागतान्दृष्ट्वा समस्तान्पुरवासिनः ॥ ४१७ ॥ ततस्तु ते सर्वजगन्निवासं नारायणं नित्यसमस्तसद्गुणम्। स्वयम्भुशर्वादिभिरर्चितं सदा भक्त्याऽस्मरन्भक्तभवापहं प्रभुम् ॥ ४१८ ॥ (३१९३) ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये पाण्डववनप्रवेशो नाम एकविंशोऽध्यायः ॥ २१ ॥

---

## अथ द्वाविंशोध्यायः

॥ ॐ ॥ आगन्तुकामान्पुरवासिनस्ते संस्थाप्य कृच्छ्रेण कुरुप्रवीराः। रात्रौ प्रविष्टा गहनं वनं च किर्मीरमासेदुरथो नराशम् ॥ १ ॥ बकानुजोऽसौ निखिलैरजेयो वराद्गिरीशस्य निहन्तुकामः। सदारसोदर्यमभिप्रसस्रे भीमं महावृक्षगिरीन्प्रमुञ्चन् ॥ २ ॥ स संप्रहारं सह तेन कृत्वा भीमो निपात्याशु धरातले तम्। चक्रे मखे सङ्गरनामधेये प्रसह्य नारायणदैवते पशुम् ॥ ३ ॥ निहत्य रक्षोवनमध्यसंस्थास्तदा यतीनामयुतैः समेताः। अशीतिसाहस्रमुनिप्रवीरैर्दशांशयुक्तैः सहिता व्यचिन्तयन् ॥ ४ ॥ विचिन्त्य तेषां भरणाय धर्मजः सम्पूज्य सूर्यस्थितमच्युतं प्रभुम्। दिनेऽक्षयान्नं पिठरं तदाऽऽप रत्नादि कामवरान्नदं च ॥ ५ ॥ बभार तेनैव युधिष्ठिरस्तान्प्रत्येकशस्त्रि तदासदासिकान्। सुवर्णपात्रेषु हि भुञ्जते ये गृहे तदीये बहुकोटि दासके ॥ ६ ॥ सत्सङ्गमाकाङ्क्षिण एव तेऽवसन्पार्थैः सहान्ये



मुनीन्द्रवृन्दाः। शृण्वन्त एभ्यः परमार्थसाराः कथा वदन्तश्च पुरातनास्तथा ॥ ७ ॥ एवं गजानां बहुकोटिवृन्दांस्तथा रथानां च हयांश्च वृन्दशः। विसृज्य रत्नानि नरांश्च वृन्दशो वने विजह्रुर्दिवि देववत्सुखम् ॥ ८ ॥ गवां लक्षं प्रददाति नित्यशः सुवर्णभारांश्च शतं युधिष्ठिरः। सभ्रातृकोऽसौ वनमाप्य शक्रवन्मुमोद विप्रैः सहितो यथासुखम् ॥ ९ ॥

पार्थेषु यातेषु किमत्र कार्यमिति स्म पृष्टो विदुरोऽग्रजेन। आहूय राज्यं प्रतिपादयेति प्राहैनमाहाथ रुषाऽऽम्बिकेयः ॥१०॥ ज्ञातं प्रतीपोऽसि ममात्मजानां न मे त्वया कार्यमिहास्ति किञ्चित्। यथेष्टतस्तिष्ठ वा गच्छ वेति प्रोक्तो ययौ विदुरः पाण्डुपुत्रान् ॥ ११ ॥ तस्मिन्गते भ्रातृवियोगकर्शितः पपात भूमौ सहसैव राजा। संज्ञामवाप्यादिशदाशु संजयं जीवामि चेदाशु ममानयानुजम् ॥ १२ ॥ इतीरितः संजयः पाण्डवेयान्प्राप्यानयद्विदुरं शीघ्रमेव। सोऽप्यागतः क्षिप्रमपास्तदोषो ज्येष्ठं ववन्देऽथ स चैनमाश्लिषत् ॥ १३ ॥ अङ्के समारोप्य स मूर्ध्नि चैनमाघ्राय लेभे परमां मुदं तदा। क्षत्तारमायान्तमुदीक्ष्य सर्वे ससौबला धार्तराष्ट्रा अमर्षात्। सम्मन्त्र्य हन्तुं पाण्डवानामुतैकं छद्मोपधेनैव ससूतजा ययुः ॥ १४ ॥ विज्ञाय तेषां गमनं समस्तलोकान्तरात्मा परमेश्वरेश्वरः। व्यासोऽभिगम्यावददाम्बिकेयं निवारयाश्वेव सुतं तवेति ॥ १५ ॥ अवाप्य पार्थानयमद्य मृत्युं सहानुबन्धो गमिता ह्यसंशयम्। इतीरिते तेन निवारयेति प्रोक्तो हरिः प्राह न संवदे तैः ॥ १६ ॥ मैत्रेय आयास्यति सोऽपि वाचं शिक्षार्थमेतेष्वभिधास्यतीह। तां चेत्करोत्येष सुतस्तवास्य भद्रं तदा शप्स्यति त्वन्यथा सः ॥ १७ ॥ उक्त्वेति राजानमनन्तशक्तिर्व्यासो ययौ तत्र गतेषु तेषु। सुयोधनाद्येषु हतेषु पार्थैर्भूभारहानिर्न भवेदिति प्रभुः ॥ १८ ॥ सर्वाश्च चेष्टा भगवन्नियुक्ताः सदा समस्तस्य चितोऽचितश्च।

तथापि विष्णुर्विनिवारयेत्कचिद्वाचा विधत्ते च जनान्विडम्बयन् ॥१९॥
मैत्रेय आगादथ भूपतिश्च पुत्रान्समाहूय सकर्णसौबलान् । सम्पूजयामास
मुनिं स चाह दातुं राज्यं पाण्डवान्स प्रशंसन् ॥ २० ॥ विशेषतो
भीमबलं शशंस किर्मीरनाशादि वदन्मुनीन्द्रः । श्रुत्वाऽहसंस्तद्धृतराष्ट्रपुत्र
आस्फालयामास निजोरुमुग्रः ॥ २१ ॥ शशाप चैनं मुनिरुग्रतेजा-
स्तवोरुभेदाय भवेत्सुयुद्धम् । इत्यूचिवान्धृतराष्ट्रानतोऽपि ययौ न
चे(द्व)द्राज्यदस्त्वं तथेति ॥ २२ ॥ श्रुत्वा तु किर्मीरवधं स्वपित्रा पृष्टं
(ष्ट)क्षत्त्रोक्तं सोऽत्रसद्धार्तराष्ट्रः ।
वने वसन्तोऽथ पृथासुतास्ते वार्तां स्वकीयां प्रार्पयामासुराशु ॥
॥ २३ ॥ कृष्णे सोऽपि द्रुतमायात्ससत्यः सम्बन्धिनो ये च पाञ्चाल-
मुख्याः । क्रुद्धं कृष्णं धार्तराष्ट्राय पार्थाः क्षमापयामासुरुच्चैर्गृणन्तः ॥
॥ २४ ॥ गुणांस्तदीयानमितान्प्रणम्य तदा रुदन्ती द्रौपदी चाप
पादौ । सा पादयोः पतिता वासुदेवमस्तौत्समस्तप्रभुमात्मतन्त्रम् ॥
॥२५॥ अचिन्त्यनित्याव्ययपूर्णसद्गुणार्णवैकदेहाखिलदोषदूर । रमाब्जजे-
रेशसुरेन्द्रपूर्ववृन्दारकाणां सतताभिवन्द्य ॥ २६ ॥ समस्तचेष्टाप्रद सर्व-
जीवप्रभो विमुक्ताश्रय सर्वसार । इति ब्रुवन्ती सकलानुभूतं जगाद
सर्वेशितुरच्युतस्य ॥ २७ ॥ यस्याधिकानुग्रहपात्रभूता स्वयं हि शेषेश-
विपादिकेभ्यः । श्रुत्वा समस्तं भगवान्प्रतिज्ञां चकार तेषामखिलाश्च
योषाः ॥ पतीन्समालिङ्ग्य विमुक्तकेशा भीमाहतान्दर्शये नान्यथेति ॥
॥ २८ ॥ तां सान्तयित्वा मधुरैः सुवाक्यैर्नारायणो वाचमिमां
जगाद ॥ २९ ॥ यदीहाहं स्थितो नैवं भविताऽहं त्वयोधयम् ।
साल्वराजं दुरात्मानं हतश्चासौ सुपापकृत् ॥ ३० ॥ सन्निधानेऽथ दूरे
वा कालव्यवहितेऽपि वा । स्वभावाद्वा व्यवहिते वस्तुव्यवहितेऽपि
वा ॥ ३१ ॥ नाशक्तिर्विद्यते विष्णोर्नित्याव्यवहितत्वतः । तथापि
नरलोकस्य करोत्यनुकृतिं प्रभुः ॥३२॥ दुष्टानां दोषवृद्ध्यर्थं भीमादीनां



गुणोन्नतेः । युधिष्ठिरेऽतिवृद्धं तु राजसूयादिसम्भवम् ॥ ३३ ॥ धर्मं
च सङ्क्रामयितुं कृष्णायामनुजेषु च । योग्यताक्रमतो विष्णुरिच्छयेत्थ-
मचीकृपत् ॥ ३४ ॥ एधमानद्विडित्येव विष्णोर्नाम हि वैदिकम् ॥
॥ ३५ ॥ स्वयोग्यताया अधिकं धर्मज्ञानादिजं फलम् । भीष्मद्रोणा-
म्बिकेयादेः पार्थेष्वेव निधापितुम् ॥ ३६ ॥ पुनश्च पापवृद्ध्यर्थमजो
दुर्योधनादिषु । व्यासोऽम्बिकासुतं प्राह पार्था मेऽभ्यधिकं प्रियाः ॥
॥३७॥ तेषां प्रवासनं चैव प्रियं न मम सर्वथा । इति दुर्योधनादीनां
पापवृद्ध्यर्थमेव सः ॥ प्रिया इत्येवकथनात्पाण्डवानां शुभोन्नतेः ॥३८॥
गुरुत्वाद्भीमसेनस्य क्षमा द्यूतेऽर्जुनादिनाम् । नातिधर्मस्वरूपोऽत्र धर्मो
भीमे निरौपधः ॥३९॥ द्रौपद्या अप्यतिक्लेशात्क्षमा धर्मो महानभूत् ।
सा हि भीममनो वेद न कार्यः शाप इत्यलम् ॥ ४० ॥ तस्माद्यथा-
योग्यतया हरिणा धर्मवर्धनम् । कृतं तत्रासन्निधानं कारणं केशवो-
ऽब्रवीत् ॥ ४१ ॥ साल्वं श्रुत्वा समायान्तं रौक्मिणेयादयो मया ।
प्रस्थापिता हि भवतां सकाशे ते ययुः पुरीम् ॥ तदा साल्वोऽपि सौभेन
द्वारकामर्दयद्भृशम् ॥ ४२ ॥ प्रद्युम्न आशु निरगादथ सर्वसैन्यैरन्यैश्च
यादवगणैः सहितोऽनुजैश्च । साल्वोऽवगम्य तनयं मम तद्विमानात्पापो-
ऽवरुह्य रथमारुहदत्र योद्धुम् ॥४३॥ कृत्वा सुयुद्धममुना मम पुत्रकोऽ-
सावस्त्राणि तस्य विनिवार्य महास्त्रजालैः । दत्तं मया शरममोघमथाददे
तं हन्तुं नृपं कृतमतिस्त्वशृणोद्वचः खे ॥ ४४ ॥ नारायणेन हि पुरा
मनसाभिक्लृप्तं कृष्णावतारमुपगम्य निहन्मि साल्वम् । इत्येव तेन
हरिणापि स भार्गवेण विद्रावितो न निहतः स्वमनोऽनुसारात् ॥ ४५ ॥
वध्यस्त्वया नहि ततोऽयमयं च बाणश्चक्रायुधस्य दयितो नितराममोघः ।
मा मुञ्च तेन तमिमं विनिवर्तयेऽहं साल्वं हृदिस्थित इतीरितमीरणेन ॥
॥ ४६ ॥ श्रुत्वा वचः स पवनस्य शरं त्वमोघं सञ्जह्र आशु स च
साल्वपतिः स्वसौभम् । आरुह्य बालकलहेन किमत्र कार्यं कृष्णेन सङ्गर

इति प्रययौ स्वदेशम् ॥ ४७ ॥ प्रद्युम्नसाम्बगदसारणचारुदेष्णाः सेनां
निहत्य सह मन्त्रिगणैस्तदीयाम् । आह्लादिनः स्वपुरमाययुरप्यहं च
तत्रागमं सपदि तैः श्रुतवानशेषम् ॥ ४८ ॥ यस्मिञ्छरे करगते
विजयो ध्रुवः स्यान्मत्तेजसा तदनुसङ्ग्रहणात्सुतान्मे । यातं निशम्य
रिपुमात्मपुरीं च भग्नां दृष्ट्वैव तेन तदनुव्रजनं कृतं मे ॥ ४९ ॥ तं
सागरोपरिगसौभगतं निशाम्य मुक्ते च तेन मयि शस्त्रमहास्त्रवर्षे । तं
संनिवार्य च मया शरपूगविद्धो मायां युयोज मयि पापतमः स
साल्वः ॥ ५० ॥ ताः क्रीडया क्षणमहं समरे निशाम्य ज्ञानास्त्रतः
प्रतिविधूय बहूंश्च दैत्यान् । हत्वाऽऽशु तं च गिरिवर्षिणमाशु सौभं
वार्धौ न्यपातयमरीन्द्रविभिन्नबन्धम् ॥ ५१ ॥ तं स्यन्दने स्थितमथो
विभुजं विधाय बाणेन तद्रथवरं गदया विभिद्य । चक्रेण तस्य
च शिरो विनिकृत्त्य धातृशर्वादिभिः प्रतिनुतः स्वपुरीमगां
च ॥ ५२ ॥ तस्मादिदं व्यसनमास हि विप्रकर्षान्मे कार्यतस्त्विति
निगद्य पुनश्च पार्थान् । कृष्णां च सान्त्वयितुमत्र दिनान्युवास सत्या
च सोमकसुतामनुसान्त्वयन्ती ॥ ५३ ॥ पाण्डवानां च या भार्याः
पुत्रा अपि च सर्वशः । अन्वेव पाण्डवान्याता वनमत्रैव संस्थिताः ॥
॥ ५४ ॥ धृष्टद्युम्नस्ततः कृष्णां सान्त्वयित्वैव केशवम् । प्रणम्य
समनुज्ञातो भागिनेयैः पुरं ययौ ॥ ५५ ॥ धृष्टकेतुश्च भगिनीं
काशिराजः सुतामपि । पुरं ययतुरादाय कुन्त्यैवान्याः सह स्थिताः ॥
॥ ५६ ॥ पार्वती नकुलस्यासीद्भार्या पूर्वं तिलोत्तमा । पूर्वोक्ते चैव
यमयोर्भार्ये कुन्त्या निवारिताः ॥ ५७ ॥ सुभद्रामभिमन्युं च रथ-
मारोप्य केशवः । पाण्डवानभ्यनुज्ञाय सभार्यः स्वपुरं ययौ ॥ ५८ ॥
कञ्चित्कालं द्रौपदेया उष्य पाञ्चालके पुरे । ययुर्द्वारावतीमेव तत्रोषुः
कृष्णपालिताः ॥ ५९ ॥
ततः परं धर्मराजो निर्विण्णः स्वकृतेन ह । भ्रातृभार्यापदे कृष्णां



स्थापयामास सर्वदा ॥ ६० ॥ ऊषुर्वने च ते पार्था मुनिशेषान्नभोजिनः ।
भुक्तवत्स्वेवानुजेषु भुङ्क्ते राजा युधिष्ठिरः ॥ ६१ ॥ अलङ्घ्यत्वात्तदा-
भार्या अनुजाः पूर्वभोजिनः । तस्यानन्तरमेवैका भुङ्क्ते सा पार्षतात्मजा ॥
॥ ६२ ॥ एवं सदा विष्णुपरायणानां तत्प्रार्पणान्नैकभुजां प्रयातः ।
संवत्सरस्तत्र जगाद कृष्णा भीमाज्ञया धर्मराजं सुवेत्त्री ॥६३॥ अति-
मार्दवयुक्तत्वाद्धर्मराजश्चतुर्दशे । अपि वर्षे गुरुभयाद्राज्यं नेच्छेदिति
प्रभुः । मारुतिः प्रेषयामास कृष्णां प्रस्तावहेतवे ॥ ६४ ॥ क्षमा
सर्वत्र धर्मो न पापहेतुश्च दुर्जने । राज्ञां सामर्थ्ययुक्तानामिति संस्थाप्य
शाश्वतः ॥ ६५ ॥ हत्वा चतुर्दशे वर्षे धार्तराष्ट्रानराज्यदान् । कर्तुं
राज्यं पुरो गन्ता भवानीत्यग्रजेन ह ॥ ६६ ॥ कारयन्सत्यशपथं
विवादस्य क्रमेच्छया । आदिशत्प्रथमं कृष्णां भीमः सा नृपमब्रवीत् ॥
॥ ६७ ॥ नैव क्षमा कुजनतासु नृपस्य धर्मस्तां त्वं वृथैव धृतवानसि
सर्वकालम् । इत्युक्त आह नृपतिः परमा क्षमैव सर्वत्र तद्विधृतमेव
जगत्समस्तम् ॥ ६८ ॥ कर्ता च सर्वजगतः सुखदुःखयोर्हि नारायण-
स्तदनु दत्तमिहास्य सर्वम् । तस्मान्न कोपविषयोऽस्ति कुतश्च कश्चित्त-
स्मात्क्षमैव सकलेषु पुरोऽस्य धर्मः ॥ ६९ ॥ इत्युक्तवन्तं नृपमाह पार्षती
यदि क्षमा सर्वनरेषु धर्मः । राज्ञा न कृत्यं न च लोकयात्रा भवे-
ज्जगत्कापुरुषैर्विनश्येत् ॥ ७० ॥ सत्यं च विष्णुः सकलप्रवर्तको रमा-
विरिंचेशपुरःसराश्च । काष्ठादिवत्तद्वशगाः समस्तास्तथापि न व्यर्थता
पौरुषस्य ॥ ७१ ॥ तदाज्ञया पुरुषश्चेष्टमानश्चेष्टानुसारेण शुभाशुभस्य ।
भोक्ता न तच्चेष्टितमन्यथा भवेत्कर्ता तस्मात्पुरुषोऽप्यस्य वश्यः ॥ ७२ ॥
वृथा यदि स्यात्पौरुषं कस्य हेतोर्विधिर्निषेधश्च समस्तवेदगः । विधे-
र्निषेधस्य च नैव गोचरः पुमान्यदि स्याद्भवतो हि तौ हरेः ॥ ७३ ॥
तेनैव लेपश्च भवेदमुष्य पुण्येन पापेन च नैव चासौ । लिप्येत ताभ्यां
परमः स्वतन्त्रः कर्ता ततः पुरुषोऽप्यस्य वश्यः ॥ ७४ ॥ इतीरितो

धर्मजः कृष्णयैव निरुत्तरत्वं गमितस्त्वभर्त्सयत् । कुतर्कमाश्रित्य हरे-
रपि त्वमस्वातन्त्र्यं साधयसीति चोक्त्वा ॥ ७५ ॥ छलेन तेन प्रति-
भर्त्सिता सा क्षमापयामास नृपं यतः स्त्री । वाचालता नातितरां हि
शोभते स्त्रीणां ततः प्राह वृकोदरस्तम् ॥ ७६ ॥

राजन्विष्णुः सर्वकर्ता न चान्यस्तत्तन्त्रमेवान्यदसौ स्वतन्त्रः ।
तथापि पुंसा विहितं स्वकर्म कार्यं त्याज्यं चान्यदत्यन्तयत्नात् ॥ ७७ ॥
प्रत्यक्षमेतत्पुरुषस्य कर्म तेनानुमेया प्रेरणा केशवस्य । स्वकर्म कृत्वा
विहितं हि विष्णुना तत्प्रेरणेत्येव बुधोऽनु मन्यते ॥ ७८ ॥ तेनैति
सम्यग्गमितस्य विष्णोर्जनोऽशुभो दैवमित्येव मत्वा । हित्वा स्वकं
कर्म गतिं च तामसीं प्रयाति तस्मात्कार्यमेव स्वकर्म ॥ ७९ ॥ ज्ञातव्यं
चैवास्य विष्णोर्वशत्वं कर्तव्यं चैवात्मनः कार्यकर्म । प्रत्यक्षैषा कर्तृता
जीवसंस्था तथाऽऽगमादनुमानाच्च सर्वम् ॥ ८० ॥ विष्णोर्वशे तच्च हेयं
द्वयं च जानन्विद्वान्कुरुते कार्यकर्म । तत्प्रेरकं विष्णुमेवाभिजानन्भवे-
त्प्रमाणत्रितयानुगामी ॥ ८१ ॥ पूर्णं प्रमाणं तत्त्रयं चाविरोधेनैकत्रस्थं
तत्त्रयं चाविरोधि । पृथङ्मध्यं चाप्रमाणं विरोधि स्यात्तत्तस्मात्त्रयमेकत्र
कार्यम् ॥ ८२ ॥ अज्ञः प्रत्यक्षं त्वपहायैव दैवं मत्वा कर्तृ स्वात्मकर्म
प्रजह्यात् । विद्वाञ्जीवं विष्णुवशे विदित्वा करोति कर्तव्यमजस्रमेव ॥
॥८३॥ स्वभावाख्या योग्यता या हठाख्या याऽनादिसिद्धा सर्वजीवेषु
नित्या। सा कारणं प्रथमं तु द्वितीयमनादिकर्मैव तथा तृतीयः ॥८४॥
जीवप्रयत्नः पौरुषाख्यस्तदेतत्त्रयं विष्णोर्वशगं सर्वदैव । स कस्यचिन्न
वशे वासुदेवः परात्परः परमोऽसौ स्वतन्त्रः ॥ ८५ ॥ हठश्चासौ
तारतम्यस्थितो हि ब्रह्माणमारभ्य कलिश्च यावत् । हठाच्च कर्माणि
भवन्ति कर्मजो यत्नो यतो हठकर्मप्रयोक्ता ॥ ८६ ॥ विना यत्नं न
हठो नापि कर्म फलप्रदो वासुदेवोऽखिलस्य । स्वातन्त्र्यशक्तेर्विनियामको
हि तथाप्येतान्सोऽप्यपेक्ष्यैव युङ्क्ते ॥ ८७ ॥ एतानपेक्ष्यैव फलं



ददानीत्यस्यैव सङ्कल्प इति स्वतन्त्रता । नास्यापगच्छेत्स हि सर्वशक्ति-
र्नाशक्तता क्वचिदस्य प्रभुत्वात् ॥ ८८ ॥ तस्मात्कार्यं तेन कृतं स्वकर्म
तत्पूजार्थं तेन तत्प्राप्तिरेव । अतोऽन्यथा निरयः सर्वथा स्यात्स्वकर्म
विप्रस्य जपोपदेशौ ॥ ८९ ॥ विष्णोर्मुखाद्विप्रजातिः प्रवृत्ता मुखोत्थितं
कर्म तेनास्य सोऽदात् ॥९०॥ बाह्वोर्जातः क्षत्रियस्तेन बाह्वोः कर्मास्य
पापप्रतिवारणं हि । प्रवर्तनं साधु धर्मस्य चैव मुखस्य बाह्वोश्चाति-
सामीप्यतोऽस्य ॥९१॥ जपोपदेशौ क्षत्रियस्यापि विष्णुश्चक्रे धर्मौ यज्ञ-
कर्मापि विप्रे । वैश्यो यस्मादूरुजस्तेन तस्य प्रजावृद्धिस्तज्ञकर्मैव धर्मः ॥
॥९२॥ तत्सादृश्यात्स्थावराणां च वृद्धिः करोरूर्वोः सन्निकृष्टत्वहेतोः ।
वार्तात्मकं कर्म धर्मं चकार विष्णुस्तस्यैवांघ्रिजः शूद्र उक्तः ॥ ९३ ॥
गतिप्रधानं कर्म शुश्रूषणाख्यं सादृश्यतो हस्तपदोस्तथैव । हस्तोद्भवं
कर्म तस्यापि धर्मः सन्तानवृद्धिश्च समीपगत्वात् ॥ ९४ ॥ भुजावुरो
हृदयं यद्बलस्य ज्ञानस्य च स्थानमतो नृपाणाम् । बलं ज्ञानं चोभयं
धर्म उक्तः पाणौ कृतीनां कौशलं केवलं हि । तस्मात्पाण्योरूरुपदोरुप-
स्थितेर्विट्शूद्रकौ कर्मणां कौशलेतौ ॥ ९५ ॥ प्राधान्यतो धर्मविशेष
एष सामान्यतः सर्व एवाखिलानाम् । वयं हि देवास्तेन सर्वे हि कर्म
प्रायेण नो धर्मतामेति शश्वत् ॥ ९६ ॥ एतैर्धर्मैर्विष्णुना पूर्वक्लृप्तैः
सर्ववर्णैर्विष्णुरेवाभिपूज्यः । तद्भक्तिरेवाखिलानां च धर्मो यथायोग्यं
ज्ञानमस्यापि पूजा ॥ ९७ ॥ पिता गुरुः परमं दैवतं च विष्णुः
सर्वेषां तेन पूज्यः स एव । तद्भक्तत्वाद्देवताश्चाभिपूज्या विशेषतस्तेषु
येऽत्यन्तभक्ताः ॥ ९८ ॥ संपूजितो वासुदेवः स मुक्तिं दद्याद्देवा-
पूजितो दुःखमेव । स्वतन्त्रत्वात्सुखदुःखप्रदोऽसौ नान्यः स्वतन्त्रस्त-
[illegible]द्या यत्समस्ताः ॥ ९९ ॥ स्वतन्त्रत्वात्सुखसज्ज्ञानशक्तिपूर्वैर्गुणैः पूर्ण
[illegible]पोऽखिलैश्च । स्वतन्त्रत्वात्सर्वदोषोज्झितश्च निःसीमशक्तिर्हि यतः
स्वतन्त्रः ॥ १०० ॥ दोषास्पृष्टौ गुणपूर्तौ च शक्तिर्निःसीमत्वादिद्यते

तस्य यस्मात् । एवं गुणैरखिलैश्चापि पूर्णो नारायणः पूज्यतमः स्वधर्मैः ॥
॥ १०१ ॥ अस्माकं यत्तेन नातिक्षमैव धर्मो दुष्टानां वारणं ह्येव
कार्यं । हन्याद्दुष्टान्यः क्षत्रियः क्षत्रियांश्च विशेषतो युद्धगतान्स्मरन्हरिम्॥
॥ १०२ ॥ स्वबाहुवीर्येण च तस्य बाहू चैतन्यमात्रौ भवतः सदेहौ ।
पापाधिकांश्चैव बलाधिकांश्च हत्वा मुक्तावधिकानन्दवृद्धिः ॥ १०३ ॥
प्रीतिश्च विष्णोः परमैव तत्र तस्माद्धन्तव्याः पापिनः सर्वथैव । ये
त्वक्षधूर्ता ग्रहणं गता वा पापास्तेऽन्यैर्घातनीयाः स्वदोर्भ्याम् । राजानां
वा राजपुत्रं तथैव राजानुजं चाभियातं निहन्यात् ॥ १०४ ॥ राज्ञः
पुत्रोऽप्यकृतोद्वाहको यः स घातनीयो न स्वयं वध्य एव । क्रूरं
चान्यद्धर्मयुक्तं परैस्तत्प्रसाधनीयं क्षत्रियैर्न स्वकार्यम् ॥ १०५ ॥ एवं
धर्मो विहितो वेद एव वाक्यं विष्णोः पञ्चरात्रेषु तादृक् । अक्षद्यूतं
निकृतिः पापमेव कृतं त्वया गर्हितं सौबलेन ॥ १०६ ॥ न कुत्र-
चिद्विधिरस्यास्ति तेन न तद्दत्तं द्यूतहृतं वदन्ति । भीतेन दत्तं द्यूतदत्तं
तथैव दत्तं कामिन्यै पुनराहार्यमेव ॥ १०७ ॥ एवं धर्मः शाश्वतो
वैदिको हि द्यूते स्त्रियां नाल्पमाहार्यमाहुः । यद्येषां वै भोग्यमल्पं
तदीयं भोगेन तद्बन्धुभिस्तच्च हार्यम् ॥ १०८ ॥ निवारणे पुरुषस्य
त्वशक्तौ तद्राज्यं नः पुनराहार्यमेव । त्वं धर्मनिष्ठश्चाग्रजश्चेति राज-
न्नृतेऽनुज्ञां न मया तत्कृतं च ॥ १०९ ॥ दाताऽस्यनुज्ञां यदि
तान्निहत्य त्वय्येव राज्यं स्थापयाम्यद्य सम्यक् । सत्यं पापेष्वपि कर्तुं
यदीच्छा तथापि मासा द्वादश नः प्रयाताः ॥ ११० ॥ वेदप्रमाण्या-
द्वत्सरास्ते हि मासैः सहस्राब्दं सत्रमुक्तं नराणाम् । अज्ञातमेकं
मासमुष्याथ शत्रून्निहत्य राज्यं प्रतिपाद(ल)यामः ॥ १११ ॥ मा
मित्राणां तापकस्त्वं भवेथास्तथाऽमित्राणां नन्दकश्चैव राजन् । ज्वल-
त्स्वारीणां मूर्ध्नि मित्राणि नित्यमाह्लादयन्वासुदेवं भजस्व ॥ ११२ ॥
स्वतन्त्रत्वं वासुदेवस्य सम्यक्प्रत्यक्षतो दृश्यते ह्यद्य राजन् । यस्मात्कृष्णो



व्यजयच्छङ्करादीञ्जरासुतादीन्कादिवरैरजेयान् ॥ ११३ ॥ ब्रह्मादीनां
प्रकृतेस्तद्वशत्वं दृष्टं हि नो बहुशो व्यासदेहे । पाराशर्यो दिव्यदृष्टिं
प्रदाय स्वातन्त्र्यं नोऽदर्शयत्सर्व(दर्शयामास)लोके ॥११४॥ तस्माद्राज-
न्नभिनिर्याहि शत्रून्हन्तुं सर्वान्भोक्तुमेवाधिराज्यम् । एवं च ते कीर्तिधर्मौ
महान्तौ प्राप्यौ राजन्वासुदेवप्रसादात् ॥ ११५ ॥

एवमुक्तोऽब्रवीद्भीमं धर्मपुत्रो युधिष्ठिरः । त्रयोदशाब्दस्यान्तेऽहं
कुर्यामेव त्वदीरितम् ॥११६॥ सत्यमेतन्न सन्देहः सत्येनात्मानमालभे ।
लोकापवादभीरुं मां नातोऽन्यद्वक्तुमर्हसि ॥११७॥ तुदसे चा(ना)तिवाचा
मां यद्येवं भीम मां (मा) वदेः । तदैव मेऽत्ययः कार्यो हन्तव्याश्चैव शत्रवः ।
नैतादृशैरिदानीं तु वाक्यैर्बाधितुमर्हसि ॥११८॥ भीष्मद्रोणादयोऽस्त्रज्ञा
निवार्याश्च कथं युधि । पूज्यास्ते बाहुयुद्धेन न निवार्याः कथञ्चन ॥
॥११९॥ अस्त्राणि जानन्नपि हि प्रयोजयसि न क्वचित् । तस्मात्तदैव
गन्तव्यं विज्ञातास्त्रे धनञ्जये ॥ १२० ॥ इत्युक्तो भीमसेनस्तु स्नेह-
भङ्गभयात्ततः । नोवाच किञ्चिद्वचनं स्वाभिप्रेतमवाप्य च ॥ १२१ ॥
अभिप्रायो हि भीमस्य निश्चयेन त्रयोदशे । युधिष्ठिरस्य राज्यार्थं
गमनार्थे प्रतिश्रवः ॥१२२॥ अन्यथाऽतिमृदुत्वात्स न गच्छेद्भिन्नधीः
परैः । कृतकृत्ये तदा भीमे स्थिते धर्मात्मजो हि सः ॥ १२३ ॥
भीष्मद्रोणादिविजयः कथं स्यादिति चिन्तयन् । निवारणं गुरूणां हि
भीम इच्छति न क्वचित् ॥ १२४ ॥ तस्मात्ते ह्यर्जुनेनैव निवार्या
इत्यचिन्तयत् । आपद्येव हि भीमस्तान्निवारयति नान्यथा ॥ १२५ ॥
एवं चिन्तासमाविष्टं विज्ञायैव युधिष्ठिरम् । सर्वज्ञः सर्वशक्तिश्च कृष्ण-
द्वैपायनोऽगमत् ॥ नृपतिं बोधयामास चिन्ताव्याकुलमानसम् ॥१२६॥
इमं मन्त्रं वदिष्यामि येन जेष्यति फल्गुनः । भीष्मद्रोणादिकान्सर्वांस्तं
त्वं वद धनञ्जये ॥ १२७ ॥ इत्युक्त्वैवावदन्मन्त्रं सर्वदैवतदृष्टिदम् ।
न स्वयं ह्यवदत्पार्थे फलाधिक्यं यतो भवेत् ॥ १२८ ॥ भीष्मद्रोणादि-

विजय एतावद्वीर्यमेव हि । अलं नातोऽधिकं कार्यमेतावद्योग्यमस्य च ।
फल्गुनस्येति भगवान्न स्वयं ह्यवदन्मनुम् ॥ १२९ ॥ गते व्यासे
भगवति सर्वज्ञे सर्वकर्तरि । धर्मराजोऽवद(दिश)न्मन्त्रं फल्गुनाय
रहस्यमुम् ॥ १३० ॥

तमाप्य फल्गुनो मन्त्रं ययौ ज्येष्ठौ प्रणम्य च ॥ १३१ ॥
यमजौ च समाश्लिष्य गिरिमेवेन्द्रकीलकम् ॥ १३२ ॥ तपश्चचार
तत्रस्थः शङ्करस्थं हरिं स्मरन् । षण्मासेऽतिगतेऽपश्यन्मूकं नामासुरं
गिरौ ॥ १३३ ॥ वराहरूपमायान्तं वधार्थं फल्गुनस्य च । तं ज्ञात्वा
फल्गुनो वीरः सज्जं कृत्वा च गाण्डिवम् ॥ १३४ ॥ चिक्षेप वज्र-
समितांस्तत्काये सायकान्बहून् ॥ १३५ ॥ किरातरूपस्तमनु सभार्यश्च
त्रियम्बकः । स ममार हतस्ताभ्यां दानवः पापचेतनः ॥ १३६ ॥
तेनोक्तोऽसौ मयैवायं वराहोऽनुगतोऽद्य हि । तमविध्यो यतस्त्वं हि
तद्युध्यस्व मया सह ॥ १३७ ॥ इत्युक्तः फल्गुनः प्राह तिष्ठ तिष्ठ न
मोक्ष्यसे । इत्युक्त्वा तावुभौ युद्धं चक्रतुः पुरुषर्षभौ ॥ १३८ ॥
तत्राखिलानि शस्त्राणि फल्गुनस्याग्रसच्छिवः । ततोऽर्जुनस्तु गाण्डीवं
समादायाभ्यताडयत् ॥ १३९ ॥ तदप्यग्रसदेवासौ प्रहसन्गिरिशस्तदा ।
बाहुयुद्धं ततस्त्वासीत्तयोः पुरुषसिंहयोः ॥ १४० ॥ पिण्डीकृत्य ततो
रुद्रश्चिक्षेप च धनञ्जयम् । मूर्छामवाप महतीं फल्गुनो रुद्रपीडितः ॥
॥ १४१ ॥ पूर्वं सम्प्रार्थयामास शङ्करो गरुडध्वजम् । अवराणां वरं
मत्तो येषां त्वं सम्प्रयच्छसि ॥ १४२ ॥ अजेयत्वं प्रसादात्ते विजेयाः
स्युर्मयाऽपि ते । इत्युक्तः प्रददौ विष्णुरुमाधीशाय तं वरम् ॥ तेनाजय-
च्छ्वेतवाहं गिरिशो रणमध्यगम् ॥१४३॥ केवलान्वैष्णवान्मन्त्रान्व्यासः
पार्थाय नो ददौ । एतावताऽलं भीष्मादेर्जयार्थमिति चिह्नतः ॥१४४॥
केवलैर्वैष्णवैर्मन्त्रैः स्वदत्तैर्विजयावहैः । अतिवृद्धस्य पार्थस्य दर्पः स्यादिति
चिन्तयन् (त्वचिन्तयत्) ॥ १४५ ॥ पार्थः संज्ञामवाप्याथ जयाख्यां-



राधयच्छिवम् । व्यासोदितेन मन्त्रेण तानि पुष्पाणि तच्छिरः ॥१४६॥
आरुहन्स तु तं ज्ञात्वा रुद्र इत्येव फल्गुनः । नमश्चक्रे ततः प्रादादस्त्रं
पाशुपतं शिवः ॥ १४७ ॥ अस्त्रं तद्विष्णुदैवत्यं साधितं शङ्करेण यत् ।
तस्मात्पाशुपतं नाम स्वान्यस्त्राण्यपरे सुराः ॥ ददुस्तदैव पार्थाय सर्वे
प्रत्यक्षगोचराः ॥ १४८ ॥ इन्द्रोऽर्जुनं समागम्य प्राह प्रीतोऽस्मि
तेऽनघ ॥ १४९ ॥ रुद्रदेहस्थितं ब्रह्म विष्ण्वाख्यं तोषितं त्वया ।
तेन लोकं ममागच्छ प्रेषयामि रथं तव ॥ १५० ॥ इत्युक्त्वा प्रयया-
विन्द्रस्तद्रथेनैव मातलिः । आयात्पार्थस्तमारुह्य ययौ ताननिकेतनम् ॥
॥ १५१ ॥ पूजितो दैवतैः सर्वैरिन्द्रेणाभिनिवेशितः । तेन सार्ध-
मुपासीदत्तस्मिन्नैन्द्रे वरासने ॥ १५२ ॥ प्रीत्या समाश्लिष्य कुरुप्रवीरं
शक्रो द्वितीयां तनुमात्मनः सः । ईक्षन्मुखं तस्य मुमोद सोऽपि ह्युवास
तस्मिन्वत्सरान्पञ्च लोके ॥ १५३ ॥ अस्त्राणि तस्मा अदिशच्च वासवो
महान्ति दिव्यानि तदोर्वशी तम् । सम्प्राप्य भावेन तु मानुषेण माता
कुलस्येति निवारिताऽभूत् ॥१५४॥ षण्ढो भवेत्येव तयाऽभिशप्ते पार्थे
शक्रोऽनुग्रहं तस्य चादात् । संवत्सरं षण्ढरूपी चरस्व न षण्ढता ते
भवती(विते)ति धृष्णुः ॥ १५५ ॥ ततोऽवसत्पाण्डवेयो गान्धर्वं
वेदमभ्यसन् । गन्धर्वाच्चित्रसेनात्तु तथाऽस्त्राणि सुरेश्वरात् ॥ १५६ ॥
सुभद्रयाऽभिमन्युना सह स्वकां पुरीं गतः । जनार्दनोऽत्र
संवसन्कदाचिदित्थमैक्षत ॥ १५७ ॥ मया वरो हि शम्भवे प्रदत्त
आस पूर्वतः । वरं गृहीष्य एव ते सकाशतो विमोहयन् ॥ १५८ ॥
'त्वामाराध्य तथा शम्भो गृहीष्यामि वरं सदा । द्वापरादौ युगे भूत्वा
कलया मानुषादिषु ॥१५९॥ स्वागमैः कल्पितैस्त्वं च जनान्मद्विमुखा-
न्कुरु । मां च गोपय येन स्यात्सृष्टिरेषोत्तराधरा' ॥ १६० ॥ इति
वाक्यमृतं कर्तुमभिप्रायं विजज्ञुषी । प्रीत्यर्थं वासुदेवस्य रुक्मिणी
वाक्यमब्रवीत् ॥१६१॥ जातेऽपि पुत्रे पुत्रार्थं सा हि वेद मनोगतम् ।

तथापि विष्णुर्विनिवारयेत्कचिद्वाचा विधत्ते च जनान्विडम्बयन् ॥१९॥ मैत्रेय आगादथ भूपतिश्च पुत्रान्समाहूय सकर्णसौबलान् । सम्पूजयामास मुनिं स चाह दातुं राज्यं पाण्डवान्स प्रशंसन् ॥ २० ॥ विशेषतो भीमबलं शशंस किर्मीरनाशादि वदन्मुनीन्द्रः । श्रुत्वाऽहसंस्तद्धृतराष्ट्रपुत्र आस्फालयामास निजोरुमुग्रः ॥ २१ ॥ शशाप चैनं मुनिरुग्रतेजास्तवोरुभेदाय भवेत्सुयुद्धम् । इत्यूचिवान्धृतराष्ट्रानतोऽपि ययौ न चे(ष्ट)द्राज्यदस्त्वं तथेति ॥ २२ ॥ श्रुत्वा तु किर्मीरवधं स्वपित्रा पृष्टं (ष्ट)क्षत्त्रोक्तं सोऽत्रसद्धार्तराष्ट्रः ।

वने वसन्तोऽथ पृथासुतास्ते वार्तां स्वकीयां प्रार्पयामासुराशु ॥ ॥ २३ ॥ कृष्णे सोऽपि द्रुतमायात्ससत्यः सम्बन्धिनो ये च पाञ्चालमुख्याः । क्रुद्धं कृष्णं धार्तराष्ट्राय पार्थाः क्षमापयामासुरुच्चैर्गृणन्तः ॥ ॥ २४ ॥ गुणांस्तदीयानमितान्प्रणम्य तदा रुदन्ती द्रौपदी चाप पादौ । सा पादयोः पतिता वासुदेवमस्तौत्समस्तप्रभुमात्मतन्त्रम् ॥ ॥२५॥ अचिन्त्यनित्याव्ययपूर्णसद्गुणार्णवैकदेहाखिलदोषदूर । रमाब्जजेशेशसुरेन्द्रपूर्ववृन्दारकाणां सतताभिवन्द्य ॥ २६ ॥ समस्तचेष्टाप्रद सर्वजीवप्रभो विमुक्ताश्रय सर्वसार । इति ब्रुवन्ती सकलानुभूतं जगाद सर्वेशितुरच्युतस्य ॥ २७ ॥ यस्याधिकानुग्रहपात्रभूता स्वयं हि शेषेशविपादिकेभ्यः । श्रुत्वा समस्तं भगवान्प्रतिज्ञां चकार तेषामखिलाश्च योषाः ॥ पतीन्समालिङ्ग्य विमुक्तकेशा भीमाहतान्दर्शये नान्यथेति ॥ ॥ २८ ॥ तां सान्तयित्वा मधुरैः सुवाक्यैर्नारायणो वाचमिमां जगाद ॥ २९ ॥ यदीहाहं स्थितो नैवं भविताऽहं त्वयोधयम् । साल्वराजं दुरात्मानं हतश्चासौ सुपापकृत् ॥ ३० ॥ सन्निधानेऽथ दूरे वा कालव्यवहितेऽपि वा । स्वभावाद्वा व्यवहिते वस्तुव्यवहितेऽपि वा ॥ ३१ ॥ नाशक्तिर्विद्यते विष्णोर्नित्याव्यवहितत्वतः । तथापि नरलोकस्य करोत्यनुकृतिं प्रभुः ॥३२॥ दुष्टानां दोषवृद्ध्यर्थं भीमादीनां



गुणोन्नतेः । युधिष्ठिरेऽतिवृद्धं तु राजसूयादिसम्भवम् ॥ ३३ ॥ धर्मं च सङ्क्रामयितुं कृष्णायामनुजेषु च । योग्यताक्रमतो विष्णुरिच्छयेत्थमचीक्लृपत् ॥ ३४ ॥ एधमानद्विडित्येव विष्णोर्नाम हि वैदिकम् ॥ ॥ ३५ ॥ स्वयोग्यताया अधिकं धर्मज्ञानादिजं फलम् । भीष्मद्रोणाम्बिकेयादेः पार्थेष्वेव निधापितुम् ॥ ३६ ॥ पुनश्च पापवृद्ध्यर्थमजो दुर्योधनादिषु । व्यासोऽम्बिकासुतं प्राह पार्था मेऽभ्यधिकं प्रियाः ॥ ॥३७॥ तेषां प्रवासनं चैव प्रियं न मम सर्वथा । इति दुर्योधनादीनां पापवृद्ध्यर्थमेव सः ॥ प्रिया इत्येवकथनात्पाण्डवानां शुभोन्नतेः ॥३८॥ गुरुत्वाद्भीमसेनस्य क्षमा द्यूतेऽर्जुनादिनाम् । नातिधर्मस्वरूपोऽत्र धर्मो भीमे निरौषधः ॥३९॥ द्रौपद्या अप्यतिक्लेशात्क्षमा धर्मो महानभूत् । सा हि भीममनो वेद न कार्यः शाप इत्यलम् ॥ ४० ॥ तस्माद्यथायोग्यतया हरिणा धर्मवर्धनम् ! कृतं तत्रासन्निधानं कारणं केशवोऽब्रवीत् ॥ ४१ ॥ साल्वं श्रुत्वा समायान्तं रौक्मिणेयादयो मया । प्रस्थापिता हि भवतां सकाशे ते ययुः पुरीम् ॥ तदा साल्वोऽपि सौभेन द्वारकामर्दयद्भृशम् ॥ ४२ ॥ प्रद्युम्न आशु निरगादथ सर्वसैन्यैरन्यैश्च यादवगणैः सहितोऽनुजैश्च । साल्वोऽवगम्य तनयं मम तद्विमानात्पापोऽवरुह्य रथमारुहदत्र योद्धुम् ॥४३॥ कृत्वा सुयुद्धममुना मम पुत्रकोऽसावस्त्राणि तस्य विनिवार्य महास्त्रजालैः । दत्तं मया शरममोघमथाददे तं हन्तुं नृपं कृतमतिस्त्वशृणोद्वचः खे ॥ ४४ ॥ नारायणेन हि पुरा मनसाभिक्लृप्तं कृष्णावतारमुपगम्य निहन्मि साल्वम् । इत्येव तेन हरिणापि स भार्गवेण विद्रावितो न निहतः स्वमनोऽनुसारात् ॥ ४५ ॥ वध्यस्त्वया नहि ततोऽयमयं च बाणश्चक्रायुधस्य दयितो नितराममोघः । मा मुञ्च तेन तमिमं विनिवर्तयेऽहं साल्वं हृदिस्थित इतीरितमीरणेन ॥ ॥ ४६ ॥ श्रुत्वा वचः स पवनस्य शरं त्वमोघं सञ्जह आशु स च साल्वपतिः स्वसौभम् । आरुह्य बालकलहेन किमत्र कार्यं कृष्णेन सङ्गर

इति प्रययौ स्वदेशम् ॥ ४७ ॥ प्रद्युम्नसाम्बगदसारणचारुदेष्णाः सेनां निहत्य सह मन्त्रिगणैस्तदीयाम् । आह्लादिनः स्वपुरमाययुरप्यहं च तत्रागमं सपदि तैः श्रुतवानशेषम् ॥ ४८ ॥ यस्मिञ्छरे करगते विजयो ध्रुवः स्यान्मत्तेजसा तदनुसङ्ग्रहणात्सुतान्मे । यातं निशम्य रिपुमात्मपुरीं च भग्नां दृष्ट्वैव तेन तदनुव्रजनं कृतं मे ॥ ४९ ॥ तं सागरोपरिगसौभगतं निशाम्य मुक्ते च तेन मयि शस्त्रमहास्त्रवर्षे । तं संनिवार्य च मया शरपूगविद्धो मायां युयोज मयि पापतमः स साल्वः ॥ ५० ॥ ताः क्रीडया क्षणमहं समरे निशाम्य ज्ञानास्त्रतः प्रतिविधूय बहूंश्च दैत्यान् । हत्वाऽशु तं च गिरिवर्षिणमाशु सौभं वार्धौ न्यपातयमरीन्द्रविभिन्नबन्धम् ॥ ५१ ॥ तं स्यन्दने स्थितमथो विभुजं विधाय बाणेन तद्रथवरं गदया विभिद्य । चक्रेण तस्य च शिरो विनिकृत्त्य धातृशर्वादिभिः प्रतिनुतः स्वपुरीमगां च ॥ ५२ ॥ तस्मादिदं व्यसनमास हि विप्रकर्षान्मे कार्यतस्त्विति निगद्य पुनश्च पार्थान् । कृष्णां च सान्त्वयितुमत्र दिनान्युवास सत्या च सोमकसुतामनुसान्त्वयन्ती ॥ ५३ ॥ पाण्डवानां च या भार्याः पुत्रा अपि च सर्वशः । अन्वेव पाण्डवान्याता वनमत्रैव संस्थिताः ॥ ॥ ५४ ॥ धृष्टद्युम्नस्ततः कृष्णां सान्त्वयित्वैव केशवम् । प्रणम्य समनुज्ञातो भागिनेयैः पुरं ययौ ॥ ५५ ॥ धृष्टकेतुश्च भगिनीं काशिराजः सुतामपि । पुरं ययतुरादाय कुन्त्यैवान्याः सह स्थिताः ॥ ॥ ५६ ॥ पार्वती नकुलस्यासीद्भार्या पूर्वं तिलोत्तमा । पूर्वोक्ते चैव यमयोर्भार्ये कुन्त्या निवारिताः ॥ ५७ ॥ सुभद्रामभिमन्युं च रथमारोप्य केशवः । पाण्डवानभ्यनुज्ञाय सभार्यः स्वपुरं ययौ ॥ ५८ ॥ कश्चित्कालं द्रौपदेया उष्य पाञ्चालके पुरे । ययुर्द्वारावतीमेव तत्रोपुः कृष्णपालिताः ॥ ५९ ॥

ततः परं धर्मराजो निर्विण्णः स्वकृतेन ह । भ्रातृभार्यापदे कृष्णां



स्थापयामास सर्वदा ॥ ६० ॥ ऊषुर्वने च ते पार्था मुनिशेषान्नभोजिनः । भुक्तवत्स्वेवानुजेषु भुङ्क्ते राजा युधिष्ठिरः ॥ ६१ ॥ अलङ्घ्यत्वात्तदाज्ञाया अनुजाः पूर्वभोजिनः । तस्यानन्तरमेवैका भुङ्क्ते सा पार्षतात्मजा ॥ ॥ ६२ ॥ एवं सदा विष्णुपरायणानां तत्प्रार्पणान्नैकभुजां प्रयातः । संवत्सरस्तत्र जगाद कृष्णा भीमाज्ञया धर्मराजं सुवेत्त्री ॥६३॥ अतिमार्दवयुक्तत्वाद्धर्मराजश्चतुर्दशे । अपि वर्षे गुरुभयाद्राज्यं नेच्छेदिति प्रभुः । मारुतिः प्रेषयामास कृष्णां प्रस्तावहेतवे ॥ ६४ ॥ क्षमा सर्वत्र धर्मो न पापहेतुश्च दुर्जने । राज्ञां सामर्थ्ययुक्तानामिति संस्थाप्य शास्त्रतः ॥ ६५ ॥ हत्वा चतुर्दशे वर्षे धार्तराष्ट्रानराज्यदान् । कर्तुं राज्यं पुरो गन्ता भवानीत्यग्रजेन ह ॥ ६६ ॥ कारयन्सत्यशपथं विवादस्य क्रमेच्छया । आदिशत्प्रथमं कृष्णां भीमः सा नृपमब्रवीत् ॥ ॥ ६७ ॥ नैव क्षमा कुजनतासु नृपस्य धर्मस्तां त्वं वृथैव धृतवानसि सर्वकालम् । इत्युक्त आह नृपतिः परमा क्षमैव सर्वत्र तद्विधृतमेव जगत्समस्तम् ॥ ६८ ॥ कर्ता च सर्वजगतः सुखदुःखयोर्हि नारायणस्तदनु दत्तमिहास्य सर्वम् । तस्मान्न कोपविषयोऽस्ति कुतश्च कश्चित्तस्मात्क्षमैव सकलेषु पुरोऽस्य धर्मः ॥ ६९ ॥ इत्युक्तवन्तं नृपमाह पार्षती यदि क्षमा सर्वनरेषु धर्मः । राज्ञा न कृत्यं न च लोकयात्रा भवेज्जगत्कापुरुषैर्विनश्येत् ॥ ७० ॥ सत्यं च विष्णुः सकलप्रवर्तको रमाविरिंचेशपुरःसराश्च । काष्ठादिवत्तद्वशगाः समस्तास्तथापि न व्यर्थता पौरुषस्य ॥ ७१ ॥ तदाज्ञया पुरुषश्चेष्टमानश्चेष्टानुसारेण शुभाशुभस्य । भोक्ता न तच्चेष्टितमन्यथा भवेत्कर्ता तस्मात्पुरुषोऽप्यस्य वश्यः ॥ ७२ ॥ वृथा यदि स्यात्पौरुषं कस्य हेतोर्विधिर्निषेधश्च समस्तवेदगः । विधेर्निषेधस्य च नैव गोचरः पुमान्यदि स्याद्भवतो हि तौ हरेः ॥ ७३ ॥ तेनैव लेपश्च भवेदमुष्य पुण्येन पापेन च नैव चासौ । लिप्येत ताभ्यां परमः स्वतन्त्रः कर्ता ततः पुरुषोऽप्यस्य वश्यः ॥ ७४ ॥ इतीरितो

धर्मजः कृष्णयैव निरुत्तरत्वं गमितस्त्वभर्त्सयत् । कुतर्कमाश्रित्य हरेरपि त्वमस्वातन्त्र्यं साधयसीति चोक्त्वा ॥ ७५ ॥ छलेन तेन प्रतिभर्त्सिता सा क्षमापयामास नृपं यतः स्त्री । वाचालता नातितरां हि शोभते स्त्रीणां ततः प्राह वृकोदरस्तम् ॥ ७६ ॥

राजन्विष्णुः सर्वकर्ता न चान्यस्तत्तन्त्रमेवान्यदसौ स्वतन्त्रः । तथापि पुंसा विहितं स्वकर्म कार्यं त्याज्यं चान्यदत्यन्तयत्नात् ॥ ७७ ॥ प्रत्यक्षमेतत्पुरुषस्य कर्म तेनानुमेया प्रेरणा केशवस्य । स्वकर्म कृत्वा विहितं हि विष्णुना तत्प्रेरणेत्येव बुधोऽनु मन्यते ॥ ७८ ॥ तेनैति सम्यग्गमितस्य विष्णोर्जनोऽशुभो दैवमित्येव मत्वा । हित्वा स्वकं कर्म गतिं च तामसीं प्रयाति तस्मात्कार्यमेव स्वकर्म ॥ ७९ ॥ ज्ञातव्यं चैवास्य विष्णोर्वशत्वं कर्तव्यं चैवात्मनः कार्यकर्म । प्रत्यक्षैषा कर्तृता जीवसंस्था तथाऽऽगमादनुमानाच्च सर्वम् ॥ ८० ॥ विष्णोर्वशे तन्न हेयं द्वयं च जानन्विद्वान्कुरुते कार्यकर्म । तत्प्रेरकं विष्णुमेवाभिजानन्भवेत्प्रमाणत्रितयानुगामी ॥ ८१ ॥ पूर्णं प्रमाणं तन्नयं चाविरोधेनैकत्रस्थं तन्नयं चाविरोधि । पृथक्च्छ्यं चाप्रमाणं विरोधि स्यात्तत्तस्मान्नयमेकत्र कार्यम् ॥ ८२ ॥ अज्ञः प्रत्यक्षं त्वपहायैव दैवं मत्वा कर्तृ स्वात्मकर्म प्रजह्यात् । विद्वाञ्जीवं विष्णुवशे विदित्वा करोति कर्तव्यमजस्रमेव ॥ ॥८३॥ स्वभावाख्या योग्यता या हठाख्या याऽनादिसिद्धा सर्वजीवेषु नित्या। सा कारणं प्रथमं तु द्वितीयमनादिकर्मैव तथा तृतीयः ॥८४॥ जीवप्रयत्नः पौरुषाख्यस्तदेतत्त्रयं विष्णोर्वशगं सर्वदैव । स कस्यचिन्न वशे वासुदेवः परात्परः परमोऽसौ स्वतन्त्रः ॥ ८५ ॥ हठश्चासौ तारतम्यस्थितो हि ब्रह्माणमारभ्य कलिश्च यावत् । हठाच्च कर्माणि भवन्ति कर्मजो यत्नो यतो हठकर्मप्रयोक्ता ॥ ८६ ॥ विना यत्नं न हठो नापि कर्म फलप्रदो वासुदेवोऽखिलस्य । स्वातन्त्र्यशक्तेर्विनियामको हि तथाप्येतान्सोऽप्यपेक्ष्यैव युञ्जेत् ॥ ८७ ॥ एतानपेक्ष्यैव फलं



ददानीत्यस्यैव सङ्कल्प इति स्वतन्त्रता । नास्यापगच्छेत्स हि सर्वशक्तिर्नाशक्तता क्वचिदस्य प्रभुत्वात् ॥ ८८ ॥ तस्मात्कार्यं तेन कृतं स्वकर्म तत्पूजार्थं तेन तत्प्राप्तिरेव । अतोऽन्यथा निरयः सर्वथा स्यात्स्वकर्म विप्रस्य जपोपदेशौ ॥ ८९ ॥ विष्णोर्मुखाद्विप्रजातिः प्रवृत्ता मुखोत्थितं कर्म तेनास्य सोऽदात् ॥९०॥ बाह्वोर्जातः क्षत्रियस्तेन बाह्वोः कर्मास्य पापप्रतिवारणं हि । प्रवर्तनं साधु धर्मस्य चैव मुखस्य बाह्वोश्चातिसामीप्यतोऽस्य ॥९१॥ जपोपदेशौ क्षत्रियस्यापि विष्णुश्चक्रे धर्मौ यज्ञकर्मापि विप्रे । वैश्यो यस्मादूरुजस्तेन तस्य प्रजावृद्धिस्तज्जकर्मैव धर्मः ॥ ॥९२॥ तत्सादृश्यात्स्थावराणां च वृद्धिः करोरुर्वोः सन्निकृष्टत्वहेतोः । वार्तात्मकं कर्म धर्मं चकार विष्णुस्तस्यैवांघ्रिजः शूद्र उक्तः ॥ ९३ ॥ गतिप्रधानं कर्म शुश्रूषणाख्यं सादृश्यतो हस्तपदोस्तथैव । हस्तोद्भवं कर्म तस्यापि धर्मः सन्तानवृद्धिश्च समीपगत्वात् ॥ ९४ ॥ भुजावुरो हृदयं यद्बलस्य ज्ञानस्य च स्थानमतो नृपाणाम् । बलं ज्ञानं चोभयं धर्म उक्तः पाणौ कृतीनां कौशलं केवलं हि । तस्मात्पाण्योरूरुपदोरुपस्थितेर्विट्शूद्रकौ कर्मणां कौशलेतौ ॥ ९५ ॥ प्राधान्यतो धर्मविशेष एष सामान्यतः सर्व एवाखिलानाम् । वयं हि देवास्तेन सर्वे हि कर्म प्रायेण नो धर्मतामेति शश्वत् ॥ ९६ ॥ एतैर्धर्मैर्विष्णुना पूर्वक्लृप्तैः सर्वैर्वर्णैर्विष्णुरेवाभिपूज्यः । तद्भक्तिरेवाखिलानां च धर्मो यथायोग्यं ज्ञानमस्यापि पूजा ॥ ९७ ॥ पिता गुरुः परमं दैवतं च विष्णुः सर्वेषां तेन पूज्यः स एव । तद्भक्तत्वादेवताश्चाभिपूज्या विशेषतस्तेषु येऽत्यन्तभक्ताः ॥ ९८ ॥ संपूजितो वासुदेवः स मुक्तिं दद्यादेवापूजितो दुःखमेव । स्वतन्त्रत्वात्सुखदुःखप्रदोऽसौ नान्यः स्वतन्त्रस्तद्वशा यत्समस्ताः ॥ ९९ ॥ स्वतन्त्रत्वात्सुखसज्ज्ञानशक्तिपूर्वैर्गुणैः पूर्ण एषोऽखिलैश्च । स्वतन्त्रत्वात्सर्वदोषोज्झितश्च निःसीमशक्तिर्हि यतः स्वतन्त्रः ॥ १०० ॥ दोषास्पृष्टौ गुणपूर्तौ च शक्तिर्निःसीमत्वादिष्यते

तस्य यस्मात् । एवं गुणैरखिलैश्चापि पूर्णो नारायणः पूज्यतमः स्वधर्मैः ॥ ॥ १०१ ॥ अस्माकं यत्तेन नातिक्षमैव धर्मो दुष्टानां वारणं ह्येव कार्यं । हन्याद्दुष्टान्यः क्षत्रियः क्षत्रियांश्च विशेषतो युद्धगतान्स्मरन्हरिम्॥ ॥ १०२ ॥ स्वबाहुवीर्येण च तस्य बाहू चैतन्यमात्रौ भवतः सदेहौ । पापाधिकांश्चैव बलाधिकांश्च हत्वा मुक्तावधिकानन्दवृद्धिः ॥ १०३ ॥ प्रीतिश्च विष्णोः परमैव तत्र तस्माद्धन्तव्याः पापिनः सर्वथैव । ये त्वक्षधूर्ता ग्रहणं गता वा पापास्तेऽन्यैर्घातनीयाः स्वदोर्भ्याम् । राजानं वा राजपुत्रं तथैव राजानुजं चाभियातं निहन्यात् ॥ १०४ ॥ राज्ञः पुत्रोऽप्यकृतोद्वाहको यः स घातनीयो न स्वयं वध्य एव । क्रूरं चान्यद्धर्मयुक्तं परैस्तत्प्रसाधनीयं क्षत्रियैर्न स्वकार्यम् ॥ १०५ ॥ एवं धर्मो विहितो वेद एव वाक्यं विष्णोः पञ्चरात्रेषु तादृक् । अक्षद्यूते निकृतिः पापमेव कृतं त्वया गर्हितं सौबलेन ॥ १०६ ॥ न कुत्र- चिद्विधिरस्यास्ति तेन न तद्दत्तं द्यूतहृतं वदन्ति । भीतेन दत्तं द्यूतदत्तं तथैव दत्तं कामिन्यै पुनराहार्यमेव ॥ १०७ ॥ एवं धर्मः शाश्वतो वैदिको हि द्यूते स्त्रियां नाल्पमाहार्यमाहुः । यद्येषां वै भोग्यमत्र तदीयं भोगेन तद्बन्धुभिस्तच्च हार्यम् ॥ १०८ ॥ निवारणे पुरुषस्य त्वशक्तौ तद्राज्यं नः पुनराहार्यमेव । त्वं धर्मनिष्ठश्चाग्रजश्चेति राज- न्नृतेऽनुज्ञां न मया तत्कृतं च ॥ १०९ ॥ दाताऽस्यनुज्ञां यदि तान्निहत्य त्वय्येव राज्यं स्थापयाम्यद्य सम्यक् । सत्यं पापेष्वपि कर्तुं यदीच्छा तथापि मासा द्वादश नः प्रयाताः ॥ ११० ॥ वेदप्रामाण्या- द्वत्सरास्ते हि मासैः सहस्राब्दं सत्रमुक्तं नराणाम् । अज्ञातमेक- मासमुष्याथ शत्रून्निहत्य राज्यं प्रतिपाद(ल)यामः ॥ १११ ॥ मा मित्राणां तापकस्त्वं भवेथास्तथाऽमित्राणां नन्दकश्चैव राजन् । ज्वल- स्वारीणां मूर्ध्नि मित्राणि नित्यमाह्लादयन्वासुदेवं भजस्व ॥ ११२ ॥ स्वतन्त्रत्वं वासुदेवस्य सम्यक्प्रत्यक्षतो दृश्यते ह्यद्य राजन् । यस्मात्कृष्णो



ह्यजयच्छङ्करादीञ्जरासुतादीन्कादिवैरैरजेयान् ॥ ११३ ॥ ब्रह्मादीनां प्रकृतेस्तद्वशत्वं दृष्टं हि नो बहुशो व्यासदेहे । पाराशर्यो दिव्यदृष्टिं प्रदाय स्वातन्त्र्यं नोऽदर्शयत्सर्व(दर्शयामास)लोके ॥११४॥ तस्माद्राज- न्नभिनिर्याहि शत्रून्हन्तुं सर्वान्भोक्तुमेवाधिराज्यम् । एवं च ते कीर्तिधर्मौ महान्तौ प्राप्यौ राजन्वासुदेवप्रसादात् ॥ ११५ ॥

एवमुक्तोऽब्रवीद्भीमं धर्मपुत्रो युधिष्ठिरः । त्रयोदशाब्दस्यान्तेऽहं कुर्यामेव त्वदीरितम् ॥११६॥ सत्यमेतन्न सन्देहः सत्येनात्मानमालभे । लोकापवादभीरुं मां नातोऽन्यद्वक्तुमर्हसि ॥११७॥ तुदसे चा(ना)तिवाचा मां यद्येवं भीम मां (मा) वदेः । तदैव मेऽत्ययः कार्यो हन्तव्याश्चैव शत्रवः । नैतादृशैरिदानीं तु वाक्यैर्बाधितुमर्हसि ॥११८॥ भीष्मद्रोणादयोऽस्त्रज्ञा निवार्याश्च कथं युधि । पूज्यास्ते बाहुयुद्धेन न निवार्याः कथञ्चन ॥ ॥११९॥ अस्त्राणि जानन्नपि हि प्रयोजयसि न क्वचित् । तस्मात्तदैव गन्तव्यं विज्ञातास्त्रे धनञ्जये ॥ १२० ॥ इत्युक्तो भीमसेनस्तु स्नेह- भङ्गभयात्ततः । नोवाच किञ्चिद्वचनं स्वाभिप्रेतमवाप्य च ॥ १२१ ॥ अभिप्रायो हि भीमस्य निश्चयेन त्रयोदशे । युधिष्ठिरस्य राज्यार्थं गमनार्थे प्रतिश्रवः ॥१२२॥ अन्यथाऽतिमृदुत्वात्स न गच्छेद्भिन्नधीः परैः । कृतकृत्ये तदा भीमे स्थिते धर्मात्मजो हि सः ॥ १२३ ॥ भीष्मद्रोणादिविजयः कथं स्यादिति चिन्तयन् । निवारणं गुरूणां हि भीम इच्छति न क्वचित् ॥ १२४ ॥ तस्मात्ते ह्यर्जुनेनैव निवार्या इत्यचिन्तयत् । आपद्येव हि भीमस्तान्निवारयति नान्यथा ॥ १२५ ॥ एवं चिन्तासमाविष्टं विज्ञायैव युधिष्ठिरम् । सर्वज्ञः सर्वशक्तिश्च कृष्ण- द्वैपायनोऽगमत् ॥ नृपतिं बोधयामास चिन्ताव्याकुलमानसम् ॥१२६॥ इमं मन्त्रं वदिष्यामि येन जेष्यति फल्गुनः । भीष्मद्रोणादिकान्सर्वांस्तं त्वं वद धनञ्जये ॥ १२७ ॥ इत्युक्त्वैवावदन्मन्त्रं सर्वदैवतदृष्टिदम् । न स्वयं ह्यवदत्पार्थे फलाधिक्यं यतो भवेत् ॥ १२८ ॥ भीष्मद्रोणादि-

विजय एतावद्वीर्यमेव हि । अलं नातोऽधिकं कार्यमेतावद्योग्यमस्य च । फल्गुनस्येति भगवान्न स्वयं ह्यवदन्मनुम् ॥ १२९ ॥ गते व्यासे भगवति सर्वज्ञे सर्वकर्तरि । धर्मराजोऽवद(दिश)न्मन्त्रं फल्गुनाय रहस्यमुम् ॥ १३० ॥

तमाप्य फल्गुनो मन्त्रं ययौ ज्येष्ठौ प्रणम्य च ॥ १३१ ॥ यमजौ च समाश्लिष्य गिरिमेवेन्द्रकीलकम् ॥ १३२ ॥ तपश्चचार तत्रस्थः शङ्करस्थं हरिं स्मरन् । षण्मासेऽतिगतेऽपश्यन्मूकं नामासुरं गिरौ ॥ १३३ ॥ वराहरूपमायान्तं वधार्थं फल्गुनस्य च । तं ज्ञात्वा फल्गुनो वीरः सज्जं कृत्वा च गाण्डिवम् ॥ १३४ ॥ चिक्षेप वज्र-समितांस्तत्काये सायकान्बहून् ॥ १३५ ॥ किरातरूपस्तमनु सभार्य त्रियम्बकः । स ममार हतस्ताभ्यां दानवः पापचेतनः ॥ १३६ ॥ तेनोक्तोऽसौ मयैवायं वराहोऽनुगतोऽद्य हि । तमविध्यो यतस्त्वं तद्युध्यस्व मया सह ॥ १३७ ॥ इत्युक्तः फल्गुनः प्राह तिष्ठ तिष्ठ न मोक्ष्यसे । इत्युक्त्वा तावुभौ युद्धं चक्रतुः पुरुषर्षभौ ॥ १३८ ॥ तत्राखिलानि शस्त्राणि फल्गुनस्याग्रसच्छिवः । ततोऽर्जुनस्तु गाण्डीवं समादायाभ्यताडयत् ॥ १३९ ॥ तदप्यग्रसदेवासौ प्रहसन्गिरिशस्तदा । बाहुयुद्धं ततस्त्वासीत्तयोः पुरुषसिंहयोः ॥ १४० ॥ पिण्डीकृत्य ततो रुद्रश्चिक्षेप च धनञ्जयम् । मूर्छामवाप महतीं फल्गुनो रुद्रपीडितः ॥ ॥ १४१ ॥ पूर्वं सम्प्रार्थयामास शङ्करो गरुडध्वजम् । अवराणां मत्तो येषां त्वं सम्प्रयच्छसि ॥ १४२ ॥ अजेयत्वं प्रसादात्ते विजेयास्युर्मयाऽपि ते । इत्युक्तः प्रददौ विष्णुरुमाधीशाय तं वरम् ॥ तेनाजय-च्छ्वेतवाहं गिरिशो रणमध्यगम् ॥१४३॥ केवलान्वैष्णवान्मन्त्रान्व्यास पार्थाय नो ददौ । एतावताऽलं भीष्मादेर्जयार्थमिति चिद्घनः ॥१४४॥ केवलैर्वैष्णवैर्मन्त्रैः स्वदत्तैर्विजयावहैः । अतिवृद्धस्य पार्थस्य दर्पः स्यादिति चिन्तयन् (त्यचिन्तयत्) ॥ १४५ ॥ पार्थः संज्ञामवाप्याथ जया



राधयच्छिवम् । व्यासोदितेन मन्त्रेण तानि पुष्पाणि तच्छिरः ॥१४६॥ आरुहन्स तु तं ज्ञात्वा रुद्र इत्येव फल्गुनः । नमश्चक्रे ततः प्रादादस्त्रं पाशुपतं शिवः ॥ १४७ ॥ अस्त्रं तद्विष्णुदैवत्यं साधितं शङ्करेण यत् । तस्मात्पाशुपतं नाम स्वान्यस्त्राण्यपरे सुराः ॥ ददुस्तदैव पार्थाय सर्वे प्रत्यक्षगोचराः ॥ १४८ ॥ इन्द्रोऽर्जुनं समागम्य प्राह प्रीतोऽस्मि तेऽनघ ॥ १४९ ॥ रुद्रदेहस्थितं ब्रह्म विष्ण्वाख्यं तोषितं त्वया । तेन लोकं ममागच्छ प्रेषयामि रथं तव ॥ १५० ॥ इत्युक्त्वा प्रययाविन्द्रस्तद्रथेनैव मातलिः । आयात्पार्थस्तमारुह्य ययौ तातनिकेतनम् ॥ ॥ १५१ ॥ पूजितो दैवतैः सर्वैरिन्द्रेणाभिनिवेशितः । तेन सार्ध-मुपासीदत्तस्मिन्नैन्द्रे वरासने ॥ १५२ ॥ प्रीत्या समाश्लिष्य कुरुप्रवीरं शक्रो द्वितीयां तनुमात्मनः सः । ईक्षन्मुखं तस्य मुमोद सोऽपि ह्युवास तस्मिन्वत्सरान्पञ्च लोके ॥ १५३ ॥ अस्त्राणि तस्मा अदिशच्च वासवो महान्ति दिव्यानि तदोर्वशी तम् । सम्प्राप्य भावेन तु मानुषेण माता कुलस्येति निवारिताऽभूत् ॥१५४॥ षण्ढो भवेत्येव तयाऽभिशप्ते पार्थे शक्रोऽनुग्रहं तस्य चादात् । संवत्सरं षण्ढरूपी चरस्व न षण्ढता ते भवती(विते)ति धृष्णुः ॥ १५५ ॥ ततोऽवसत्पाण्डवेयो गान्धर्वं वेदमभ्यसन् । गन्धर्वाच्चित्रसेनात्तु तथाऽस्त्राणि सुरेश्वरात् ॥ १५६ ॥

सुभद्रयाऽभिमन्युना सह स्वकां पुरीं गतः । जनार्दनोऽत्र वसन्कदाचिदित्थमैक्षत ॥ १५७ ॥ मया वरो हि शम्भवे प्रदत्त आस पूर्वतः । वरं गृहीष्य एव ते सकाशतो विमोहयन् ॥ १५८ ॥ 'त्वामाराध्य तथा शम्भो गृहीष्यामि वरं सदा । द्वापरादौ युगे भूत्वा कलया मानुषादिषु ॥१५९॥ स्वागमैः कल्पितैस्त्वं च जनान्मद्विमुखान्कुरु । मां च गोपय येन स्यात्सृष्टिरेषोत्तराधरा' ॥ १६० ॥ इति वाक्यमृतं कर्तुमभिप्रायं विजज्ञुषी । प्रीत्यर्थं वासुदेवस्य रुक्मिणी वाक्यमब्रवीत् ॥१६१॥ जातेऽपि पुत्रे पुत्रार्थं सा हि वेद मनोगतम् ।

पुत्रो मे बलवान्देव सात्सर्वास्त्रविदुत्तमः ॥ १६२ ॥ इत्युक्तो भगवान्देव्या सम्मोहाय सुरद्विषाम्। ययौ सुपर्णमारुह्य स्वीयं बदरिकाश्रमम् ॥१६३॥ 'एष मोहं सृजाम्याशु यो जनान्मोहयिष्यति। त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ॥ १६४ ॥ अतथ्यानि वितथ्यानि दर्शयस्व महाभुज। प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु ॥ १६५ ॥ अहं त्वां पूजयिष्यामि लोकसम्मोहनोत्सुकः। तमोऽसुरा नान्यथा हि यान्तीत्येतन्मतं मम' ॥ १६६ ॥ इत्युक्तं वचनं पूर्वं केशवेन शिवाय यत्। तत्सत्यं कर्तुमायान्तं(तं) कृष्णं बदरिकाश्रमम् ॥ सर्वज्ञा मुनयः सर्वे पूजयाञ्चक्रिरे प्रभुम् ॥१६७॥ रात्रौ कृष्णे मुनिमध्ये प्रविष्टे घण्टाकर्णः कर्णनामा पिशाचौ। समायातौ गिरिशेन प्रदिष्टौ कृष्णं द्रष्टुं द्वारकां गन्तुकामौ ॥ १६८ ॥ तौ दृष्ट्वा मुनिमध्यस्थं केशवं तदबोधतः। कृत्वा स्वजातिचेष्टाश्च ध्यानेनैनमपश्यताम् ॥ १६९ ॥ दृष्ट्वा हृदि स्थितं तौ तु कौतूहलसमन्वितौ। स्तुत्वा भक्त्या प्रणामं च बहुशश्चक्रतुः शुभौ ॥ १७० ॥ तयोः प्रसन्नो भगवान्स्पृष्ट्वा गन्धर्वसत्तमौ। चकार क्षणमात्रेण दिव्यरूपस्वरान्वितौ ॥ १७१ ॥ ताभ्यां पुनर्नृत्तगीतसंस्तवैः पूजितः प्रभुः। ययौ कैलासमद्रीशं चकारेव तपोऽत्र च ॥ १७२ ॥ स्वीयानेव गुणान्विष्णुर्भुञ्जन्नित्येन शोचिषा। शार्वं तपः करोतीव मोहयामास दुर्जनान् ॥ १७३ ॥ पूर्वं तेनोदितं यत्तल्लोकान्मोहयताऽञ्जसा। शर्वं प्रति तवाहं तु कुर्यां द्वादशवत्सरम् ॥ १७४ ॥ तपोऽसुराणां मोहाय सुराः सन्तु गतज्वराः। इति तस्मात्तदा कृष्ण एकाहेन बृहस्पतिम् ॥ ॥ १७५ ॥ स्वाज्ञया चारयामास क्षिप्रं द्वादशराशिषु। द्वादशाब्दमभूत्तेन तदहः केशवाज्ञया ॥ १७६ ॥ एकस्मिन्नह्नि भगवान्राशिं राशिं च वत्सरम्। कल्पयित्वोपवासादीन्मनसा नियमानपि ॥१७७॥ मासव्रतं सार्धशतश्वासकालैरकल्पयत्। मनसैव स्वभक्तानां द्वादशाब्द-



प्रताप्तये ॥ १७८ ॥ तत्रास्य गरुडाद्यास्तु परिचर्यां स्वपार्षदाः। चक्रुर्होमादिकाश्चैव क्रियाश्चक्रे जनार्दनः ॥ स्वात्मानं प्रति पापानां शिवायेति प्रकाशयन् ॥ १७९ ॥ एवं स्थितं तमरविन्ददलायताक्षं ब्रह्मेन्द्रपूर्वसुरयोगिवरप्रजेशाः। अभ्याययुः पितृमुनीन्द्रगणैः समेता गन्धर्वसिद्धवरयक्षविहङ्गमाद्याः ॥१८०॥ शर्वोऽपि सर्वसुरदैवतमात्मदैवमायान्तमात्मगृहसन्निधिमाश्ववेत्य। अभ्याययौ निजगणैः सहितः सभार्यो भक्त्याऽतिसम्भ्रमगृहीतसमर्हणाग्रयः ॥ १८१ ॥ अभ्येत्य पादयुगलं जगदेकभर्तुः कृष्णस्य भक्तिभरितः शिरसा ननाम। चक्रे स्तुतिं च परमां परमस्य पूर्णषाड्गुण्यविग्रहविदोषमहाविभूतेः ॥१८२॥ कृष्णोऽप्ययोग्यजनमोहनमेव वाञ्छंस्तुष्टाव रुद्रहृदिगं निजमेव रूपम्। रुद्रो निशम्य तदुवाच सुरान्समस्तान्सत्यं वदामि शृणुताद्य वचो मदीयम् ॥ १८३ ॥ विष्णुः समस्तसुजनैः परमोऽभ्युपेयस्तत्प्राप्तयेऽहमनिलोऽथ रमाऽभ्युपेयाः। एष ह्यशेषनिगमार्थविनिर्णयोऽर्थो यद्विष्णुरेव परमो मम चाब्जयोनेः ॥ १८४ ॥ अव्यक्ततः सकलजीवगणाच्च नित्यमित्येव निश्चय उतैतदनुस्मरध्वम्। इत्युक्तवत्यखिलदेवगणा गिरीशे कृष्णं प्रणेमुरतिवृद्धरमेशभक्त्या ॥१८५॥ उक्तैरन्यैश्च गिरिशवाक्यैस्तत्त्वविनिर्णयैः। कृष्णस्यैव गुणाख्यानैः पुनरिन्द्रादिदेवताः ॥ ज्ञानाभिवृद्धिमगमन्पुराऽपि ज्ञानिनोऽधिकम् ॥ १८६ ॥ सर्वदेवोत्तमं तं हि जानन्त्येव सुराः सदा। तथाऽपि तत्प्रमाणानां बहुत्वाद्यत्र (द्येऽत्र) संशयाः ॥१८७॥ युक्तिमात्रात्तेऽपि रुद्रवाक्यादपगतास्तदा ॥१८८॥ ततः कृष्णः सुतवरं त्वत्त आदास्य इत्यजः। यदुक्तवाञ्छिवं पूर्वं सत्यं कर्तुं तदब्रवीत् ॥ १८९ ॥ पुत्रं देहीति सोऽप्याह पूर्वमेव सुतस्तव। जातः प्रद्युम्ननामा यः स मद्दत्तः प्रवादतः ॥ १९० ॥ पुरा दग्धो मया कामस्तदाऽयाचत मां रतिः। देहि कान्तं ममेत्येव तदा तामहमब्रुवम् ॥१९१॥ उत्पत्स्यते वासुदेवाद्य(त्त)दा त्वं पतिमाप्स्यसि।

इत्यतोऽसौ मया दत्त इव देव त्वदाज्ञया ॥ १९२ ॥ दासोऽस्मि तव देवेश पाहि मां शरणागतम् । इत्युक्त्वाऽभिप्रणम्यैनं पुनराह सुरान्हरः ॥ ॥ १९३ ॥ यदर्थमेष आयातः केशवः शृणुतामराः ॥ १९४ ॥ योऽसुरो वक्रनामासीदवध्यो ब्रह्मणो वरात् । तदा जाताद्वासुदेवपुत्रात्कामादृते क्वचित् ॥ १९५ ॥ तं हन्तुमेव पुत्रं स्वं प्रद्युम्नमुदरेऽर्प्य च । आयात इह तं चापि ददाह स्वोदरात्सुतम् ॥ निःसारयित्वा कक्षं च दग्धं पश्यत देवताः ॥ १९६ ॥ ज्वालामालाकरालेन स्वतेजोवर्धितेन च । प्रद्युम्नेनैव तं दैत्यं दग्ध्वा वनसमन्वितम् ॥ पुनश्च स्वोदरे पुत्रं स्थापयामास केशवः ॥ १९७ ॥ सद्यो गर्भे पुनस्तं च रुक्मिण्यां जनयिष्यति ॥ १९८ ॥ पूर्ववत्क्षणमात्रेण युवा च स भविष्यति ॥ १९९ ॥ दृष्टमेतन्नारदाद्यैर्मुनिभिः सर्वमेव च । एवं क्रीडत्ययं देवः पूर्णैश्वर्येण केवलम् ॥ इत्युक्ते केशवं नेमुर्देवाः शक्रपुरोगमाः ॥ २०० ॥ ततो हरिर्ब्रह्मसुरेन्द्रमुख्यैः सुरैः स्तुतो गरुडस्कन्धसंस्थः । पुनःपुनः प्रणतः शङ्करेण स्तुतस्तृतीयेऽह्नि निजां पुरीमगात् ॥ २०१ ॥

कृष्णे प्रयाते निलयं पुरद्विषो रात्रौ पौण्ड्रो वासुदेवः समागात् । सहैकलव्येन निजेन मातुः पित्रा तथाऽक्षौहिणीकत्रयेण ॥२०२॥ पुरीं प्रभञ्जन्तममुं विदित्वा सरामशैनेययदुप्रवीराः । संयोधयामासुरथाभ्यवर्षञ्छरैर्निषादाधिप एकलव्यः ॥ २०३ ॥ तदस्त्रशस्त्रैः सहसा विषण्णा यदुप्रवीरा विगतप्रदीपाः । सहैव रामेण शिनेश्च नप्त्रा समाविशन्स्वां पुरमेव सर्वे ॥ २०४ ॥ पुनः समादाय तथोरुदीपिका अग्रे समाधाय च रौहिणेयम् । विनिःसृता आत्तशस्त्राः स्वपुर्याः सिंहा यथा धर्षिताः सद्गुहायाः ॥ २०५ ॥ अथाससादैकलव्यं रथेन रामः शैनेयः पौण्ड्रकं वासुदेवम् । अयुध्यतां तौ सात्यकिः पौण्ड्रकश्च तथाऽन्योऽन्यं विरथं चक्रतुश्च ॥ २०६ ॥ ततो गदायुद्धमभूत्तयोर्द्वयोस्तथा रामश्चैकलव्यश्च



वीरौ । कृत्वाऽन्योन्यं विरथं तौ गदाभ्यामयुध्यतां जातदर्पौ बलाग्र्यौ ॥ ॥ २०७ ॥ तस्मिन्काले केशवो वैनतेयमारुह्यायाद्यत्र ते युद्धसंस्थाः । दृष्ट्वा कृष्णं हर्षसम्पूरितात्मा रामो हन्तुं चैकलव्यं समैच्छत् ॥ २०८ ॥ उद्यम्य दोर्भ्यां स गदां जवेन यदाऽपतद्रौहिणेयो निषादम् । बलं कोपं चास्य दृष्ट्वैकलव्यः पराद्रवज्जीवितेच्छुः सुदूरम् ॥ २०९ ॥ विद्रावयन्रौहिणेयोऽन्वयात्तं भीतोऽपतच्चैकलव्योऽम्बुधौ सः । वेलान्तं तं द्रावयित्वाऽत्र तस्थौ रामो गदापणिरदीनसत्त्वः ॥ २१० ॥ सुपापोऽसावेकलव्यः सुभीतो रामं मत्वैवानुयान्तं पुनश्च । समुद्रेऽशीतिं योजनानामतीत्य पश्चादैक्षद्वीपमेवाधिरुह्य ॥२११॥ रामो विजित्यातिबलं रणे रिपुं मुदैव दामोदरमाससाद ।

पौण्ड्रस्त्ववज्ञाय शिनिप्रवीरं निवार्यमाणोऽभिययौ जनार्दनम् ॥ ॥ २१२ ॥ तं केशवो विरथं व्यायुधं च क्षणेन चक्रे स ययौ निजां पुरीम् । प्रस्थापयामास पुनश्च दूतं कृष्णायैको वासुदेवोऽहमस्मि ॥ ॥ २१३ ॥ मदीयलिङ्गानि विसृज्य चाशु समागच्छेथाः शरणं मामनन्तम् । तद्दूतोक्तं वाक्यमेतन्निशम्य यदुप्रवीरा उच्चकैः प्राहसन्स्म ॥ ॥ २१४ ॥ कृष्णः प्रहस्याह तवायुधानि दाताऽस्म्यहं लिङ्गभूतानि चाजौ । इत्युक्तोऽसौ दूत एत्याह तस्मै स चाभ्यगाद्योद्धुकामो हरिश्च ॥२१५॥ तं शातकौम्भे गरुडे रथस्थे स्थितं चक्रादीन्कृत्रिमान्सन्दधानम् । श्रीवत्सार्थे दग्धवक्षस्थलं च दृष्ट्वा कृष्णः प्राहसत्पापबुद्धिम् ॥ २१६ ॥ ततोऽस्त्रशस्त्राण्यभिवर्षमाणं विजित्य तं वासुदेवोऽरिणैव । चकर्त तत्कन्धरं तस्य चानु मातामहस्याच्छिनत्सायकेन ॥ ॥२१७॥ अपातयच्चाशु शिरः स तेन काशीश्वरस्येश्वरो वारणास्याम् । स च ब्रह्माहं वासुदेवोऽस्मि नित्यमिति ज्ञानादगमत्तत्तमोऽन्धम् ॥२१८॥ साहाय्यकृच्चास्य च काशिराजो यथैव किर्मीरहिडिम्बसाल्वाः । अन्ये च दैत्या अपतंस्तमोऽन्धं तथैव सोऽप्यपतत्पापबुद्धिः ॥ २१९ ॥

निहत्य तौ केशवो रौक्मिणेयं पुनर्वैदर्भ्यां जनयामास सद्यः । स चैकलव्यो रामजितः शिवाय चक्रे तपोऽजेयतां चाप तस्मात् ॥२२०॥ स शर्वदत्तेन वरेण दृप्तः पुनर्योद्धुं कृष्णमेवाससाद । तस्यास्त्रशस्त्राणि निवार्य केशवश्चक्रेण चक्रे तमपास्तकन्धरम् ॥ २२१ ॥ स चाप पापस्तम एव घोरं कृष्णद्वेषान्नित्यदुःखात्मकं तत् । एवं यदूनामृषभेण क्षुदिते पौण्ड्रे तथा काशिराजे च पापे ॥ २२२ ॥ काशीशपुत्रस्तु सुदक्षिणाख्यस्तपोऽचरच्छङ्करायोरुभक्त्या । प्रत्यक्षगं तं शिवं पापबुद्धिः कृष्णाभावं याचते दुष्टचेताः ॥२२३॥ कृत्यामस्मै दक्षिणाग्नौ शिवोऽपि दैत्यावेशाददादावृतात्मा ॥ २२४ ॥ स दक्षिणाग्निश्चासुरावेशयुक्तः सम्पूजितः काशिराजात्मजेन । वरादुमेशस्य विवृद्धशक्तिर्ययौ कृष्णो यत्र सम्पूर्णशक्तिः ॥ २२५ ॥ कृष्णस्तस्य प्रतिघातार्थमुग्रं समादिश-च्चक्रमनन्तवीर्यः । जाज्वल्यमानं तदमोघवीर्यं व्यद्रावयद्वह्निमिमं सुदूरम् ॥ २२६ ॥ कृत्यात्मको वह्निरसौ प्रधानवह्नेः पुत्रश्चक्रविद्रावि-तोऽथ । सहानुबन्धं च सुदक्षिणं तं भस्मीचकाराशु सपुत्रभार्यम् ॥ ॥ २२७ ॥ दग्ध्वा पुरीं वारणासीं सुदर्शनं पुनः पार्श्वं वासुदेवस्य चागात् । सुदक्षिणोऽसौ तम एव जग्मिवान्कृष्णद्वेषात्सानुबन्धः सुपापः ॥ २२८ ॥

कृष्णः क्रीडन्द्वारवत्यां सुपूर्णनित्यानन्दः क्वचिदाह स्म भैष्मीम् । विडम्बयन्गृहिणामेव चेष्टा नित्याविरोधोऽपि तया विदोषया ॥२२९॥ त्वया न कार्यं मम किञ्च भद्रे मयाऽरीणां मानभङ्गार्थमेव । समाहृता-ऽसीति सा चावियोगं सदा कृष्णेनात्मनोऽप्येव वेत्त्री ॥२३०॥ स्त्रिया भेतव्यं भर्तुरित्येव धर्मं विज्ञापयन्ती दुःखितेवास देवी । तां सान्त्वया-मास गृहस्थधर्मं विज्ञापयन्देवदेवोऽप्यदुःखाम् ॥ २३१ ॥

एवं क्रीडत्यब्जनामे रमायां कृष्णादिष्टो गोकुलं रौहिणेयः । प्रायाद्दृष्ट्वा तत्र नन्दं यशोदां तत्पूजितः कृष्णवार्तां च पृष्टः ॥ २३२ ॥



मासौ तत्र न्यवसद्गोपिकाभी रेमे क्षीबो यमुनामाह्वयच्च । मत्तोऽय-मित्येव नदीमनागतां चकर्ष रामो लाङ्गलेनाग्रय(नोग्र)वीर्यः ॥ २३३ ॥ पुनस्तया प्रणतः संस्तुतश्च व्यसर्जयत्तामथ नन्दगोपम् । आपृच्छ्य चागाद्द्वारकां केशवाय न्यवेदयन्नन्दगोपादिभक्तिम् ॥ २३४ ॥ तदैव मैन्दो विविदश्च भौमे हते सखाये दानवावेशयुक्तौ । आनर्तराष्ट्रं वासुदेवप्रतीपौ व्यनाशयेतां वासुदेवोऽथ चोचे ॥ २३५ ॥ रामाय सोऽदाद्वरमब्जनाभो वध्यावेतौ भवतां तेऽप्यवध्यौ । वराद्विरिञ्चस्य तथाऽमृताशनादुभौ च मैन्दो विविदो व्रजेति ॥ २३६ ॥ गत्वा स मैन्दं प्रथमं जघान क्रोधाद्युद्धायागतं रैवताग्रे । दिने परस्मिन्विविदं जघान शिला वर्षन्तं मुसलेनाग्र्यकर्मा ॥२३७॥ तयोराविष्टौ तावसुरौ तमोऽन्धं प्राप्तौ च तावश्विनौ स्वं च लोकम् ॥ २३८ ॥

दुर्योधनस्यास पुत्री रतिर्या पूर्वं नाम्ना लक्षणा कान्तरूपा । स्वयंवरस्थां तां बलादेव साम्बो जग्राह सा चैनमासानुरक्ता ॥ २३९ ॥ बलाद्गृहीतां वीक्ष्य तां कर्णमुख्या दुर्योधनाद्या युयुधुः क्रोधदीप्ताः । कृच्छ्रेण तं विरथीकृत्य चैकं सर्वे समेता जगृहुर्धार्तराष्ट्राः ॥ कर्णेन भूरिश्रवसा च सार्धं बाह्वोर्बलादेव दुर्योधनस्य ॥२४०॥ श्रुत्वैतद्वृष्णयः सर्व एव समुद्यमं चक्रिरे कौरवेषु । निवार्य तान्बलभद्रः स्वयं ययौ सहोद्धवः कौरवेयाञ्छमार्थी ॥ २४१ ॥ पुरस्य बाह्योपवने स्थितः स प्रस्थापयच्चोद्धवं कौरवार्थे । आगत्य सर्वे कुरवोऽस्य पूजां चक्रुः स चाहोग्रसेनस्य चाज्ञाम् ॥ २४२ ॥ आज्ञापयद्वो नृपतिः स्वयं नः कुमारकः प्रगृहीतो भवद्भिः । एकः समेतैर्बहुभिर्बान्धवार्थं क्षान्तं तन्नो मुञ्चताश्चेव साम्बम् ॥ २४३ ॥ आज्ञापयामास च उग्रसेन इत्युक्तमेव तु निशम्य कुरुप्रवीराः । संश्राव्य दुष्टवचनानि बलं पुरं स्वं क्रोधा-त्समाविविशुरत्र चुकोप रामः ॥ २४४ ॥ स्वलाङ्गलेन तत्पुरं विकृष्य जाह्नवीजले । निपातयन्निवारितः प्रणम्य सर्वकौरवैः ॥ २४५ ॥

सभार्यमाशु पुत्रकं सुयोधनाभिपूजितम् । सपारिबर्हमाप्य च प्रजग्मिवान्स्वकं पुरम् ॥ २४६ ॥ इत्यादिकर्माणि महान्ति रामस्यासम्छेपस्याच्युतावेशिनोऽलम् । यस्याच्युतावेशविशेषकालं ज्ञात्वा भीमोऽप्यस्य नोदेति युद्धे ॥ २४७ ॥ क्रीडायुद्धे बहुशो रौहिणेये व्यक्तिं विष्णोर्भीमसेनो विदित्वा । तात्कालिकीं पीड्यमानोऽपि तेन नैवोद्यमं कुरुते विष्णुभक्त्या ॥ २४८ ॥ तदा जयी प्रभवत्येष रामो नातिव्यक्तस्तत्र यदा जनार्दनः । तदा भीमो विजयी स्यात्सदैव विष्णोः केशावेशवान्यत्स रामः ॥ २४९ ॥

एतादृशेनैव रामेण युक्ते कृष्णे द्वार्वत्यां निवसत्यब्जनाभे । स्वप्नेऽनिरुद्धेन रता कदाचिद्बाणात्मजोषा चित्रलेखामुवाच ॥ २५० ॥ तमानयेत्यथ सा चित्रवस्त्रे प्रदर्श्य लोकान्समदर्शयत्तम् । पौत्रं विदित्वा वचनाच्च तस्याः कृष्णस्य तं चानयत्तत्र रात्रौ ॥ २५१ ॥ अनिरुद्धं गुणोदारमानीतं चित्रलेखया । प्राप्य रेमे बाणसुता दिवसान्सुबहूनपि ॥ ॥ २५२ ॥ गूढं कन्यागृहे तं तु ज्ञात्वा कन्याभिरक्षिणः । ऊचुर्बाणायादिशच्च किङ्करान्ग्रहणेऽस्य सः ॥ २५३ ॥ आगताननिरुद्धस्तान्परिघेण महाबलः । निहत्य द्रावयामास स्वयमायात्ततोऽसुरः ॥ ॥२५४॥ स तु युद्ध्वाऽतिकृच्छ्रेण नागास्त्रेण बबन्ध तम् ॥ २५५ ॥ अथ कृष्णः समारुह्य गरुडं रामसंयुतः । प्रद्युम्नेन च तत्रागात्प्रथमं तत्र वह्निभिः ॥ २५६ ॥ युद्ध्वैवाङ्गिरसा चैव क्षणाद्विद्राव्य तान्हरिः । विद्राव्य शर्वप्रमथानाससाद ज्वरं ततः ॥ २५७ ॥ तेन भस्मप्रहारेण ज्वरितं रोहिणीसुतम् । आश्लिष्य विज्वरं चक्रे वासुदेवो जगत्प्रभुः ॥ ॥ २५८ ॥ स्वयं विक्रीड्य तेनाथ कश्चित्कालं जनार्दनः । निष्पिष्य मुष्टिभिश्चान्यं ससर्ज ज्वरमच्युतः ॥२५९॥ स्वयं जित्वाऽपि गिरिशभृत्यं नालमिति प्रभुः । स्वभृत्येनैव जेतव्य इत्यन्यं ससृजे तदा ॥ ज्वरेण वैष्णवेनासौ सुभृशं पीडितस्तदा ॥ २६० ॥ ग्रासार्थमुपनीतश्च



जगाम शरणं हरिम् । तेन स्तुतः स भगवान्मोचयामास तं प्रभुः ॥ ॥ २६१ ॥ क्रीडार्थमत्यल्पजनेष्वपि प्रभुः कथञ्चिदेव व्यजयद्व्यथां विना । इत्यादि मोहाय स दर्शयत्यजो नित्यस्वतन्त्रस्य कुतो व्यथादयः ॥ २६२ ॥ यदा ज्वराद्या अखिलाः प्रविद्रुतास्तदा स्वयं प्राप हरिं गिरीशः । तयोरभूद्युद्धमथैनमच्युतो विजृम्भयामास विजृम्भणास्त्रतः ॥ २६३ ॥ विजृम्भिते शङ्करे निष्प्रयत्ने स्थाणूपमे संस्थिते कञ्जजातः । दैत्यावेशाद्वासुदेवानभिज्ञं सम्बोधयामास सदुक्तिभिः प्रभुः ॥ प्रगृह्य शर्वं च विवेश विष्णोः स तूदरं दर्शयामास तत्र ॥ ॥२६४॥ शिवस्वरूपं स्तम्भितं बिल्वनाम्नि वने गिरीशेन च यत्तपः कृतम् । शैवं पदं पाप्तुमेवाच्युताच्च तच्चावदत्कञ्जजः शङ्करस्य ॥२६५॥ व्यपेतमोहोऽथ वृषध्वजो हरिं तुष्टाव बाणोऽभिससार केशवम् । तस्याच्युतो बाहुसहस्रमच्छिनत्पुनश्चारिं जगृहे तच्छिरोऽर्थे ॥ २६६ ॥ तदा शिवेन प्रणतो बाणरक्षणकाम्यया । कृत्वा स्वभक्तं बाणं तं ररक्ष द्विभुजीकृतम् ॥२६७॥ मोचयित्वाऽनिरुद्धं च ययौ बाणेन पूजितः । एवमग्नीनङ्गिरसं ज्वरं स्कन्दमुमापतिम् । बाणं चायत्नतो जित्वा प्रायाद्द्वारवतीं प्रभुः ॥२६८॥ येनायत्नेन विजितः सर्वलोकहरो हरः । किं ज्वरादिजयो विष्णोस्तस्यानन्तस्य कथ्यते ॥ २६९ ॥ ईदृशानन्तसङ्ख्यानां शिवानां ब्रह्मणामपि । रमाया अपि यद्वीक्षां विना न चलितुं बलम् ॥ २७० ॥ न च ज्ञानादयो भावा न चास्तित्वमपि क्वचित् । अनन्तशक्तेः कृष्णस्य न चित्रं शूलिनो जयः ॥ २७१ ॥ चित्रलेखासमेतोषाऽन्वितपौत्रसमन्वितः । सरामः ससुतो वीन्द्रमारुह्य द्वारकां गतः ॥ २७२ ॥ रेमे तत्र चिरं कृष्णो नित्यानन्दो निजेच्छया ॥ २७३ ॥ एवंविधान्यगणितानि यदूत्तमस्य कर्माण्यगण्यमहिमस्य महोत्सवस्य । नित्यं रमाकमलजन्मगिरीशशक्रसूर्यादिभिः परिणुतानि विमुक्तिदानि ॥ २७४ ॥

एवं वसत्यमितपौरुषवीर्यसारे नारायणे स्वपुरि शक्रधनञ्जयोक्तः। सम्प्राप्य लोमशमुनिः सकलानि तीर्थान्याप्तुं स पाण्डुतनयेषु सहाय आसीत् ॥ २७५ ॥ पृथ्वीं प्रदक्षिणत एत्य समस्ततीर्थस्नानं यथाक्रमत एव विधाय पार्थाः। सम्पूज्य तेषु निखिलेषु हरिं सुभक्त्या कृष्णे समर्पयितुमापुरथ प्रभासम् ॥ सम्भावनाय सकलैर्यदुभिः समेतस्तेषां च रामसहितो हरिराजगाम ॥ २७६ ॥ पार्थैः सम्पूजितस्तत्र कृष्णो यदुगणैः सह ॥ २७७ ॥ पार्थान्सम्पूजयामासुर्वृष्णयश्चाज्ञया हरेः ॥ ॥२७८॥ तत्र भीमं तपोवेषं दृष्ट्वातिस्नेहकारणात्। दुर्योधनं निन्दयति रामे सात्यकिरब्रवीत्॥ २७९॥ सर्वे वयं निहत्याद्य सकर्णान्धृतराष्ट्रजान्। अभिमन्युं स्थापयामो राज्ये यावत्त्रयोदशम् ॥ २८० ॥ संवत्सरं समाप्यैव पुरं यास्यन्ति पाण्डवाः। ततो युधिष्ठिरो राजा राज्यं शासतु पूर्ववत् ॥ २८१ ॥ एवं वदत्येव शिनिप्रवीरे जनार्दनः पार्थमुखान्युदीक्ष्य। उवाच शैनेय न पाण्डुपुत्राः परेण संसाधितराज्यकामाः ॥ २८२ ॥ स्वबाहुवीर्येण निहत्य शत्रूनाप्स्यन्ति राज्यं त इतीरितेऽमुना। तथेति पार्था अवदंस्ततस्ते कृष्णं पुरस्कृत्य ययुर्दशार्हाः ॥ २८३ ॥ क्रमेण पार्था अपि शैशिरं गिरिं समासदंस्तत्र कृष्णां सुदुर्गे। विषजन्तीं वीक्ष्य तैः संस्मृतोऽथ हैडिम्ब आयात्सहितो निशाचरैः ॥ २८४ ॥ उवाह कृष्णां स तु तस्य भृत्या ऊहुः पार्थांस्ते बदर्याश्रमं च। प्राप्यात्र नारायणपूजया कृतस्वकीयकार्या ययुरुत्तरां दिशम् ॥ २८५ ॥ अतीत्य शर्वश्वशुरं गिरिं ते सुवर्णकूटं निषधं गिरिं च। मेरोः प्राच्यां गन्धमादे गिरौ च प्रापुर्बदर्याश्रममुत्तमं भुवि ॥ २८६ ॥ तस्मिन्मुनीन्द्रैरभिपूज्यमाना नारायणं पूजयन्तः सदैव। चक्रुस्तपो ज्ञानसमाधियुक्तं सुतत्त्वविद्यां प्रतिपादयन्तः ॥ ॥ २८७ ॥

एवं बदर्यां विहरत्सु तेषु क्वचिद्रहः कृष्णया वायुसूनौ। स्थिते



गरुत्मानुरगं जहार महाह्रदाद्वासुदेवासनाग्र्यः ॥ २८८ ॥ तत्पक्षवातेन विचालिते तु तस्मिन्गिरौ कमलं हैममग्र्यम्। पपात कृष्णाभीमयोः सन्निधान उद्यद्भानोर्मण्डलाभं सुगन्धम् ॥२८९॥ दृष्ट्वाऽतिगन्धं वरहेमकञ्जं कुतूहलाद्द्रौपदी भीमसेनम्। बहून्ययाचत्तादृशान्यानुभावमस्याविषह्यं जानती देवदैत्यैः ॥ तयाऽर्थितः सगदस्तुङ्गमेनं गिरिं वेगादारुहद्वायुसूनुः ॥ २९० ॥ प्रशस्यमानः सुरसिद्धसङ्घैर्मृत्नन्दैत्यान्सिंहशार्दूलरूपान्। आसेदिवांस्तत्र हनूमदाख्यं निजं रूपं प्रोद्यदादित्यभासम् ॥ २९१ ॥ जानन्नप्येनं स्वीयरूपं स भीमश्चिक्रीड एतेन यथा परेण। धर्मो देवानां परमो मानुषत्वे स्वीये रूपेऽप्यन्यवदेव वृत्तिः ॥ २९२ ॥ अनादानं दिव्यशक्तेर्विशेषान्नरस्वभावे सर्वदा चैव वृत्तिः। तस्माद्भीमो हनुमांश्चैक एव ज्यायः कनीयोवृत्तिमत्राभिपेदे ॥ ॥२९३॥ सर्वे गुणा आवृता मानुषत्वे युगानुसारान्मूलरूपानुसारात्। क्रमात्सुराणां भागतोऽव्यक्तरूपा आदानतो व्यक्तिमायान्त्युरूणाम् ॥ ॥ २९४ ॥ नैवाव्यक्तिः काचिदस्तीह विष्णोः प्रादुर्भावेष्वतिसुव्यक्तशक्तेः। इच्छाव्यक्तिः प्रायशो मारुतस्य तदन्येषां व्यक्तता कारणेन ॥ ॥ २९५ ॥ तस्माद्भीमो धर्मवृद्ध्यर्थमेव स्वीये रूपेऽप्यन्यवद्वृत्तिमेव। प्रदर्शयामास तदाऽसुराणां मोहायैवाशक्तवच्छक्तरूपः ॥२९६॥ तद्रूपवृद्धिं भीमसेनोऽथ दृष्ट्वा श्रुत्वा हनूमन्मुखतः कथाश्च ॥ रामस्य तथातुरात्म्यं च दिव्यं चातुर्युगं धर्ममप्यग्र्यमेव ॥ २९७ ॥ ध्वजाद्बीभत्सोर्गर्जनेनैव शत्रुपराभवे तेन दत्तेऽर्जुनस्य ॥ ययौ प्रणम्यैनमाश्वेव भीमः सौगंधिकं वनमप्यग्र्यरूपम् ॥ २९८ ॥ नरागम्यां नलिनीमेत्य तत्र दृष्ट्वा पद्मान्यद्भुताकारवंति ॥ हैमानि दिव्यान्यतिगंधवंति समासदद्वार्यमाणो नराशैः ॥ २९९ ॥ ते भीममात्तायुधमुग्ररूपं महाबलं रूपनवावतारम् ॥ न्यवारयन्क्रोधवशाः समेताः शतं सहस्राण्ययुतानि संख्ये ॥ ३०० ॥ वराच्छिवस्यैव परैरजेयाः

शस्त्रास्त्रवृष्टिं मुमुचुः सुभीमाम् ॥ भीमेऽखिलज्ञे तपसां निधाने बलोदधौ शैवशास्त्रं वदंतः ॥ ३०१ ॥ तान्वैष्णवैरेव शास्त्रैः स भीमो विजित्य पूर्वं वाच्ये सङ्गरे तु ॥ शस्त्रास्त्रवर्षस्य कुर्वन्प्रतीपं जघ्नेऽखिलान्गदया तेषु वीरान् ॥ ३०२ ॥ वातेन कुंत्यां बलवान्स जातः शूरस्तपस्वी द्विषतां निहन्ता ॥ सत्ये च धर्मे च रतः सदैव पराक्रमे शत्रुभिरप्रधृष्यः ॥ ३०३ ॥ तत्रापरांश्चैव बहूनसत्यं निरीश्वरं चाप्रतिष्ठं च लोकम् ॥ सिद्धोऽहमीशोऽहमिति ब्रुवाणान्गुणान्विष्णोः ख्यापयन्वादतोऽजैत् ॥ ३०४ ॥ भिन्नं विष्णुमधिकं सर्वतश्च ब्रुवन्प्रवीराँल्लक्षमेषां निजघ्ने ॥ ते तस्य वीर्यं च बलं च दृष्ट्वा विद्याबलं बाहुबलं तथैव ॥ अशक्नुवन्तः सहिताः समस्ता हतप्रवीराः सहसा निवृत्ताः ॥ ३०५ ॥ विक्रम्य तान्गदयाऽसौ निहत्य विद्राव्य सर्वान्नलिनीं प्रविश्य ॥ पीत्वाऽमृताम्भश्च ततोऽम्बुजानि दिव्यानि जग्राह कुरुप्रवीरः ॥ ३०६ ॥ अथो कलहशंसीनि निमित्तानि युधिष्ठिरः ॥ दृष्ट्वा कृष्णामपृच्छच्च क्व भीम इति दीनधीः ॥ ३०७ ॥ सौगंधिकार्थं यातं तं श्रुत्वा कृष्णामुखान्नृपः ॥ आरुह्य राक्षसश्रेष्ठान्कृष्णया भ्रातृभिः सह ॥ ३०८ ॥ ययौ वृकोदरो यत्र दृष्ट्वा चैनमवस्थितम् ॥ उवाच मैवमित्येनं भीतो गिरिशकोपतः ॥ ३०९ ॥ देवेभ्यो मरणाद्भीता राक्षसा वित्तपाज्ञया ॥ तदीयां नलिनीं ते हि रक्षन्त्यस्याश्रयो हरः ॥ जानन्वित्तेश्वरो भीममाहात्म्यं न चुकोप ह ॥ ३१० ॥

वसत्सु तत्र पार्थेषु पुनः कतिपयैर्दिनैः ॥ उवाच भीमसेनं यशोधर्माभिवृद्धये ॥ ३११ ॥ पंचवर्णानि पुष्पाणि कृष्णा वीक्ष्य हृतानि तु ॥ मारुतेन कुबेरस्य गृहान्नृभिरगम्यतः ॥ ३१२ ॥ अगम्योऽयं गिरिः सर्वैः कुबेरेणाभिपालितः ॥ अद्य त्वयैव गन्तव्यो विधूयाखिलराक्षसान् ॥ ३१३ ॥ इत्युक्त आशु सगदः सधनुः सबाणो भीमो गिरींद्रमजितोरुबलो विगाहे ॥ प्राप्तं निशम्य बलदैवतसूनुमत्र पद्मत्रयं न्यरुणदुद्धतराक्षसानां ॥ ३१४ ॥ अग्रे निधाय मणिमंतमजेयमुग्रं शंभोर्वराद्विविधशास्त्रमहास्त्रवृष्ट्या ॥ तान्सर्वराक्षसगणान्मणिमत्समेतान्भीमो जघान सपदि प्रवरैः शरौघैः ॥ ३१५ ॥ अवध्यांस्तान्क्षणेनैव हत्वा भीमो महाबलः ॥ रणे क्रोधवशान्सर्वानतिष्ठद्गिरिमूर्धनि ॥ ३१६ ॥ ते हता भीमसेनेन प्रापुरंधंतमोऽखिलाः ॥ ३१७ ॥ हतः सौगंधिकवने मणिमांश्च पुनः कलौ ॥ जातो मिथ्यामतिं सम्यगास्तीर्यापि तमोऽधिकम् ॥ ३१८ ॥ ततो वैश्रवणो राजा महापद्मत्रये हते ॥ राक्षसानामवध्यानां सखाये मणिमत्यपि ॥ आरुरोह रथं दिव्यं योद्धुकामो वृकोदरं ॥ ३१९ ॥ असुरावेशतस्तस्य भीमे क्रोधो महानभूत् ॥ स आजगाम भीमेन योद्धुं वित्तपतिः स्वयम् ॥ ३२० ॥ तस्मिन्काले भीमसेनस्य घोषं श्रुत्वा राजाऽपृच्छदाशु स्म कृष्णाम् ॥ क्व भीम इत्येव तयोदितं च श्रुत्वा जगामाशु रक्षोंऽससंस्थः ॥ ३२१ ॥ सभ्रातृके मुनिभिः कृष्णया च गते राजन्नत्र भीमं कुबेरः ॥ दृष्ट्वाऽसुरावेशतो धर्मजं च किंचिन्मुक्तः स्नेहयुक्तस्तथाऽऽस ॥ ३२२ ॥ धृतायुधं भीममीक्ष्यापि किंचिद्दैत्यावेशाद्बहुमेने न भीमम् ॥ अगस्त्यशापं चावदत्स्वस्य पूर्वं सखायनाशे कारणं राजराजः ॥ ३२३ ॥ दैत्यावेशादुज्झितः शान्तभावो ददौ निजस्थानमेषां सुतुष्टः ॥ आवासार्थं तेऽवसंस्तत्र पार्थास्तथान्येषां देवतानां गृहेषु ॥ ३२४ ॥

तत्रैव तेषां वसतां महात्मनामानंदिनामब्दचतुष्टये गते ॥ पंचाब्दमध्याप्य महांति चास्त्राणींद्रो गुर्वर्थं फल्गुनेनार्थितोऽभूत् ॥ ३२५ ॥ वधं वव्रे स्वशत्रूणामिंद्रः पार्थात्स्वरूपतः ॥ निवातकवचाख्यानामेषां ब्रह्मा वरं ददौ ॥ ३२६ ॥ अवध्यतां सुरैर्दैत्यैर्गन्धर्वैर्यक्षराक्षसैः ॥ पुनरिंद्रेणार्थितोऽदाज्जहीमान्नरदेहवान् ॥ ३२७ ॥ इति तेनार्जुनं शक्रः स्वात्मानं नरदेहगम् ॥ जगाद ताञ्जहीत्येव किरीटं स्वं निबध्य च ॥ ३२८ ॥ ऐन्द्रं स्यन्दनमारुह्य पार्थो मातलिसंयुतः ॥

गाण्डीवं धनुरादाय ययौ हन्तुं महासुरान् ॥ ३२९ ॥ शङ्खं ददुस्तस्य देवा देवदत्तः स शङ्खराट् ॥ नादयञ्छङ्खघोषेण धनुर्विस्फारयन्महत् ॥ ३३० ॥ दधानः कुण्डले दिव्ये शक्रदत्ते सुभास्वरे ॥ आससाद पुरं दिव्यं दैत्यानामिन्द्रनन्दनः ॥३३१॥ तस्य शङ्खध्वनिं श्रुत्वा गाण्डीवस्य च निःस्वनम् ॥ अभिसस्रुर्महावीर्या निवातकवचासुराः ॥ ३३२ ॥ तिस्रः कोट्यो दानवानां स्वयम्भुवरगर्विताः ॥ नानायुधै रणे पार्थमभ्यवर्षन्सुसंहताः ॥ ३३३ ॥ तेषां स शस्त्राणि किरीटमाली निवार्य गाण्डीवधनुःप्रमुक्तैः ॥ शरैः शिरांसि प्रचकर्त वीरो महास्त्रशिक्षाबलसम्प्रयुक्तैः ॥ ३३४ ॥ सर्वे हतास्तेन महारथेन ते दानवाः सोऽपि ययौ तथान्यान् ॥ पौलोमकालेयगणाभिधानान्षष्टिं सहस्राणि महारथानाम् ॥ ३३५ ॥ तानस्त्रशस्त्राण्यभिवर्षमाणान्धनञ्जयः पाशुपतास्त्रतो द्राक् ॥ दग्ध्वा ययौ पुनरेवेन्द्रसद्म तं सस्वजे प्रीतियुतश्च शक्रः ॥३३६॥ ययुरन्धन्तमश्चापि सर्वे देवद्विषोऽसुराः । अथानुज्ञाप्य पितरं रथेनैन्द्रेण भास्वता ॥ सोदर्याणां सकाशं स ययौ वज्रधरात्मजः ॥ ३३७ ॥ आर्यांतमीक्ष्य बीभत्सुं मुमुदुर्भ्रातरोऽधिकम् ॥ ऊषुश्च चतुरोऽब्दांस्ते पुनर्मेरौ प्रमोदिनः ॥ ३३८ ॥ कथाभिर्वासुदेवस्य ध्यानेनाभ्यर्चनेन च ॥ ययौ कालः सुखेनैव तेषां विष्णुरतात्मनाम् ॥ ३३९ ॥ नैव शत्रूननुत्साद्य नानादाय महद्यशः ॥ नाकृत्वा वासुदेवाज्ञां राज्ञां मुख्यगतिर्भवेत् ॥ ३४० ॥ तदन्येषां तु वर्णानां क्षमा बाह्येषु शत्रुषु ॥ प्रायो धर्म इति प्रोक्तो हरेराज्ञाऽखिलस्य च ॥ ३४१ ॥ इति भीमवचः श्रुत्वा ससोदर्यो युधिष्ठिरः ॥ राक्षसस्कन्धमारूढः कृष्णया चायगौ पुनः ॥ ३४२ ॥

पादेषु तेषु निवसत्सु हिमालयस्य याम्याश्रितेषु पवमानसुतः कदाचित् ॥ धन्वी मृगाननुचरन्सहसाऽऽससाद ह्यायोः सुतं नहुषमाजगरोरुरूपम् ॥ ३४३ ॥ पूर्वं हि वृत्रवधतोऽम्बुजनालतन्तुसंस्थे शचिप्रणयिनि



प्रविचिन्त्य देवाः ॥ चक्रुस्त्रिलोकपतिमायुसुतं वरं च दत्वाऽक्षिगोचरतपोऽस्य बलं च सर्वम् ॥३४४॥ स सर्वसुरविप्रेन्द्रतपश्च बलमक्षयम् ॥ अवाप्य ववृधे नित्यं दर्पाद्दैच्छच्छचीमपि ॥ ३४५ ॥ स इन्द्रवचनाच्छच्या महर्षिगणवाहने । नियुक्तो वञ्चनायैव वाहयामास तानृषीन् ॥ ॥३४६॥ स शचीप्रतिषेधार्थमगस्त्येन महात्मना । वेदप्रामाण्यविषये पृष्टो नेत्याह मूढधीः ॥ प्रमाणमिति तेनोक्ते शिरस्येनं पदाऽहनत् ॥ ॥३४७॥ तदा भृगुं तस्य जटासु लीनं कदाऽपि तस्याक्षिपथं न यातम् । आविश्य कञ्जप्रभवः शशाप व्रजाशु पापाजगरत्वमेव ॥ ३४८ ॥ षष्ठे काले यस्त्वयाऽऽसादितः स्यात्स ते वशं यातु बलाधिकोऽपि । यदा गृहीतं पुरुषं निहन्तुं न शक्ष्यसे यदि स त्वद्गृहीतः ॥ शक्तोऽपि नात्मानमभिप्रमोचयेत्तदा तस्य स्यात्त्वत्तपोऽग्र्यं बलं च ॥३४९॥ सर्वदेवमुनीन्द्राणां यत्तपस्त्वामुपाश्रितम् । तच्च सर्वं तमेवैति नात्र कार्या विचारणा ॥ ३५० ॥ यदा प्रश्नांस्त्वदीयांश्च कश्चित्परिहरिष्यति । दिवं गन्तासि च तदा विसृज्याजगरीं तनुम् ॥ ३५१ ॥ स्मृतिश्च मत्प्रसादेन सर्वदा ते भविष्यति ॥ ३५२ ॥ भृगुदेहगतेनैवं शप्तः कमलयोनिना । पपाताजगरो भूत्वा नहुषः क्षणमात्रतः ॥ ३५३ ॥ इन्द्रोऽप्यवाप स्वं स्थानमिष्ट्वा विष्णुं विपापकः । धर्मवृद्ध्यर्थमेवैतत्पापमासीच्छचीपतेः ॥३५४॥ नहि लोकावनं पापं त्रैलोक्येशस्य वज्रिणः । वृत्रं हत्वा महानासेत्यादिवेदपदं च यत् ॥ ३५५ ॥ क्वचित्पापं च पुण्यानां वृद्धये भवति स्फुटम् । वृत्रहत्या यथेन्द्रस्य जाता धर्माभिवृद्धये ॥ ३५६ ॥ देवानां वा मुनीनां वा भवेदेवं न वै नृणाम् । पापं यत्पुण्यमेवैतदसुराणां विलोमतः ॥ एवं स्कान्दे हि वचनं पापं नैतच्छचीपतेः ॥३५७॥ नान्यस्य पदमाप्स्यन्ति तद्देवानां व्रतं परम् । तस्मात्ते नहुषं शक्रपदे निदधुरीश्वराः ॥ ३५८ ॥ तस्मिन्नेवं निपतिते ब्राह्मणः शापकारणात् ॥ ३५९ ॥ अष्टाविंशतिमे प्राप युगे भीमस्त-

मुल्बणम् । जानन्नेव तदीयं तत्तप आदातुमिच्छया ॥ ३६० ॥ यत्त-त्सुराणां सर्वेषां मुनीनां च तपः स्थितम् । तद्गृहीतुं वश(गवदिच्छयै-वास)मगादिच्छयैव स मारुतिः ॥ ३६१ ॥ देवानां हि नृजातानामल्पं व्यक्तं भवेद्बलम् । इच्छया व्यक्ततां याति वायोरन्येषु तच्च न ॥३६२॥ नित्यं व्यक्ता गुणा विष्णोरिति शास्त्रस्य निर्णयः । एवमन्येऽपि हि गुणा मानुषादिषु जन्मसु ॥ ३६३ ॥ देवानां मानुषादौ तु शक्ये-ऽप्यव्यक्तताकृतेः । धर्मवृद्धिर्भवेत्तेषां प्रीतो भवति केशवः ॥ ३६४ ॥ तन्मानुषे बले तस्य वराद्वारितवत्स्थिते । दैवं बलं सुशक्तोऽपि व्यक्तं चक्रे न मारुतिः ॥ ३६५ ॥ आत्ममोक्षाय न प्रश्नान्व्याजहार न चाभिभूः । विद्योपजीवनं धर्मो विप्राणामपि नो यतः ॥ ३६६ ॥ किमुत क्षत्रियस्येति जानन्नपि वृकोदरः । तत्प्रश्नपरिहारेण नात्ममोक्षं समैच्छत ॥ ३६७ ॥ अयतन्तमपि ह्येनं चालनायापि नाशकत् । पूर्णोऽपि सर्वलोकानां बलेन नहुषस्तदा ॥ वेष्टयित्वैव तं भीमं स्थितो-ऽसौ नाशकत्परम् ॥३६८॥ भ्रातृमात्रादिषु स्नेहात्क्षिप्रमात्मविमोक्षणम् । इच्छन्नपि न मोक्षाय यत्नं चक्रे वृकोदरः ॥३६९॥ सर्वदेवमुनीन्द्राणां तप आदातुमत्रगम् । भ्रात्रादिषु स्नेहवशान्न स्थातव्यमिहेत्यपि ॥३७०॥ मन्वानः कालतो भङ्गं स्वयमेवैष यास्यति । आज्ञया वासुदेवस्य दार्ढ्या-देहस्य मे तथा ॥३७१॥ स्रस्ताङ्गे पतिते सर्पे यास्यामीति विचिन्तयन् । तस्थौ भीमो हरिं ध्यायन्स्वभावान्न तदिच्छया ॥ ३७२ ॥ तदैव ब्रह्मवचनात्पूर्वोक्तात्केशवाज्ञया । बलं तपश्च सर्वस्य तत्स्थमायाद्वृकोदरम् ॥ ॥ ३७३ ॥ पूरिते नहुषस्थेन तपसा च बलेन च । भीमे स नहुषो-ऽथासीत्स्रस्तभोगः शनैःशनैः ॥ ३७४ ॥

गते भीमे निमित्तानि दृष्ट्वा राजा युधिष्ठिरः । पप्रच्छ क्व गतो भीम इति कृष्णां चलन्मनाः ॥ ३७५ ॥ यातं मृगार्थे स निशम्य राजा तदूरुवेगात्पतितान्नगेन्द्रान् । दृष्ट्वा पथा तेन ययौ स



तत्र दृष्ट्वा च सर्पावृतमन्वपृच्छत् ॥ ३७६ ॥ स कारणं नहुषात्सर्वमेव शुश्राव तत्प्रश्नमशेषतश्च । भ्रातृस्नेहाद्व्याकरोद्धर्मसूनुस्तदैव सोऽप्यारुह्य-त्स्वर्गलोकम् ॥ ३७७ ॥ दिव्याम्बरे कुण्डलिनि स्वपूर्वे गते विमानेन स धर्मराजः । भीमश्चायात्स्वाश्रमायैव सर्वं युधिष्ठिरः कथयामास तत्र ॥ ३७८ ॥ श्रुत्वा कृष्णा भ्रातरश्चास्य सर्वे सर्वे मुनीन्द्रा भीमसेनेऽति-भक्ताः । व्रीडां ययुर्भीमसेनग्रहेण तथाऽब्रुवन्स्नेहतो भीमसेनम् ॥ ॥३७९॥ नैतादृशं साहसं तेऽनुरूपं शक्तोऽपि यत्स्वात्मविमोक्षणाय । नैवाकरोर्यत्नमतो निजानां महद्दुःखं हृदये प्रार्पयस्त्वम् ॥ ३८० ॥ मैवं पुनः कार्यमिति ब्रुवन्तः समाश्लिषन्सर्व एवैत्य भीमम् ।

ततोऽह्नोभिः कैश्चिदापुः कुरूणां राष्ट्रं पार्था मुनिमुख्यैः समेताः ॥ ॥ ३८१ ॥ ततोऽमितौजा भगवानुपागमन्नारायणः सत्यभामासहायः । सम्पूजितः पाण्डवैस्तैः समेतश्चक्रेऽथ सौहार्दनिमित्तसत्कथाः ॥ ३८२ ॥ कृष्णा च सत्या च परस्परं मुदा सम्भाषणं चक्रतुर्योषिदग्र्ये । परीक्ष-यन्त्या सत्यया सर्ववेत्त्र्या निर्दोषया चोदिता प्राह कृष्णा ॥ ३८३ ॥ स्त्रीधर्मानखिलांस्तत्र सत्यां निर्दोषसंविदम् । ज्ञात्वाऽपि कृष्णा प्रोवाच लोकशिक्षार्थमेव तु ॥ ३८४ ॥ क्रीडार्थमेव वचनं ज्ञात्वा सत्या-समीरितम् । तस्यानुसारि वाक्यानि तत्प्रीत्या एव साऽब्रवीत् ॥३८५॥ ततः कतिपयाहानि निरुष्यात्र जनार्दनः । ययौ सभार्यः स्वपुरीं पाण्डवाननुमान्य च ॥ ३८६ ॥

ततः कदाचिन्मृगयां गतेषु पार्थेषु राजा सैन्धव आससाद । कोटिकाख्यः सबलश्च तेषां वराश्रमं सोऽत्र ददर्श कृष्णाम् ॥ ३८७ ॥ राजन्विवाहा(हारा)र्थमसौ निशाम्य कृष्णां कोटिं प्रेषयित्वैव काश्यम् । आयाहि मामित्यवदत्सुपापस्तया निरस्तो जगृहे करे च ॥ ३८८ ॥ तया धूतो निपपाताशु भूमौ पुनः ससञ्ज्ञोऽभ्यगमद्विलज्जः । ततोऽ-सहायत्वत एव कृष्णा धौम्यायोक्त्वा साग्निरन्वेहि मेति ॥ ३८९ ॥

समारुहत्सैन्धवस्यैव यानं सुखं न यासीति तमीरयित्वा । तदा निमि-
त्तानि निशाम्य पार्थाः समाययुस्त्वरयैवाश्रमाय ॥ ३९० ॥ श्रुत्वा
दासीवचनात्सर्वमेव चक्रुः क्षिप्रं सैन्धवस्यानुयानम् । आक्रोशमानं
भीमसेनेति धौम्यं दृष्ट्वा तस्याग्रे सैन्धवं चातिपापम् ॥ ३९१ ॥
चक्रुर्नादान्सिंहवत्पाण्डुपुत्रा दृष्ट्वा कृष्णा चावतरद्रथात्तदा । धौम्येन सार्धं
सा ययौ स्वाश्रमाय सैन्यं पार्थास्तत्र निजघ्नुरोजसा ॥ ३९२ ॥ अग्रे
कृष्णां योऽवदत्सिन्धुराजं याहीति तं कोटिकाश्यं सुपापम् । छित्वा
शिरो मृत्यवे भीमसेनो निवेदयामास तमः स चागात् ॥ ३९३ ॥
हत्वा सेनामखिलां सैन्धवस्य भीमार्जुनौ सयमं धर्मराजम् । विसृज्य
धावन्तमथानुजग्मतुर्जयद्रथं विरथं फल्गुनोऽकः ॥ ३९४ ॥ पद्भ्यां
धावन्तं भीमसेनो निगृह्य दत्वा प्रहारांश्च भृशं तमार्तम् । आदायाधा
द्द्रौपदी पादयोश्च तं मोचयामास च धर्मसूनुः ॥ ३९५ ॥ दासो
द्रौपद्या अहमित्येव वाक्ये तेनैवोक्ते भीमसेनोऽप्यमुश्चत् । स व्रीडितोऽ-
वाग्वदनो ययौ वनं पार्थाश्च तत्रोषुरतिप्रमोदिनः ॥ ३९६ ॥

मार्कण्डेयस्तदाऽऽगत्य तेषामकथयत्कथाः । बह्वयश्चैव विचि-
त्राश्च भाषात्रयसमन्विताः ॥ ३९७ ॥ लोकदर्शनमाश्रित्य देवाश्च
मुनयस्तथा । ब्रूयुः कथास्तत्र शिक्षा ग्राह्या नार्थः कथञ्चन ॥ ३९८ ॥
अर्थः समाधिभाषासु ग्राह्यः सर्वोऽप्यसंशयम् । परदर्शनभाषासु ज्ञेयं
तद्दर्शनं तथा ॥ ३९९ ॥ ग्राह्यो नार्थो वैदिकं तु दर्शनं ग्राह्यमेव हि ।
अन्यार्थो गुह्यभाषासु ग्राह्य एवं विनिर्णयः ॥ ४०० ॥

जयद्रथस्तु भीमेन यदा पञ्चशिखीकृतः । तपसा शिवमाराध्य
वव्रे पाण्डवरोधनम् । ऋतेऽर्जुनादर्जुनस्य तुष्टो हि तपसा शिवः ॥
॥ ४०१ ॥ वने वसत्स्वेव च पाण्डवेषु चक्रे यज्ञं पौण्डरीकाख्यमेव ।
संस्पर्धया राजसूयस्य राजा दुर्योधनो नाप्यसौ तत्कलार्हः ॥ ४०२ ॥
दुर्योधनस्याज्ञया पाण्डवानां दुःशासनः प्रेषयामास दूतम् । आगच्छतेत्य-



त्यवमानाय तं तु भीमोऽवादीद्रणयज्ञं स्वगम्यम् ॥ ४०३ ॥
ततो दिनैः कैश्चन धार्तराष्ट्राः सकर्णगान्धारनृपाः कुमन्त्रतः ।
सभार्यकाः पाण्डवान्द्रौपदीं च महैश्वर्यं दर्शयित्वाऽवमन्तुम् ॥ ४०४ ॥
ते स्यन्दनैः काञ्चनरत्नचित्रैर्महागजैस्तुरगैः पत्तिभिश्च । स्वलङ्कृताश्चित्र-
माल्याम्बराश्च विनिर्ययुर्द्वैतवनाय शीघ्रम् ॥४०५॥ गवां दृष्टिच्छद्मना
निर्गतांस्तान्ज्ञात्वा शक्रस्तेजसो भङ्गकामः । तत्सामर्थ्यं वरमस्मै प्रदाय
तद्बन्धनायादिशच्चित्रसेनम् ॥ ४०६ ॥ स षष्टिसाहस्रककोटियूथपै-
र्गन्धर्वमुख्यैः संवृतोऽगात्सरस्तत् । यस्मिन्स्नातुं वाञ्छति धार्तराष्ट्र-
स्तदाज्ञया पुरुषास्तानथोचुः ॥ ४०७ ॥ स्नातुं समायास्यति धार्तराष्ट्रो
राजेश्वरो निःसरध्वं तदस्मात् । तीर्थादाज्ञां धारयन्तश्च तस्येत्युक्ता
गन्धर्वा जहसुस्तानथोचैः ॥४०८॥ ऊचुर्वयं मानयामस्तदाज्ञां त्रिलोकानां
यः पतिः शक्रदेवः । न मानुषाणामपि चक्रवर्तिनां किंत्वल्पसारस्य
सुयोधनस्य ॥ ४०९ ॥ इतीरिते कुपितो धार्तराष्ट्रो जघान गन्धर्व-
वराञ्छरौघैः । जघ्नुः सकर्णा अपि तस्य सोदरा जघ्नुश्च ते धार्तराष्ट्रस्य
सेनाम् ॥ ४१० ॥ मुहूर्तमासीत्सममेव युद्धं तेषां तदा धार्तराष्ट्रस्य
चैव । पुराम्भिन्दोर्वरतो मायया च गन्धर्ववीरा ववृधुस्ततः स्म ॥४११॥
तेजोभङ्गं तत्र सुयोधनस्य पार्थार्थमत्र प्रविधातुमेव । बलं ददावब्जजः
केशवश्च गन्धर्वाणां तेऽभ्ययुर्धार्तराष्ट्रान् ॥ ४१२ ॥ स चित्रसेनः
प्रथमं कर्णमेव युयोध पार्थस्पर्धया तेन युध्यन् । कर्णो नाशक्रोद्वचना-
द्भार्गवस्य रामस्य नित्यामितषड्गुणस्य ॥ ४१३ ॥ स भग्नयानश्च
विकर्णयानमास्थाय तस्यैव नियम्य वाजिनः । पराद्रवत्तेन सहैव शीघ्रं
दुर्योधनश्चित्रसेनं युयोध ।४१४॥ मुहूर्तमेतेन समं स युध्यन्नन्यैर्गन्धर्वै-
र्बहुभिर्माययैव । भग्ने रथे भूमितले स्थितः सन्गृहीत आसीच्चित्रसेनेन
संख्ये ॥४१५॥ महाबलो धार्तराष्ट्रोऽपि शक्रवराद्विष्णोराज्ञया चाभिवृद्धे ।
॥ चित्रसेनेन धृतस्तदाऽऽसीद्बद्धः पाशैर्वैद्युतैरिन्द्रदत्तैः ॥ ४१६ ॥

तस्यानुजा शकुनी राजभार्याः सर्वे बद्धाः शक्रदूतैः प्रणीताः । आदाय तानम्बरे सम्प्रयातेष्वरूरुवन्पाण्डवान्मन्त्रिणोऽस्य ॥ ४१७ ॥ समीपमागत्य पृथासुतानां पराभूतं वः कुलं शक्रभृत्यैः । धृतः सभार्यः सानुजो धार्तराष्ट्रस्तं मोचयध्वं भ्रातरं भारताग्र्याः ॥ ४१८ ॥ इत्युक्त ऊचे भीमसेनोऽग्रजं स्वं जाने राजन्यादृशोऽयं विमर्दः । ऐश्वर्यं स्वं दर्शयन्नः समागाद्दुर्योधनस्तेजसोभङ्गमिच्छन् ॥ ४१९ ॥ विज्ञाय तेषां मन्त्रितं वज्रबाहुरेतच्चक्रे नात्र नः कार्यहानिः । दिव्यं ज्ञानं स्वात्मनो दर्शयन्स एतावदुक्त्वा विरराम भीमः ॥४२०॥ एकाहयज्ञे दीक्षितेनैव राज्ञा सम्प्रेषितो भीमसेनोऽर्जुनश्च । समाद्रेयौ चित्रसेनं रणे तौ विजित्य दुर्योधनमाश्वमुञ्चताम् ॥ ४२१ ॥ स चित्रसेनो वासवोक्तं च सर्वं कुमन्त्रितं धार्तराष्ट्रस्य चाह । पार्थस्य भीमस्य च तन्निशम्य सुव्रीडितो धृतराष्ट्रात्मजोऽभूत् ॥ ४२२ ॥ समाप्य यज्ञं च ततोऽभियातं सर्वे प्रापुर्धर्मराजं स चाशु । सम्पूज्य तूत्सृज्य च चित्रसेनमूचे गान्धारे न पुनः कार्यमीदृक् ॥ ४२३ ॥ स पाण्डवैर्मोचितः सानुगश्च सभार्यकः किञ्चिदतोऽपगम्य । सम्मेलनायोपविष्टश्च तत्र सुव्रीडितः सूतपुत्रं ददर्श ॥ ४२४ ॥ स चाह दिष्ट्या जयसि राजन्निति सुयोधनम् । व्रीडितो नेति तं चोक्त्वा यथावृत्तं सुयोधनः । उक्त्वा प्रायोपवेशं च चक्रे तत्र सुदुःखितः ॥ ॥ ४२५ ॥ कर्णदुःशासनाभ्यां च सौबलेन च देविना । अन्यैश्च याच्यमानोऽपि नैवोत्तस्थौ सुयोधनः ॥ ४२६ ॥ ततो निशायां प्राप्तायां स्वपक्षे प्रविषीदति । मन्त्रयित्वाऽसुरैः कृत्या निर्मिता होमकर्मणि ॥ ४२७ ॥ शुक्रेणोत्पादिता कृत्या सा प्रसुप्तेषु मन्त्रिषु । धार्तराष्ट्रं समादाय ययौ पातालमाशु च । अथ सम्बोधयामासुर्दैत्या दुर्योधनं नृपम् ॥ ४२८ ॥ त्वं दिव्यः पुरुषो वीरः सृष्टोऽस्माभिः प्रतोषितात् । तपसा शङ्कराद्वज्रकायोऽवध्यश्च सर्वदा ॥ ४२९ ॥



अस्माकं पक्षभूतस्त्वं देवानां चैव पाण्डवाः ॥ ४३० ॥ इदानीं सर्वदेवानां वरात्त्वं विजितो रणे । वयं तथा करिष्यामो यथा जेष्यसि पाण्डवान् ॥ ४३१ ॥ कृष्णेन निहतश्चैव नरकः कर्णमा(स्थि)श्रितः । स च कृष्णार्जुनाभावं करिष्यति न संशयः ॥ ४३२ ॥ भीष्मादींश्च वयं सर्वानाविशामो जयाय ते । तपसा वर्धयिष्यामस्त्वा कर्णादींश्च सर्वशः ॥ ४३३ ॥ तस्माद्गत्वा पालयस्व राज्यं राजन्नपेतभीः । इदं कस्यापि नाख्येयं सुगुप्तं भूतिवर्धनम् ॥ ४३४ ॥ इत्युक्त्वा कृत्यया भूयः स्वस्थाने स्थापितो नृपः । उमया निर्मितात्मार्धमुत्तरं हरनिर्मितम् ॥ ॥४३५॥ ज्ञात्वैवावध्यतां चैव राज्ये बुद्धिं चकार सः । नोवाच अन्यचित्तेषु स्वानुभूतं सुयोधनः ।४३६॥ प्रभातायां तु शर्वर्यां पुनः कर्णोऽब्रवीद्वचः । भृत्यैस्तवैव पार्थैर्यन्मोचितोऽसि परंतप ॥ ४३७ ॥ तेन मान्योऽधिकं लोके यद्भृत्या एव तादृशाः । किमु त्वं राजशार्दूल तदुत्तिष्ठ स्थिरो भव ॥ ४३८ ॥ या च तेऽर्जुनमाहात्म्ये शङ्का सा व्येतु मे शृणु । यावन्नैवार्जुनं हन्यां पादौ प्रक्षालये स्वयम् ॥ ॥ ४३९ ॥ इत्युक्तोऽवरजैश्चैव सर्वैः शकुनिना तथा । याचितो रथमारुह्य ययौ नागपुरं द्रुतम् ॥ ४४० ॥

सकुण्डलं सकवचमवध्यं सूर्यनन्दनम् । ज्ञात्वेन्द्र उभयं तस्माद्भैक्षदादातुमुत्तमम् ॥ ४४१ ॥ तद्विज्ञाय रविः कर्णं स्वप्न उक्त्वा न्यवारयत् । सर्वथा दास्य इत्युक्ते प्राहाऽऽदेयं वरायुधम् ॥ ४४२ ॥ ददौ चोत्कृत्य कवचं कुण्डले च शचीपतेः । अमोघां शक्तिमादाय देवेन्द्रं द्विजरूपिणम् ॥ ४४३ ॥ ऋतेऽर्जुनादेकमेव वधिष्यस्यनयेति च । दत्वा शक्तिं ययौ शक्रः सार्धं कवचकुण्डलैः ॥ ४४४ ॥

पार्था विमुच्यैव सुयोधनं तं वने वसन्तो मुदिताः सदैव । सारणीभाण्डमथो मृगेण हृतं द्विजस्याशु निशम्य चान्वयुः ॥ ४४५ ॥ अभिन्नदृश्ये तृषिता एकैकमुदकार्थिनः । ययुर्युधिष्ठिरमृते सुप्तास्ते

धर्ममायया ॥ ४४६ ॥ अदृश्येनैव धर्मेण वारिता वारिपायिनः । क्षत्रधर्मस्य रक्षार्थं न तत्प्रश्नान्विदांवराः ॥ ४४७ ॥ व्याचक्रुः शक्तिमन्तोऽपि पानीयार्थमरिन्दमाः ॥ ४४८ ॥ न विप्राणां च धर्मोऽयं विद्याया उपजीविनम् । क्षत्रियाणां च किमुत प्रसभं तेन ते पपुः ॥ ॥४४९॥ देवा अपि मनुष्येषु जाताः सुबलिनोऽपि हि । मानुषेणैव भावेन युक्ताः स्युः केशवादृते ॥ ४५० ॥ कार्येष्वेषां क्रमेणैव व्यक्तिमायान्ति सद्गुणाः । अतो भीमार्जुनौ धर्मादत्युत्तमबलावपि ॥ देवमायां समाश्रित्य धर्मेण स्वापितौ क्षणात् ॥ ४५१ ॥ मुहूर्तमेव सा माया तयोराच्छादने क्षमा । ततः प्रबुद्धयोर्धर्मो नैव शक्तिशतांशभाक् ॥ ॥ ४५२ ॥ उक्तं पद्मपुराणे च तदेतत्सर्वमञ्जसा । तस्मान्नाशक्तिरनयोः सम्भाव्या भीमपार्थयोः ॥ ४५३ ॥ धर्मात्मजोऽथाजगामोदकान्तं दृष्ट्वा भ्रातृंस्तत्र दुःखाभितप्तः । इच्छन्पातुं वारि संवारितश्च पित्रा बकाकारमितेन नापात् ॥ ४५४ ॥ अर्थे भ्रातृणामैच्छदसौ तदीयप्रश्नप्रतिव्याहरणं दयालुः । ततो धर्मो यक्षतनुः स भूत्वा प्रश्नांश्चक्रे व्याकरोत्तान्स पार्थः ॥ ४५५ ॥ ततस्तुष्टो वरमस्मै ददौ स एकोत्थानं भ्रातृमध्ये स वव्रे । यद्येकः स्यान्नकुलोऽस्त्वित्यथाह तुष्टो धर्मः कथमेतत्कृतं ते ॥ ४५६ ॥ अतिप्रीतिर्भीमसेने तवास्ति बली चासौ राज्यहेतुस्तव स्यात् । इत्युक्त ऊचे माद्रिपुत्रं विहाय कुन्तीपुत्रो न मयोत्थापनीयः ॥ ४५७ ॥ स एवमुक्तो नितरां प्रीयमाण उत्थापयामास च तान्समस्तान् । यथेष्टरूपप्राप्तिमेषां पुनश्च स्वकामतो निजरूपाप्तिमादात् ॥ ४५८ ॥ अज्ञातवासेऽज्ञाततां सर्वदैव ददौ तेषां प्रीत एवानृशंस्यात् । एवं क्रीडन्पुत्र इत्यात्मनैव यशोधर्मावात्मनो वर्धयन्सः ॥ ४५९ ॥ युधिष्ठिरात्मनः स्वस्य यशोधर्माभिवृद्धये । कृत्वारण्यपहारादि पुनर्दत्वा च तत्स्वयम् ॥ दातुं विप्राय तद्धस्ते यथौ धर्मो दिवं पुनः ॥ ४६० ॥ ततो राजा भीमसेनार्जुनौ च साधे



यमाभ्यामरणीं प्रदाय । मुदा युताः कृष्णया सार्धमेव सन्तुष्टुवुः कृष्णमनन्तमच्युतम् ॥ ४६१ ॥ (३६५४) ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये अरणीप्राप्तिर्नाम द्वाविंशोऽध्यायः ॥ २२ ॥

---

## ॥ अथ त्रयोविंशोऽध्यायः ॥

॥ ॐ ॥ नारायणानुग्रहतो यथावन्निस्तीर्य तान्द्वादशाब्दान्वने ते । विसृज्य च ब्राह्मणादीन्सधौम्यानज्ञातवासाय ततो मनो दधुः ॥१॥ गत्वा विराटस्य पुरीं निधाय हेतीः शम्यां छन्नरूपा बभूवुः । यतिः सूदः षण्डवेषोऽ(श्व)थ सूतवेषो गोपो गन्धकर्त्री च जाताः ॥ २ ॥ सर्वे विराटं ययुरत्र देववत्सम्भावितास्तेन शुभोरुलक्षणाः । युधिष्ठिरस्यैव शुश्रूषणं ते चक्रुर्हृदा वासुदेवस्य नान्यत् ॥ ३ ॥ परपाको गृहस्थस्य क्षत्रियस्य विशेषतः । न योग्य इति सूदस्य बभ्रे वेषं वृकोदरः ॥ ४ ॥ वैदिकव्यवहारेषु ज्ञानाधिक्यप्रसिद्धितः । जानीयुर्भीम इत्येव सूदवेषस्ततोऽभवत् ॥ ५ ॥ स्वीयं वेदविदां सर्वं देवेशानां च किं पुनः । अतस्तेऽन्याश्रयं नैव चक्रुः स्वबलसंश्रयात् ॥ ६ ॥ शापादेवार्जुनः षण्डवेषोऽभून्नकुलस्तथा । क्षत्रियानन्तरत्वात्तु सूतजातेस्तथाऽभवत् ॥ ॥ ७ ॥ सूतस्यानन्तरत्वात्तु वैश्यजातेस्तथाऽभवत् । सहदेवो वैश्यजातिर्गोपालस्तेषु चोत्तमः ॥ ८ ॥ ततो गोपालतामाप यतिः पूज्योऽखिलैर्यतः । यतिरासीद्धर्मजोऽतः सोऽभ्यासार्थं सदैव च ॥ अक्षासक्तोऽभवत्पश्चाद्दर्शयिष्यन्स्वशिष्टताम् ॥ ९ ॥ भीमसेनसधर्मार्थं शूद्रा सैरन्ध्रिकाऽभवत् । द्रौपदी भर्तृसाधर्म्यं स्त्रीणां धर्मो यतः सदा ॥१०॥

अथाजगाम मल्लकः समस्तभूमिमण्डले । वरेण योऽजितो

जयी शिवस्य सञ्जगर्ज च ॥ ११ ॥ तमीक्ष्य सर्वमल्लका विराटराजसंश्रयाः । प्रदुद्रुवुर्भयार्दितास्तदाऽवदद्युधिष्ठिरः ॥ १२ ॥ य एष सूद आशु तं निहत्यमल्लमोजसा । यशस्तवाभिवर्धयेत्समाह्वयाद्य तं नृप ॥ १३ ॥ इतीरिते समाहुतो जगाद मारुतिर्वचः । प्रसादतो हरेरहं निषूदयेऽद्य मल्लकम् ॥ १४ ॥ समस्तदेववृन्दतो महान्य एव केशवः । समस्तदेवनामवांस्तदीयभक्तितो बलम् ॥ १५ ॥ य एव देवनामधा इति श्रुतिर्जगाद हि । महांश्च देव एष तत्स मे जयं विधास्यति ॥ १६ ॥ युधिष्ठिराभिधश्च यो युधिष्ठिरे स्थितः सदा । त्वयि स्थितस्त्वमित्यसौ सदाऽभिधीयते हरिः ॥ १७ ॥ इति ब्रुवाणो मल्लं तमभियातो वृकोदरः । अनयन्मृत्युलोकाय बलाढ्यैरपि दुर्जयम् ॥ ॥ १८ ॥

एवं निवसतां तत्र पाण्डवानां महात्मनाम् । संवत्सरे द्विमासोने विजित्य दिश आगतः । कीचको मत्स्यनृपतेः श्यालो बलवतां वरः ॥ ॥ १९ ॥ स द्रौपदीमीक्ष्य मनोभवार्तः सम्प्रार्थयामास तया निरस्तः । मासे गते भगिनीं स्वां सुदेष्णां सम्प्रार्थयामास तदर्थमेव ॥ २० ॥ तया निषिद्धोऽपि पुनः पुनस्तां यदा ययाचेऽथ च साऽऽह कृष्णाम् । समानयाश्वेव सुरां मदर्थमितीरिता नेति भीताऽवदत्सा ॥ २१ ॥ बलात्तया प्रेषिता तद्गृहाय यदाऽगमत्तेन हस्ते गृहीता । विधूय तं प्राद्रवत्सा सभायै स्मृत्वाऽऽदित्यस्थं वासुदेवं परेशम् ॥ २२ ॥ अनुद्रुत्यैनां पातयित्वा पदा स संताडयामास तदा रविस्थः । नारायणो हेतिनामैव रक्षो न्ययोजयत्तददृश्यं समागात् ॥ २३ ॥ वायुस्तदाविश्य तु कीचकं तं न्यपातयत्तां समीक्ष्यैव भीमः । चुकोप वृक्षं च समीक्षमाणं तं वारयामास युधिष्ठिरोऽग्रजः ॥ २४ ॥ कृष्णा रात्रौ भीमसकाशमेत्य हन्तुं पापं कीचकं प्रैरयत्तम् । भीमस्य बुद्ध्या निशि सा कीचकं च जगाद गन्तुं शून्यगृहं स चागात् ॥ २५ ॥ तत्रैनमासाद्य च भीमसेनो विजित्य तं बाहुयुद्धे निहत्य । शिरो गुदे पाणिपादौ च तस्य प्रवेशयामास विमृद्य वीरः ॥ २६ ॥ अवध्यं तं निहतं वीक्ष्य तस्य पञ्चोत्तरं शतमेवानुजानाम् । सर्वं वराच्छङ्करस्य ह्यवध्यं सहैव कृष्णां तेन दग्धुं बबन्ध ॥ २७ ॥ सा नीयमाना कीचकैः संरुराव श्रुत्वैव तं भीमसेनो महान्तम् । उद्धृत्य वृक्षं तेन जघान सर्वानादाय कृष्णां पुनरागाद्गृहं च ॥ २८ ॥ एवं यत्नात्तपसा तैरवाप्तो वरः शिवादजयत्वं रणेषु । अवध्यता चैव षडुत्तरास्ते शतं हता भीमसेनेन सङ्ख्ये ॥ २९ ॥ गन्धर्व इत्येव निहत्य सर्वान्मुमोद भीमो द्रौपदी चाथ कृष्णाम् । याहीत्यूचे सा सुदेष्णाभयेन त्रयोदशाहं पालयेत्याह तां सा ॥ ३० ॥ अस्त्वित्येनामाह भयात्सुदेष्णा तथाऽवसन्पूर्णमब्दं च तेऽत्र ।



तदा पार्थान्प्रविचिन्त्याखिलायां पृथ्व्यां छन्नान्धार्तराष्ट्रस्य दूताः । अविज्ञाय प्रययुर्धार्तराष्ट्रमूचुर्हतं कीचकं योषिदर्थे ॥ ३१ ॥ तेनावदद्रौपदीकारणेन दुर्योधनो निहतं कीचकं तम् । भीमेनागुस्तत्र दुर्योधनाद्या भीष्मादिभिः सह कर्णेन चैव ॥ ३२ ॥ अग्रे ययौ तत्र योद्धुं सुशर्मा स गा विराटस्य समाजहार । श्रुत्वा विराटोऽनुययौ ससेनस्तं पाण्डवाश्चानु ययुर्विनार्जुनम् ॥ ३३ ॥ विजित्य सङ्ख्ये जगृहे विराटं तदा सुशर्मा तमयाद्वृकोदरः । स तस्य सेनां विनिहत्य मात्स्यं विमोच्य जग्राह सुशर्मराजम् ॥ ३४ ॥ युधिष्ठिरो मोचयामास तं च ततो रात्रौ न्यवसन्बाह्यतस्ते ॥ ३५ ॥

ततोऽपरदिने सर्वे भीष्मद्रोणपुरःसराः । रहितं कीचकैर्मात्स्यं शक्यं मत्वाऽभिनिर्ययुः ॥३६॥ कीचकस्य हिडिम्बस्य बककिर्मीरयोरपि । जरासन्धस्य नृपतेः कंसादीनां च सर्वशः ॥३७॥ न बाधनाय भीष्माद्या अपि शेकुः कथञ्चन । तस्मात्ते कीचकं शान्तं श्रुत्वा मात्स्यं ययुर्मृधे ॥ ३८ ॥ यतिष्ये रक्षितुं भीमाद्धार्तराष्ट्रानिति स्वकाम् ।

सत्यां कर्तुं प्रतिज्ञां तु ययौ द्रोणः सपुत्रकः ॥ ३९ ॥ यदि युद्धाय निर्यान्ति ज्ञाताः स्युः पाण्डवास्तदा । न चेद्विराटमनतं नमयिष्यामहे वयम् ॥ ४० ॥ इति मत्वा विराटस्य जगृहुर्गाः समन्ततः ॥ ४१ ॥ तदोत्तरः सारथित्वे प्रकल्प्य पार्थं ययौ तान्निशाम्यैव भीतः । ततोऽर्जुनः सारथिं तं विधाय कृच्छ्रेण संस्थाप्य च तान्ययौ कुरून् ॥४२॥ आदाय गाण्डीवमथ ध्वजं च हनूमदङ्कं सदरोऽग्रतो गाः । निवर्त्य युद्धाय ययौ कुरूंस्ताञ्जिग्ये सर्वान्द्वैरथेनैव सक्तान् ॥ ४३ ॥ एकीभूतान्पुनरेवानुयातान्सम्मोहनास्त्रेण विमोहयित्वा । जग्राह तेषामुत्तरीयाण्यृते तु भीष्मस्य वेदास्त्रघातं स एव ॥ ४४ ॥ विधाय भीष्मं विरथं जगाम तदा श्रुत्वा मत्स्यपतिर्जितान्कुरून् । मुमोद पुत्रेण जिता इति स्म तदाऽऽह षण्डेन जितान्युधिष्ठिरः ॥ ४५ ॥ तदा क्रुद्धः प्राहरत्तं विराटः सोऽक्षेण तद्भीमधनञ्जयाभ्याम् । श्रुतं तदा तौ कुपितौ निशाम्य न्यवारयत्तावपि धर्मसूनुः ॥ ४६ ॥ निजस्वरूपेण समास्थितान्नो यदि स्म नासौ प्रणिपातपूर्वकम् । क्षमापयेद्वध्य इत्यात्मरूपं समास्थितास्तस्थुरथापरे दिने ॥ ४७ ॥ तदा विराटासनमास्थितं नृपं युधिष्ठिरं वीक्ष्य विराट आह । किमेतदित्यूचिवानुत्तरोऽस्मै तान्पाण्डवान्गोग्रहणे च वृत्तम् ॥ ४८ ॥ ततो विराटो भयकम्पिताङ्गः प्रणम्य पार्थाञ्छरणं जगाम । ददौ च कन्यामुत्तरां फल्गुनाय पुत्रार्थमेव प्रतिजग्राह सोऽपि ॥ ४९ ॥

एवं विराटं मोचयित्वैव गाश्च तमस्यन्धे कीचकान्पातयित्वा । प्राप्तो धर्मः सुमहान्वायुजेन तस्यानु पार्थेन च गोविमोक्षणात् ॥ ५० ॥ अयातयन्केशवायाथ दूतान्सहाभिमन्युः सोऽपि रामेण सार्धम् ॥ अगादनंतानन्दचिद्वासुदेवो विवाहयामासुरथाभिमन्युम् ॥५१॥ आसीन्महानुत्सवस्तत्र तेषां दाशार्हवीरैः सह पाण्डवानाम् ॥ सपाञ्चालाना वासुदेवेन सार्धमज्ञातवासं समतीत्य मोदताम् ॥ ५२ ॥



दुर्योधनाद्याः सूतपुत्रेण सार्धम् ससौबलेया युधि पार्थपीडिताः ॥ भीष्मादिभिः सार्धमुपेत्य नागपुरं मन्त्रं मन्त्रयामासुरत्र ॥ ५३ ॥ अज्ञातवासे फल्गुनो नोऽद्य दृष्टस्तस्मात्पुनर्यान्तु पार्था वनाय ॥ इति ब्रुवाणानाह भीष्मोऽभ्यतीतमज्ञातवासं द्रोण आहैवमेव ॥ ५४ ॥ तयोर्वाक्यं ते त्वनादृत्य पापा वनं पार्थाः पुनरेव प्रयान्तु ॥ इति स्म दूतं प्रेषयामासुरत्र जानन्ति विप्रा इति धर्मजोऽवदत् ॥ ५५ ॥ सौरमानानुसारेण धार्तराष्ट्रा अपूर्णताम् ॥ आहुश्चान्द्रेण मासेन पूर्णः कालोऽखिलोऽप्यसौ ॥ ५६ ॥ दिनानामधिपः सूर्यः पक्षमासाधिपः शशी ॥ तस्मात्सौम्याद्भमेवात्र मुख्यमाहुर्मनीषिणः ॥ ५७ ॥ सौम्यकालं ततो ज्ञा गृह्णन्ति न तु सूर्यजम् ॥ तदेतदविचार्यैव लोभाच्च धृतराष्ट्रजैः ॥ ५८ ॥ राज्यं न दत्तं पार्थेभ्यः पार्थाः कालस्य पूर्णताम् ॥ ख्यापयन्तो विप्रवरैरुपप्लाव्यमुपाययुः ॥ ५९ ॥ सवासुदेवा अखिलैश्च यादवैः पाञ्चालमात्स्यैश्च युताः सभार्याः ॥ उपप्लाव्ये ते कतिचिद्दिनानि वासं चक्रुः कृष्णसंशिक्षितार्थाः ॥६०॥ (३७१४) ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये विराटपर्वकथानिरूपणं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## ॥ अथ चतुर्विंशोऽध्यायः ॥

॥ ॐ ॥ ततः संमन्त्र्यानुमते कृष्णस्य स्वपुरोहितम् ॥ द्रुपदः प्रेषयामास धृतराष्ट्राय शान्तये ॥ १ ॥ स गत्वा धृतराष्ट्रं तं भीष्मद्रोणादिभिर्युतम् ॥ उवाच न विरोधस्त उत्पाद्यो धर्मसूनुना ॥ २ ॥ यस्य भीमार्जुनौ योधौ नेता यस्य जनार्दनः ॥ श्रुतास्ते भीमनिहता जरासन्धादयोऽखिलाः ॥३॥ यथा च रुद्रवचनादवध्या राक्षसाधिपाः॥

तीर्थविघ्नकराः सर्वे तीर्थान्याच्छाद्य संस्थिताः ॥ ४ ॥ तिस्रः कोट्यो
महावीर्या भीमेनैव निषूदिताः ॥५। भ्रातॄणां ब्राह्मणानां च लोकानां
च हितैषिणा । ततो हि सर्वतीर्थानि गम्यान्यासन्नृणां क्षितौ ॥ ६ ॥
यथा जटासुरः पापः शर्वाणीवरसंश्रयात् । अवध्यो विप्ररूपेण वञ्चयन्नेव
पाण्डवान् ॥ ७ ॥ ज्ञात्वाऽपि भीमसेनेन विप्ररूपस्य नो वधः ।
योग्य इत्यहतो भीमे मृगयार्थं गते क्वचित् ॥ ८ ॥ यमौ युधिष्ठिरं
कृष्णां चादायैव पराद्रवत् । दृष्टो भीमेन तांस्त्यक्त्वा संसक्त-
स्तेनसङ्गरे ॥ ९ ॥ निपात्य भूमौ पादेन संचूर्णितशिरास्तमः । जगाम
किमु ते पुत्राः शक्या हन्तुमिति स्म ह । निवातकवचाश्चैव हताः
पार्थेन ते श्रुताः ॥ १० ॥ जानासि च हरेर्वीर्यं यस्येदमखिलं वशे ।
सब्रह्मरुद्रशक्राद्यं चेतनाचेतनात्मकम् ॥ ११ ॥ तस्मादेतैः पालितस्य
धर्मजस्य स्वकं वसु । दीयतामिति तेनोक्तो धृतराष्ट्रो न चाकरोत् ॥
॥ १२ ॥

ततः सहैव यदुभिः कृष्णं द्वारवतीं गतम् । युद्धसाहाय्य-
मिच्छन्तौ धार्तराष्ट्रधनञ्जयौ । युगपद्ययतुस्तत्र वेगेनाजयदर्जुनम् ॥
॥ १३ ॥ दुर्योधनः शिरस्थान आसीनोऽभूद्धरेस्तदा । दर्पान्नाहं
राजराज उपास्ये पादयोरिति ॥ १४ ॥ तयोरागमनं पूर्वं ज्ञात्वैव हि
हरिः प्रभुः । असुप्तः सुप्तवच्छिश्ये तत्रातिष्ठद्धनञ्जयः ॥१५॥ प्रणम्य
पादयोः प्रह्वो भक्त्युद्रेकात्कृताञ्जलिः ॥ १६ ॥ तमैक्षत्प्रथमं देवो
जानन्नपि सुयोधनम् । स्वागतं फल्गुनेत्युक्ते पूर्वमागामहं त्विति ॥
॥ १७ ॥ आह दुर्योधनस्तं च स्वागतेनाभ्यपूजयत् ॥ १८ ॥ तयो-
रागमने हेतुं श्रुत्वा प्राह जनार्दनः । एकः पूर्वागतोऽत्रान्यः पूर्वं दृष्टो
मया यतः ॥ १९ ॥ समङ्करिष्ये युवयोरेकत्राहं निरायुधः । अन्यत्र
दशलक्षं मे पुत्राः शूराः पदातयः ॥ २० ॥ इत्युक्ते फल्गुनः कृष्णं
वव्रे तद्भक्तिमान्यतः । अन्यस्तत्राभक्तिमत्त्वाद्वव्रे गोपानयुध्यतः ॥२१॥



पार्थानामेव साहाय्यं करिष्यन्नपि केशवः । तस्याभक्तिं दर्शयितुं चक्रे
समवदीश्वरः ॥ २२ ॥ ततः पार्थेन सहितः पाण्डवान्केशवो ययौ ।
दुर्योधनो ययौ रामं स भयात्केशवस्य च । न साहाय्यं करोमीति
प्राह तत्स्नेहवानपि ॥ २३ ॥ उपप्लाव्ये सभार्यां हि तत्पक्षीयं वचो
भुवन् । निराकृतः सात्यकिना समक्षं केशवस्य च ॥ २४ ॥ ततो
दुर्योधनं नायात्स च हार्दिक्यसंयुतः ॥ २५ ॥ जगाम हास्तिनपुर-
मक्षौहिण्यो दशाभवन् । एका च धार्तराष्ट्रस्य नानादेश्यैर्नृपैर्युताः ॥
सप्त पाण्डुसुतानां च मात्स्यद्रुपदकैकयैः ॥ २६ ॥ धृष्टकेतुजरासंधसुत-
काशिनृपैर्युताः । पुरुजित्कुन्तिभोजश्च चेकितानश्च सात्यकिः ॥ २७ ॥
पाण्डवान्सेनया युक्ताः समीयुर्देवपक्षिणः । विन्दानुविन्दावावन्त्यौ
जयत्सेनोऽन्यकैकयाः । क्षेमधूर्तिर्दण्डधरः कलिङ्गोऽम्बष्ठ एव च ॥२८
श्रुतायुरच्युतायुश्च बृहद्बलसुदक्षिणौ । श्रुतायुधः सैंधवश्च राक्षसोऽलम्बु-
षस्तथा । अलायुधोऽलम्बलश्च दैत्या दुर्योधनं ययुः ॥ २९ ॥ गत्वा
दुर्योधनाहूतो भगदत्तोऽपि तं ययौ ॥ ३० ॥ सपुत्रपौत्रो बाह्लीको
भीष्मद्रोणकृपा अपि । प्रीत्यर्थं धृतराष्ट्रस्य बभूवुस्तत्सुतानुगाः ॥३१॥
पाण्ड्यश्च वीरसेनाख्यः पाण्डवानेव संश्रितः ॥ ३२ ॥ शल्यं च
पाण्डवानेव यातं ज्ञात्वा सुयोधनः । सुसभाः कारयामास सर्वभोग-
समन्विताः ॥ ३३ ॥ ता युधिष्ठिरकॢप्ताः स मत्वा शल्योऽब्रवीदिदम् ।
य एताः कारयामास तदभीष्टं करोम्यहम् ॥ ३४ ॥ लीनः श्रुत्वा
धार्तराष्ट्रः सत्यं कुर्वित्यभाषत । देहि मे युद्धसाहाय्यमिति सोऽपि
यशोऽर्थयन् ॥ रक्षार्थमात्मवाक्यस्य तथेत्येवाभ्यभाषत ॥ ३५ ॥ स
पाण्डवांस्ततो गत्वा तैरनुज्ञात एव च । तेजोवधार्थं कर्णस्य धनञ्जय
तेऽर्थितः ॥३६॥ तथेत्युक्त्वा ययौ धर्मनन्दनं कौरवान्प्रति ॥ ३७॥
सञ्जयं प्रेषयामास धृतराष्ट्रोऽथ शान्तये ॥ पाण्डवान्प्रत्यधर्मं च
वुर्दं स प्रत्यपादयत् ॥ ३८ ॥ हठवादेऽवदद्भीमो यं धर्मं द्रौपदी

तथा । तमेवोक्त्वा धर्मजस्तु चकार च निरुत्तरम् ॥ ३९ ॥ कृष्णोऽपि तस्य धर्मस्य प्रामाण्यं प्रत्यपादयत् ॥ ४० ॥ ततो निरुत्तरः कृष्णं पाण्डवांश्च प्रणम्य सः । धृतराष्ट्रं ययौ तं च विनिन्द्य प्रययौ गृहम् ॥ ॥ ४१ ॥

निन्दितः सञ्जयेनासावाहूय विदुरं निशि । पप्रच्छ सोऽवदद्धर्मं पार्थानां राज्यदापनम् ॥ ४२ ॥ ऐहिकस्य सुखस्यापि कारणं तदनिन्दितम् । अन्यथा सर्वपुत्राणां नाशं धर्मातिलङ्घनम् ॥ ४३ ॥ तत्र भावमकृत्वा स ज्ञानादिच्छन्नघक्षयम् । विष्णोः स्वरूपं पप्रच्छ सोऽस्मरच्च सनातनम् ॥ ४४ ॥ स आगत्यावदत्तत्त्वं विष्णोर्मायाविनाशुभा । न गतिश्चेत्यथ प्रातः सञ्जयः पाण्डवोदितम् ॥ अवदद्धृतराष्ट्राय सभायां कुरुसन्निधौ ॥ ४५ ॥ तच्छ्रुत्वा स तु भीतोऽपि पुत्रस्नेहानुगो नृपः । राज्यं नादात्पाण्डवानां

ततो धर्मसुतो नृपः ॥४६॥ यदुक्तवान्सञ्जयाय यदि दित्सति नः पिता । राज्यं तदा त्वमागच्छ विदुरो वा न चेन्न च ॥ तावथानागतौ ज्ञात्वा मन्त्रयामास शौरिणा ॥४७॥ सोऽप्याहाहं गमिष्यामि सभायामृषिसन्निधौ ॥ ४८ ॥ वक्ष्ये पथ्यानि युक्तानि यदि नासौ ग्रहीष्यति । वध्यः सर्वस्य लोकस्य स भवेत्सर्वधर्महा ॥४९॥ इत्युक्तो वैरमात्मोत्थं लोकमध्ये प्रहापयन् । लोकसङ्ग्रहणार्थाय भीमसेनोऽब्रवीद्वचः ॥ ५० ॥ नास्मन्निमित्तं नाशः स्यात्कुलस्यापि वयं कुलम् । रक्षितुं धार्तराष्ट्रस्य भवेमाधश्चरा इति ॥ ५१ ॥ इच्छताऽप्यखिलान्हन्तुं धार्तराष्ट्रान्दृढात्मना । भीमेनोक्तो वासुदेवो लोकसंग्रहणेच्छया ॥५२॥ वधं तेषां धर्ममेव लोके ख्यापयितुं हरिः । आक्षिपन्निव भीमं तं युद्धाय प्रैरयद्दृढम् ॥ ५३ ॥ अभिप्रायं केशवस्य जानन्भीमो निजं बलम् ॥ राज्ञां मध्येऽवदत्तच्च कृष्णोऽप्यधिकमेव हि ॥ ५४ ॥ शशंस सत्यैः सद्वाक्यै राज्ञां मध्ये प्रकाशयन् ॥ वधं कुरूणां सद्धर्मे



गुणान्भीमस्य चामितान् ॥ ५५ ॥ नित्यमेकमनस्कौ तावपि केशवमारुती । एवं लोकस्य संवादहेतोः संवादमक्रताम् ॥ ५६ ॥ ततः कृष्णोऽर्जुनं चैव कृपालुं सन्धिकामुकम् । हेतुमद्भिः शुभैर्वाक्यैरनुनीय जगत्पतिः ॥ उक्तो मानुषया बुद्ध्या नकुलेन सुनीतिवित् ॥ ५७ ॥ शौर्यप्रकाशनायैव युद्धं योजयताद्भवान् । इत्युक्तः सहदेवेन युयुधानेन चाच्युतः ॥ ५८ ॥ दस्यूनां निग्रहो धर्मः क्षत्रियाणां यतः परः । अतो न धार्तराष्ट्रैर्नः सन्धिः स्यादिति पार्षती ॥ ५९ ॥ जगाद कृष्णं सोऽप्येनामोमित्युक्त्वा विनिर्ययौ ॥ ६० ॥ ससात्यकिः स्यन्दनवर्यसंस्थितः पृथातनूजैरखिलैश्च भूमिपैः । अन्वागतो दूरतरं गिरा तान्संस्थाप्य विप्रप्रवरैः कुरून्ययौ ॥ ६१ ॥

एकोऽपि कृष्णः (विष्णुः) स च भार्गवात्मा व्यासात्मकश्चानुगतो मुनीन्द्रैः (व्यासस्सशिष्यस्तदनन्यदृश्यः) ॥ ययौ तदुक्तेर्हि गुणान्प्रवेत्तुं नान्यो हि शक्तस्तमृते यतः प्रभुम् ॥ ६२ ॥ स वन्द्यमानोऽखिलराष्ट्रवासिभिः प्रसूनवर्षैरभिवर्षितः सुरैः । संस्तूयमानः प्रणतोऽब्जजादिभिर्गजाह्वयं प्राप परोऽप्रमेयः ॥ ६३ ॥ स भीष्ममुख्यैः सरसाभियातः सहैव तैः प्रययौ राजमार्गे । दिदृक्षवस्तं जगदेकसुन्दरं गुणार्णवं चाययुरत्र सर्वे ॥ ६४ ॥ सम्भावितस्तैः परमादरेण विवेश गेहं नृपतेरनन्तः । स भीष्ममुख्यान्पुरतो निधाय वैचित्रवीर्येण समर्चितोऽजः ॥ ६५ ॥ रौक्मे निषण्णः परमासने प्रभुर्बभौ स्वभासा ककुभोऽवभासयन् ॥ ६६ ॥ यथोचितं तेषु विधाय केशवो दौर्योधनं प्राप्य गृहं च पूजितः । पूजां तदीयां गुणवद्विडित्यसौ जग्राह नो विदुरं चाजगाम ॥६७॥ स भीष्मपूर्वैरभियाचितोऽपि जगाम नैषां गृहमादिदेवः । उपेक्षिता द्रौपदीत्यप्रमेयो जगाम गेहं विदुरस्य शीघ्रम् ॥६८॥ स तेन भक्त्याऽभिगतः प्रसन्नः प्रविश्य चान्तर्गृहमीश्वरोऽजः। भक्त्याऽभिपूर्णेन ससम्भ्रमेण सम्पूजितः सर्वसमर्पणेन ॥६९॥

परे दिनेऽसौ धृतराष्ट्रसूनुना सम्मानितः संसदि कौरवाणाम् । विवेश दिव्ये मणिकाञ्चनासने सार्धं मुनीन्द्रैः परमार्थवेदिभिः ॥७०॥ सम्पूजितो भीष्ममुख्यैः समस्तै रराज राजीवसमाननेत्रः । यथोचितास्तत्र विधाय वार्ता जगाद काले कलिकल्मपापहः ॥७१॥ वैचित्रवीर्यस्य (स्व)कुलस्य वृद्ध्यै प्रदेहि राज्यं तव सत्सुताय । यशश्च धर्मं परमं प्रसादं मम त्वमाप्नोषि त(स)दैव राजन् ॥ ७२ ॥ अतोऽन्यथा यशसो धर्मतश्च हीनः प्रतीपत्वमुपैषि मेऽतः । इतीरितः प्राह ममातिवर्तिनं सुतं स्वयं मे प्रतिबोधयेति ॥ ७३ ॥ स वासुदेवेन विबोधितोऽपि पापाभिसन्धिर्धृतराष्ट्रसूनुः । उत्थाय तस्मादनुजैरमात्यैर्नियन्तुमीशं कुमतिर्व्यधान्मतिम् ॥ ७४ ॥ ये ये तदा केशवसंयमाय न्यमन्त्रयंस्ते विबुधप्रतीपाः । अतो विकर्णप्रमुखा अपि स्म वध्यत्वमायन्न शुभां गतिं च ॥७५॥ कर्णः सुरांशो(ग्रचो)ऽपि सुयोधनार्थे न्यमन्त्रयद्भावतो नैव दुष्टः । अतो गतिश्चास्य सुशोभनाऽभूद्येऽत्रानुकूलाः परमस्य ते शुभाः ॥७६॥ ऋषिभिर्जामदग्न्येन व्यासेनाप्यमितौजसा । वासुदेवात्मकेनैवं त्रिरूपेणैव विष्णुना ॥ ७७ ॥ मातापितृभ्यां भीष्माद्यैरनुशिष्टोऽपि दुर्मतिः । दुर्योधनो मन्त्रयते मुकुन्दस्यानुबन्धनम् ॥ ७८ ॥ सात्यकिः कृतवर्मा च तच्छुश्रुवतुरञ्जसा । संस्थाप्य कृतवर्माणं रहः सात्यकिरत्र च ॥ अभ्येत्य केशवं प्राह दुर्योधनविनिश्चयम् ॥ ७९ ॥ जानन्नप्यखिलं कृष्णस्तच्छ्रुत्वा सात्यकेर्मुखात् । वैचित्रवीर्यमवदत्पश्यमामिति सर्वगम् ॥ ८० ॥ अथ तेनाहुते पुत्रे सामात्ये पुरुषोत्तमः । स्वरूपं दर्शयामास सर्वगं पूर्णषड्गुणम् ॥ ८१ ॥ तत्कालसूर्यामितदीप्तिसर्वजगद्धरं शाश्वतमप्रमेयम् । दृष्ट्वैव चक्षूंषि सुयोधनाद्या न्यमीलयन्दीधितिवारितानि ॥ ८२ ॥ पिधाय रूपं पुनरेव तद्धरिर्वैचित्रवीर्येण समर्थितः पुनः । कृत्वान्धमेव प्रययौ सुयोधनं सहानुगं पापतमं प्रकाश्य ॥ ८३ ॥ अनन्तशक्तिः पुरुषोत्तमोऽसौ शक्तोऽपि दुर्योधन-



चित्तनिग्रहे । नैव व्यधादेनमथोक्तकारिणं निपातयन्नन्धतमस्यनन्तः ॥ ॥ ८४ ॥

पुनश्च कुन्तीगृहमेत्य कृष्णस्तयोद्योगं धर्मसुतस्य शिष्टम् । श्रुत्वा ययौ सूर्यजमात्मयाने निधाय तस्यावददात्मजन्म ॥ आयाहि पार्थानिति तद्वचः स नैवाकरोन्मानितो धार्तराष्ट्रैः ॥ ८५ ॥ संस्थाप्य तं भगवान्द्रौणये च रहो वदन्मित्रभावं पृथाजैः । यावत्पितुर्मरणं सोऽपि मैत्रीं वव्रे पार्थैस्तं विसृज्याथ कृष्णः ॥ ८६ ॥ ययौ कुरून्पूर्वमेवोद्विसृज्य पृथासुतानां स सकाशमीशः ॥ ८७ ॥ सम्प्रार्थितः पृथया चैव कर्णः पार्थैर्योगं याहि सूनुर्ममासि । तेनाप्युक्ता वासविना विनाहं हन्यां सुतांस्ते न कथञ्चनेति ॥ ८८ ॥

ततो ययुः कौरवाः पाण्डवाश्च कुरुक्षेत्रं योद्धुकामाः सकृष्णाः । चक्रुश्च ते शिबिराण्यत्र सर्वे शुभे देशे पाण्डवाः कृष्णबुद्ध्या ॥ ८९ ॥ ॥ (३८०३) ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये युद्धोद्योगो नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

---

## ॥ अथ पञ्चविंशोऽध्यायः ॥

॥ ॐ ॥ ते सेने समरारम्भे समेते सागरोपमे । भीमभीष्ममुखे वीक्ष्य प्राह वासविरच्युतम् ॥ १ ॥ सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत । इत्युक्तः स तथा चक्रे पार्थोऽपश्यच्च बान्धवान् ॥ विससर्ज धनुः पापाशङ्की तत्राह माधवः ॥ २ ॥ स्वधर्मो दुष्टनिधनं धर्मज्ञानानुपालनम् । क्षत्रियस्य तमुत्सृज्य निन्दितो यात्यधो ध्रुवम् ॥ ॥३॥ यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ४ ॥ न च शोकस्त्वया कार्यो बन्धूनां

निधनेच्छया । देहस्य सर्वथा नाशादनाशाच्चेतनस्य च ॥ ५ ॥ सृष्टि-
स्थित्यप्ययाऽज्ञानबन्धमोक्षप्रवृत्तयः । प्रकाशनियमौ चैव ब्रह्मेशादि-
क्षरस्य च ॥६॥ अक्षरप्रकृतेश्चैव(स्सन्तो) मत्त एव न चान्यतः ॥७॥ न
मे कुतश्चित्सर्गाद्याः स्वातन्त्र्याद्गुणपूर्तितः । अतः समाधिकाभावात्सर्वं
मद्वशमेव च ॥ ८ ॥ ज्ञात्वैषां निधनाद्यं च जीवादेरस्वतन्त्रताम् ।
अस्वातन्त्र्यान्निवृत्तौ च मामनुस्मर युध्य च ॥९॥ ये तु सर्वाणि कर्माणि
मयि संन्यस्य मत्पराः । अनन्येनैव योगेन मां ध्यायन्त उपासते ॥
॥ १० ॥ तेषामहं समुद्धर्ता मृत्युसंसारसागरात् । भवामि न चिरा-
त्पार्थ मय्यावेशितचेतसाम् ॥ ११ ॥ मया ततमिदं सर्वं जगदव्यक्त-
मूर्तिना । मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ १२ ॥
सुपूर्णसत्सर्वगुणदेहोऽहं सर्वदा प्रभुः । अस्पृष्टाखिलदोषैकनित्यसत्तनु-
रव्ययः ॥ १३ ॥ इत्युक्तो वासविः प्राह व्याप्तिं ते दर्शयेश मे ।
अथ दिव्यदृशं तस्य दत्वा व्याप्तं निजं वपुः ॥१४॥ देशतः कालतश्चैव
पूर्णं सर्वगुणैः सदा । दर्शयामास भगवान्यावत्यर्जुनयोग्यता ॥ १५ ॥
तत्प्रार्थितः पुनः कृष्णस्तद्रूपं लोकमानतः । पूर्ववद्दर्शयामास पुनश्चैन-
मशिक्षयत् ॥ १६ ॥ ज्ञानं ज्ञेयं प्रकृत्यादि ज्ञापयन्पुरुषोत्तमः ।
तेनानुशिष्टः पार्थस्तु सशरं धनुराददे ॥ १६ ॥

अथ व्यूढेष्वनीकेषु नदन्वायुसुतोऽभ्यगात् । समितिं धार्तराष्ट्राणां
ते तं सर्वे न्यवारयन् ॥ १८ ॥ ससृजुः शरवृष्टिं च भीमसेनस्य
मूर्धनि । क्षिप्रं नैव प्रहर्तव्यं ज्ञातिषु प्रहरत्स्वपि ॥ इत्येवाप्रहरत्यस्मि-
ञ्छत्रुभिः शरविक्षते ॥१९॥ अमुचन्धार्तराष्ट्रेषु शस्त्रवृष्टिं दुरासदाम् ।
सौभद्रप्रमुखा वीराः सर्वे पाण्डुसुतात्मजाः ॥२०॥ अपीडयंस्ताञ्छस्त्रौघै-
र्धार्तराष्ट्राः समन्ततः ॥२१॥ ररक्ष तान्वायुसुतो विसृजञ्छरसञ्चयान् ।
तत्र भीमशरैर्नुन्ना धार्तराष्ट्राः समन्ततः ॥ २२ ॥ भग्नांस्तानथ गाङ्गेयो
दिव्यास्त्रविदधारयत् । अथ द्वन्द्वानि युद्धानि बभूवुर्विजिगीषताम् ॥



॥ २३ ॥ द्रोणपार्षतयोश्चैव शैनेयकृतवर्मणोः । दुःशासनेन वीरस्य
माद्रेयस्य यवीयसः ॥२४॥ नकुलस्य विकर्णस्य कार्ष्णेयैर्दुर्मुखादिनाम् ।
ते द्वन्द्वे महायुद्धे तत्र धर्मजपक्षगाः ॥ २५ ॥ जिता विनैव शैनेयं
सोऽजयद्धृदिकात्मजम् । अथ भीष्मद्रोणमुखैर्भगदत्तादिभिस्तथा ॥२६॥
विद्राव्यमाणं स्वबलं स्थापयामास मारुतिः । द्रोणं च भगदत्तं च कृपं
दुर्योधनं तथा ॥ केवलं बाहुवीर्येण व्यजयद्भीमविक्रमः ॥ २७ ॥
त्वोत्तरं मद्रराजो व्यद्रावयदनीकिनीम् ॥२८॥ अथ भीष्ममुदीर्णास्त्रं
द्रावयन्तं वरूथिनीम् । ससौमदत्तिं सौभद्रसहायोऽर्जुन आसदत् ॥२९॥
सौभद्रं तत्र विक्रान्तमतीत्य द्युसरित्सुतः । द्रावयामास पाञ्चालान्पश्यतः
सव्यसाचिनः ॥ ३० ॥ तस्य विक्रममालक्ष्य पार्थं तद्गौरवानुगम् ।
दृष्ट्वा युधिष्ठिरो राजा क्रुद्धः सेनामपाहरत् ॥ ३१ ॥ रात्रौ युधिष्ठिर-
श्चिन्तामाप्य पार्थं व्यगर्हयत् । स कृष्णाद्यैः सान्त्वितश्च पुनर्युद्धाय
निर्ययौ ॥ ३२ ॥

एवं भीष्मो दशाहानि सैनापत्यं चकार ह । कृत्वा तु पाण्डवै-
र्युद्धं तत्कर्तुमकृतोपमम् ॥ ३३ ॥ कर्णोऽर्धरथ इत्युक्त्वा तावद्युद्धा-
त्प्रयापितः । यावत्त्वं योत्स्यसे तावन्न योत्स्यामीति निर्गते ॥ ३४ ॥
कर्णेऽयुतरथानां च नित्यशो वधमाहवे । प्रतिजज्ञेऽकरोत्तच्च पुनश्चास्त्र-
विदां वरः ॥ ३५ ॥ सुसमर्थावपि वधे तस्य भीमधनञ्जयौ । स्नेहेन
यन्त्रितौ तस्य गौरवाच्चान्ववर्तताम् ॥३६॥ बभूवुस्तत्र युद्धानि चित्राणि
सुबहूनि च । तान्यम्बरे विमानस्था ब्रह्मरुद्रपुरःसराः ॥ ३७ ॥
अपश्यन्देवताः सर्वा गन्धर्वाप्सरसोऽसुराः ॥३८॥ धृष्टद्युम्नो महेष्वासः
प्रतिव्यूह्यापगासुतम् । चक्रे युद्धानि सुबहून्यजेयः शत्रुभी रणे ॥३९॥
तोत्रोद्धार कृष्णोऽपि फल्गुनं मृदुयोधिनम् । दृष्ट्वा चक्रं तथोद्यम्य
प्राद्रुं भीष्माय जग्मिवान् ॥ ४० ॥ तेन स्तुतो गृहीतश्च फल्गुनेन
प्रणम्य च । प्रार्थितो रथमारूढः पुनः शङ्खमपूरयत् ॥ ४१ ॥ ततो

भीष्मोऽर्जुनश्चैव शस्त्रास्त्रैरभ्यवर्षताम् । अयत्नेन जितश्चैव फल्गुनेनापगासुतः ॥ ४२ ॥ अयुतानि बहून्याजौ रथानां निजघान च । जिताः सेनापहारं च चक्रुर्भीष्ममुखास्ततः ॥ ४३ ॥ कदाचिदग्रगो भीमो भीष्मद्रोणौ विसारथी । कृत्वा विद्राव्य तानश्वान्भित्त्वा व्यूहं विवेश ह ॥ ४४ ॥ पुनः संस्थापितरथौ विजित्यायत्नतो बली । यतमानौ महेष्वासौ धार्तराष्ट्राञ्जघान ह ॥ ४५ ॥ पञ्चविम्शद्धतास्तत्र धार्तराष्ट्रा महाबलाः । भगदत्तद्रौणिकृपशल्यदुर्योधनादयः ॥ ४६ ॥ सर्वे जिता द्राविताश्च सेना च बहुला हता । विरथो व्यायुधश्चैव दृढवेधविमूर्च्छितः ॥ ४७ ॥ कृतो दुर्योधनः सर्वराज्ञां भीमेन पश्यताम् । ततोऽपहारं सैन्यस्य जिताश्चक्रुश्च कौरवाः ॥ ४८ ॥

दुर्योधनो निशायां च ययौ यत्र नदीसुतः । पीडितो भीमबाणैश्च क्षरद्गात्रो ननाम तम् । उवाच हेतुना केन वयं जी(क्षी)याम सर्वदा ॥ ४९ ॥ पाण्डवाश्च जयं नित्यं लब्ध्वा हर्षमवाप्नुवन् । तमाह भीष्मस्तेऽजेया देवास्ते धरणीं गताः । विशेषतः केशवेन पालितास्तत्प्रियाः सदा ॥ ५० ॥ मानसोत्तरशैले हि पुरा ब्रह्मपुरःसराः । स्थिता देवास्तदाऽपश्यद्ब्रह्मैको हरिमम्बरे ॥ ५१ ॥ स्तुत्वा सम्पूज्य भूमेः स भारावतरणाय तम् । प्रार्थयामास तेनोक्तं देवानामवदद्विभुः ॥ ॥ ५२ ॥ अयं नारायणो देवः पूर्णानन्तगुणार्णवः । आज्ञापयति च सर्वान्प्रादुर्भावाय भूतले ॥ ५३ ॥ स्वयं च देवकीपुत्रो भविष्यति जगत्पतिः ॥ ५४ ॥ एवं तेन समादिष्टा धर्मवाय्वादयोऽखिलाः । अभवन्पाण्डवाद्यास्ते सेन्द्राः सहमरुद्गणाः ॥ ५५ ॥ स च नारायणो देवो देवकीनन्दनोऽभवत् । तेनैते पालिताः पार्था अजेया देवसर्गिणः ॥ तस्मात्तैः सन्धिमन्विच्छ यदीच्छस्यपराभवम् ॥ ५६ ॥ इत्युक्तो दम्भबुद्ध्यैव नत्वा विष्णुं ततो ययौ । प्रातर्निर्यातयामास सेनां युद्धाय दुर्मतिः ॥ ५७ ॥ दिव्यौषधेन भीष्मस्य भूत्वा स (च) निरुजस्ततः ।



भीष्ममग्रे निधायैव ययौ युद्धाय दंशितः ॥ ५८ ॥

तत्रासीत्सुमहद्युद्धं भीमभीष्मानुयायिनाम् । पाण्डवानां कुरूणां च शूराणामनुवर्तिनाम् ॥ ५९ ॥ धृष्टद्युम्नस्तत्र भीमानुयायी दुर्योधनस्यावरजैः प्रयुध्यन् । सम्मोहनास्त्रेण विमोहयित्वा विकर्णपूर्वानहनच्च सेनाम् ॥ ६० ॥ ततो द्रोणस्तान्समुत्थाप्य सर्वान्विज्ञानास्त्रेणासदत्पार्षतं च । तं भीमसेनः सूतहीनं विधाय व्यद्रावयच्छत्रुगणाञ्छरौघैः ॥६१॥ अथासदत्कृतवर्मा रथेन धृष्टद्युम्नं सोऽभ्ययात्तावुभौ च । ववर्षतुः शरवर्षैरथोग्रैस्तत्राकरोद्विरथं द्रौपदिस्तम् ॥ ६२ ॥ तस्मिञ्जिते रथवीरे स्वयं तं दुर्योधनः पार्षतमाससाद । तं भीमसेनो विरथायुधं च कृत्वा बाणेनाहनज्जत्रुदेशे ॥ ६३ ॥ विमूर्च्छितं तं रुधिरौघमुच्चैर्वमन्तमाशु स्वरथे निधाय । कृपो ययौ मारुतिर्धार्तराष्ट्रीं व्यद्रावयत्पृतानां बाणपूगैः ॥६४॥ अथेन्द्रसूनुः केशवप्रेरितेन रथेन शत्रून्विधमञ्छरौघैः । रथात्रणे पञ्चविम्शत्सहस्रान्निनाय वैवस्वतसादनाय ॥६५॥ तमन्वयायुयुधानः सुधन्वा विद्रावयन्धार्तराष्ट्रस्य सेनाम् । तमभ्ययात्सौमदत्तिस्तयोश्च सुयुद्धमासीदतिभैरवास्त्रम् ॥ ६६ ॥ पुत्रान्दशास्याशु निहत्य वीरः स सात्यकेः सौमदत्तिः सकाशे । समर्दयामास शरीरदारणैः शरैरुभौ तौ विरथौ च चक्रतुः ॥ ६७ ॥ अथासिपाणिं युयुधानमाशु महासिहस्तेन च सौमदत्तिना । आसादितं वीक्ष्य रथं स्वकीयमारोपयामास सुतोऽनिलस्य ॥६८॥ सुयोधनः सौमदत्तिं स्वकीयरथे व्यवस्थाप्य च भीमसेनात् । अपाद्रवद्भासविर्भीष्ममाजौ समाससादाशु महेन्द्रकल्पः ॥ ॥ ६९ ॥ उभौ च तावस्त्रविदां प्रबर्हौ शरैर्महाशीविषसन्निकाशैः । ततक्षतुर्नाकसदां समक्षं महाबलौ संयति जातदर्पौ ॥ ७० ॥ स्वबाहुवीर्येण जितः स भीष्मः किरीटिना लोकमहारथेन । सेनामपाहृत्य ययौ निशायामासादितायामथ पाण्डवाश्च ॥ ७१ ॥

ततः परेद्युः पुनरेव भीमभीष्मौ पुरस्कृत्य समीयतुस्ते । सेने

तदा सारथिहीनमाशु भीष्मं कृत्वा मारुतिरभ्ययात्परान् ॥ ७२ ॥
निपातितास्तेन रथेभवाजिनः प्रदुद्रुवुश्चावशिष्टाः समस्ताः । दुर्योधना-
द्येषु पराजितेषु भीष्मद्रोणद्रौणिपुरःसरेषु ॥ ७३ ॥ महागजस्थो
भगदत्त आगादायन्बाणान्भीमसेनेऽमुचच्च । तेनातिविद्धे भीमसेनेऽस्य
पुत्र उद्यच्छमानं पितरं निवार्य । घटोत्कचोऽभ्यद्रवदाशु वीरः स्वमायया
हस्तिचतुष्टयस्थः ॥ ७४ ॥ स वैष्णवास्त्रं भगदत्तसंस्थं विज्ञाय विष्णो-
र्वरतो विशेषतः । अमोघमन्यत्र हरेर्मरुत्सुतः पुत्रे याते न स्वयमभ्य-
धावत् ॥ ७५ ॥ अनुग्रहादभ्यधिकादवध्यं जानन्नपि स्वं वासुदेवस्य
नित्यम् । तद्भक्तिवैशेष्यत एव तस्य सत्यं वाक्यं कर्तुमरिं न चागात्॥
॥ ७६ ॥ यदा स्वपुत्रेण जितो भवेत्स किं स्वात्मनेत्येव तदा प्रवेत्तुम् ।
स विस्मृतास्त्रस्तु यदा भवेत तदा भीमो भगदत्तं प्रयाति ॥ ७७ ॥
ऋते भीमं चार्जुनं नास्त्रमेष प्रमुञ्चतीत्येव हि वेद भीमः ॥ ७८ ॥
चतुर्गजात्मोपरिगात्मकश्च घटोत्कचः सुप्रतीकं च तं च । नाना-
प्रहारैर्वितुदंश्चकार सन्दिग्धजीवौ जगतः समक्षम् ॥ ७९ ॥ गजार्त-
नादं तु निशम्य भीष्ममुखाः समापेतुरमुं च दृष्ट्वा । महाकायं भीम-
ममुष्य पृष्ठगोपं च वाय्वात्मजमत्रसन्भृशम् ॥ ८० ॥ ते भीतभीताः
पृतनापहारं कृत्वाऽपजग्मुः शिबिराय शीघ्रम् ॥ ८१ ॥ दिने परे चै
पुनः समेताः परस्परं पाण्डवाः कौरवास्ते । तत्रासदन्नागसुतासमुद्भवः
पार्थात्मजः शाकुनेयान्षडेकः ॥ ८२ ॥ तैः प्रासहस्तैः क्षतकायोऽति-
रूढकोपः स खड्गेन चकर्त तेषाम् । शिरांसि वीरो बलवानिरावान्भयं
दधद्धार्तराष्ट्रेषु चोग्रम् ॥ ८३ ॥ दृष्ट्वा तमुग्रं धृतराष्ट्रपुत्रो दिदेश
रक्षोऽलम्बुसनामधेयम् । जह्यार्जुनिं क्षिप्रमिति स्म तच्च समासदन्नाग-
सुतातनूजम् ॥ ८४ ॥ तयोरभूद्युद्धमतीवदारुणं मायायुजोर्वीर्यवतोर्महा-
द्भुतम् । ससादिनोऽश्वान्स तु राक्षसोऽसृजत्ते पार्थपुत्रस्य च सादिनो
हनन् । ततस्त्वनन्ताकृतिमाशमार्जुनिं सुव(पू)र्णरूपोऽहनदाशु राक्षसः ॥



॥ ८५ ॥ हतं निशम्यार्जुनिमुग्रपौरुषो ननाद कोपेन वृकोदरात्मजः ।
चचाल भूर्नानदतोऽस्य रावतः ससागरागेन्द्रनगा भृशं तदा ॥ ८६ ॥
अलम्बुसस्तं प्रसमीक्ष्य मारुतेः सुतं बलाढ्यं भयतः पराद्रवत् । परा-
द्रवन्धार्तराष्ट्रस्य सेनाः सर्वास्तमाराथ सुयोधनो नृपः ॥ ८७ ॥ स
भीमपुत्रस्य जघान मन्त्रिणो महाबलांश्चतुरोऽन्यांस्तथैव । हतावशेषेषु
च विद्रवत्सु घटोत्कचोऽभ्याहनदाशु तं नृपम् ॥८८॥ स पीड्यमानो
युधि तेन रक्षसा प्रवेशयामास शरं घटोत्कचे । दृढाहतस्तेन तदा
बलीयसा घटोत्कचः प्रव्यथितेन्द्रियो भृशम् ॥ तस्थौ कथञ्चिद्भुवि
पात्यमानः पुनः शरानप्यसृजत्सुयोधने ॥ ८९ ॥ चिरं प्रयुद्धौ नृप-
राक्षसाधिपौ परस्पराजेयतनू रणाजिरे । द्रोणादयो वीक्ष्य रिरक्षिषन्तः
सुयोधनं प्रापुरमित्रसाहाः ॥९०॥ सद्रोणशल्यौ गुरुपुत्रगौतमौ भूरिश्रवः
कृतवर्मादिकांश्च । ववर्ष बाणैर्गगनं समाश्रितो घटोत्कचः स्थूलतमैः
सुवेगैः ॥ ९१ ॥ तमेकमग्र्यै रथिभिः परिष्कृतं निरीक्ष्य भीमोऽभ्य-
गमत्समस्तान् । द्रोणोऽत्र भीमप्रहितैः शरोत्तमैः सुपीडितः प्राप्तमूर्च्छः
पपात ॥ ९२ ॥ द्रौणिं कृपाद्यान्ससुयोधनांश्च चकार भीमो विरथा-
न्क्षणेन । निवार्यमाणांस्तु वृकोदरेण घटोत्कचस्तान्प्रववर्ष सायकैः ॥
॥ ९३ ॥ तेनाम्बरस्थेन तरुप्रमाणैरभ्यर्दिताः कुरवः सायकौघैः ।
भूमौ च भीमेन शरौघपीडिताः पेतुर्नेदुः प्राद्रवंश्चातिभीताः ॥ ९४ ॥
सर्वांश्च तान्छिबिरं प्रापयित्वा विना भीष्मं कौरवान्भीमसेनः ।
घटोत्कचश्चानदतां महास्वनौ नादेन लोकानभिपूरयन्तौ ॥ ९५ ॥

दुर्योधनोऽथ स्वजनैः समेतः पुनः प्रायाद्रणभूमिं स भीष्मम् ।
जयोपायं भैमसेनेरपृच्छत्स्वस्यैव स प्राह न तं व्रजेति ॥९६॥ प्राग्जोतिषं
चैव घटोत्कचाय सम्प्रेषयामास सुरापगासुतः । सम्प्राप्य हैडिम्ब-
मयोधयद्बली स चार्दयामास सकुञ्जरं तम् ॥९७॥ तेनार्दितः प्राहिणो-
च्छूलमस्मै वियत्यवप्लुत्य तदा घटोत्कचः । प्रगृह्य शूलं प्रबभञ्ज जानु-

मारोप्य देवा जहृषुस्तदीक्ष्य ॥ ९८ ॥ तदा स तस्यैव पदानुगान्नृपो जघान तं मारुतिरभ्ययाद्रणे । स प्राहिणोद्भीमसेनाय वीरो गजं तमस्तम्भयदाशु सायकैः ॥ ९९ ॥ संस्तम्भिते बाणवरैस्तु नागे भीमस्याश्वान्सायकैरर्दयत्सः । सोऽभ्यर्दिताश्वोऽथ गदां प्रगृह्य हन्तुं नृपं तं सगजं समासदत् ॥ १०० ॥ स हन्तुकामेन रुषाऽभिपन्नो भीमेन राजा पुरतः पृष्ठतश्च । कृष्णेनास्त्रं वैष्णवं तद्गृहीतुं सहार्जुनेनापययौ स भीतः ॥ १०१ ॥ तस्मिन्गते भीमसेनार्जुनाभ्यां विद्राविते राजसङ्घे समस्ते । भीष्मः सेनामपहृत्यापयातो दुर्योधनस्तं निशि चोपजग्मिवान् ॥ १०२ ॥ संश्रावितः क्रूरवचः स तेन चक्रे प्रतिज्ञां मृत्युभयं विहाय । शक्त्या हनिष्यामि परानिति स्म चक्रे च तत्कर्म तथापरेद्युः ॥ १०३ ॥ तं शक्तितो जुगुपुर्धार्तराष्ट्रास्तेनार्दिताश्चेदिपाञ्चालमात्स्याः । पराद्रवन्भीष्मबाणोरुभीताः सिंहार्दिताः क्षुद्रमृगा इवार्ताः ॥ ॥१०४॥ संस्थाप्य तान्भीष्ममभिप्रयान्तमलम्बुसोऽवारयत्पार्थसूनुम् । विजित्य तं केशवभागिनेयो भीष्मं ययौ धार्तराष्ट्रोऽभ्युसार ॥ १०५ ॥ तद्युद्धमासीन्नृपपार्थपुत्रयोर्विचित्रमत्यद्भुतरूपमुग्रम् । समं चिरं तत्र धनुश्चकर्त ध्वजं च राजा सहसाऽभिमन्योः ॥ १०६ ॥ अथैनमुग्रैश्च शरैर्ववर्ष सूतं च तस्याशु जघान वीरः । तदाऽऽसदद्भीमसेनो नृपं तं जघान चाश्वान्धृतराष्ट्रजस्य ॥ १०७ ॥ द्रोणो द्रौणिर्भगदत्तः कृपश्च सचित्रसेना अभ्ययुर्भीमसेनम् । सर्वांश्च तान्विमुखीकृत्य भीमः स चित्रसेनाय गदां समाददे ॥ १०८ ॥ तामुद्यतां वीक्ष्य पराद्रवंस्ते स चित्रसेनश्च रथादवप्लुतः । सञ्चूर्णितो गदया तद्रथश्च तज्जीवनेनोद्धृपिताश्च कौरवाः ॥ १०९ ॥ भीष्मस्तु पाञ्चालकरूशचेदिष्वहन्सहस्राणि चतुर्दशोग्रः । रथप्रबर्हानतितिग्मतेजा विद्रावयामास परानवीनिव ॥ ॥ ११० ॥ विद्राव्य सर्वामपि पाण्डुसेनां विश्राव्य लोकेषु च कीर्तिमात्मनः । सेनामपाहृत्य ययौ निशागमे संस्तूयमानो धृतराष्ट्रपुत्रैः ॥



॥ १११ ॥ द्रोणो विराटस्य पुरो निहत्य शङ्खं सुतं तस्य विजित्य तं च । विद्राव्य सेनामपि पाण्डवानां ययौ नदीजेन सहैव हृष्टः ॥११२॥ भीमार्जुनावपि शत्रून्निहत्य विद्राव्य सर्वांश्च युधि प्रवीरान् । युधिष्ठिरेणापहृते स्वसैन्ये भीतेन भीष्माच्छिबिरं प्रजग्मतुः ॥ ११३ ॥

युधिष्ठिरो भीष्मपराक्रमेण भीतो भीष्मं स्ववधोपायमेव । प्रष्टुं ययौ निशि कृष्णोऽनुजाश्च तस्यान्वयुस्तं स पितामहो यत् ॥ ११४ ॥ भीमार्जुनौ शक्नुवन्तावपि स्म नर्तेऽनुज्ञां हन्तुमिमं समैच्छताम् । पूज्यो यतो भीष्म उदारकर्मा कृष्णोऽप्यायात्तेन हि पाण्डवार्थे ॥ ११५ ॥

प्राप्यानुज्ञां भीष्मतस्ते वधाय शिखण्डिनं तद्वचसाऽग्रयायिनम् । कृत्वा परेद्युर्युधये विनिर्गता भीष्मं पुरस्कृत्य तथाऽपरेपि ॥ ११६ ॥ शिखण्डिनो रक्षकः फल्गुनोऽभूद्भीष्मस्य दुःशासन आस चाग्रे । अन्ये च सर्वे जुगुपुर्भीष्ममेव न्यवारयन्भीमसेनादयस्तान् ॥११७॥ भीष्माय यान्तं युयुधानमाजौ न्यवारयद्राक्षसोऽलम्बुसोऽथ । तं वज्रकल्पैरतुदद्वृष्णिवीरः शरैः स मायामसृजत्तदोग्राम् ॥ ११८ ॥ अस्त्रेण मायामपनुद्य वीरो व्यद्रावयद्राक्षसं सात्यकिस्तम् । तस्मिन्गते युयुधानो रथेन ययौ भीष्मं पार्थमन्वेव धन्वी ॥११९॥ द्रोणो द्रौणिर्धार्तराष्ट्रश्च राजा भूरिश्रवा भगदत्तः कृपश्च । शल्यो बाह्लीकः कृतवर्मा सुशर्मा सर्वाश्च सेना वारिता वायुजेन ॥ १२० ॥ स तान्मुहुर्विरथीकृत्य वीरः प्राग्जोतिषं सगजं द्रावयित्वा । न्यवारयत्फल्गुनं योद्धुकामं पार्थश्च देवव्रतमाससाद ॥ १२१ ॥ युधिष्ठिरं भीष्ममभिप्रयान्तं माद्रीसुताभ्यां सहितं नृवीरम् । न्यवारयच्छकुनिः सादिनां च युतोऽयुतेनैव वराश्वगेन ॥ १२२ ॥ तान्सादिनोऽश्वांश्च निहत्य सर्वान्विजित्य तं शकुनिं पाण्डवास्ते । प्रापुर्भीष्मं द्रौपदेयाश्च सर्वे तथा विराटद्रुपदौ कुन्तिभोजः ॥ १२३ ॥ धृष्टद्युम्नं भीष्ममभिप्रयान्तं न्यवारयत्सैन्धवस्तं स बाणैः । ह(त्वा)ताश्वसूतं सगणं द्रावयित्वा समासदद्भीष्ममेवाशु वीरः ॥

॥१२४॥ गुप्तोऽथ पार्थेन रणे शिखण्डी भीष्मं समासाद्य शरैरताडयत्।
भीष्मः स्त्रीत्वं तस्य जानन्न तस्मै मुमोच बाणान्स तु तं तुतोद ॥१२५॥
शिखण्डिनं वारयामास बाणैर्दुर्मर्षणोऽमर्षणविह्वलेक्षणः । नात्येतुमेन-
मशकच्छिखण्डी दुःशासनः पार्थमवारयत्तदा ॥ १२६ ॥ स लोक-
वीरोऽपि दुरात्मनाऽमुना रुद्धोऽशकन्नैनमतीत्य यातुम् । भीष्मं पार्थः
सायकाश्चास्य तस्मिन्ससञ्जिरे पर्वतेष्वप्यसक्ताः ॥ १२७ ॥ अमर्षयुक्तौ
चिरमेव वीरावयुध्यतामर्जुनधार्तराष्ट्रौ । समं तदासीन्महदद्भुतं च
दिवौकसां पश्यतां भूभृतां च ॥ १२८ ॥ तदा विराटद्रुपदौ कुन्ति-
भोजं कृष्णासुतान्कैकयांश्चेकितानम् । भूरिश्रवाः सोमदत्तो विकर्णः
सकैकया वारयामासुरुच्चैः ॥ १२९ ॥ जित्वैव तांस्तेऽभिययुश्च भीष्मं
तदार्जुनोऽतीत्य दुःशासनं च । भीष्मं शरैराच्छेदरिप्रमाथिभिः
शिखण्डिनं धार्तराष्ट्राद्विमुच्य ॥ १३० ॥ स तैः समस्तैर्बहुभिः शस्त्र-
पूगैर्भृशं मर्मस्वर्दितश्चापमुक्तैः । शरैः समस्तान्विरथांश्चकार शैनेय-
पाञ्चालयुधिष्ठिराद्यान् ॥ १३१ ॥ स चेदिपाञ्चालकरूशमुख्यान्रथो-
दारान्पञ्चविंशत्सहस्रान् । सम्प्रेषयामास यमाय बाणैर्युगान्तकालाग्निरिव
प्रवृद्धः ॥ १३२ ॥ निरीक्ष्य तं सूर्यमिवातपन्तं सञ्चोदितो वासुदेवेन
पार्थः । चिच्छेद तत्कार्मुकं लोकवीरो रणेऽर्धचन्द्रेण स चान्यदाददे ॥
॥ १३३ ॥ चिच्छेद तच्चैवमष्टौ धनूंषि शक्तिं च चर्मासिवरं पराणि ।
धनूंषि दत्तानि नृभिर्नृपस्य सर्वाणि चिच्छेद स पाकशासनिः ॥१३४॥
ततः शरैः सूर्यकरप्रकाशैर्विव्याध सर्वेऽपि युधिष्ठिराद्याः । तैरर्दितो
न्यपतद्भूतले स प्राणान्दधारापि तथोत्तरायणात् ॥ १३५ ॥

निपातितेऽस्मिन्मारुतिर्द्रोणमुख्यान्विद्राव्य तत्रागमदाशु तेऽपि ।
तदाऽऽयुधानि प्रणिधाय वीराः पार्थाः परे चैनमुपासदन्स्म ॥ १३६ ॥
प्रणम्य तं तद्वचनात्समीयुस्तस्मिन्दिने शिबिराण्येव सर्वे । परे दिने
सर्व एवोपतस्थुर्भीष्मं यदूनां पतिना सहैव ॥ १३७ ॥ स पूर्वदिवसे



पार्थदत्तबाणोपबर्हणः । तदापि तृट्परीतात्मा योग्यं पेयमयाचत ॥
॥ १३८ ॥ धार्तराष्ट्रैरविज्ञातं तदा विज्ञाय वासविः । वारुणास्त्रेण
भित्त्वा स भुवि वारि सुगन्धि च । ऊर्ध्वधारामधादास्ये तर्पितोऽनेन
सोऽवदत् ॥ १३९ ॥ यादृश्यस्त्रज्ञता पार्थे दृष्टाऽत्र कुरुनन्दनाः ।
यादृग्बाहुबलं भीमे संयुगेषु पुनःपुनः ॥ १४० ॥ यादृशं चैव महात्म्य-
मनन्तमजरं हरेः । विज्ञातं सर्वलोकस्य सभायां दृष्टमेव च ॥ १४१ ॥
उपारमत तद्युद्धं सुखिनः सन्तु भूमिपाः । यथोचितं विभक्तां च
भुङ्ध्वं भूपाः सदा भुवम् ॥ १४२ ॥ इत्युक्तः स ययौ तूर्ष्णीं
धार्तराष्ट्रः स्वकं गृहम् । व्यासदत्तोरुविज्ञानात्सञ्जयादखिलं पिता ॥
॥ १४३ ॥ श्रुत्वा तदा पर्यतप्यत्पाण्डवाः कृष्णदेवताः । मुमुदुः
शिबिरं प्राप्य सर्वे कृष्णानुमोदिताः ॥ १४४ ॥ (३९४७) ॥ इति
श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये
भीष्मपातो नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

---

## ॥ अथ षड्विंशोऽध्यायः ॥

॥ हरिः ॐ ॥ अथाखिलानां पृथिवीपतीनामाचार्यमग्र्यं रथिनां
सुविद्यम् । रामस्य विश्वाधिपतेः सुशिष्यं चक्रे चमूपं धृतराष्ट्रपुत्रः ॥१॥
कर्णोऽपि भीष्मानुमतो धनुष्मान्युद्धोद्यतोऽभूत्तदसत्कृतः पुरा । तस्मि-
स्थितेऽनात्तधनुस्तदैव रथं समास्थाय गुरुं समन्वयात् ॥ २ ॥ द्रोणो
वृतो धार्तराष्ट्रेण धर्मसुतग्रहे तेन कृते प्रतिश्रवे । ज्ञात्वा यत्ताः
पाण्डवास्तं समीयुर्युद्धाय तत्राभवदुग्रयुद्धम् ॥ ३ ॥ पतत्रिभिस्तत्र
दुधाव शात्रवान्द्रोणो धनुर्मण्डलमन्त्रनिःसृतैः । तमाससादाशु वृकोदरो
नदंस्तमासदन्द्रौणिकृपौ च मद्रराट् ॥ ४ ॥ स तान्विधूयाभ्यपतद्रणेऽ-

ग्रणीर्द्रोणं तमन्वार्जुनिरभ्ययात्परान् । ववार तं मद्रपतिस्तयोरभूद्रणो
महांस्तत्र गदां समाददे । शल्योऽथ भीमोऽभिययौ गदाधरस्तमेतयो-
रत्र बभूव सङ्गरः ॥ ५ ॥ उभावजेयौ गदिनावनुत्तमावतुल्यवीर्यौ
प्रवरौ बलीयसाम् । विचेरतुश्चित्रतमं प्रपश्यतां मनोहरं तावभिनर्द-
मानौ ॥ ६ ॥ गदाप्रपाताङ्कितवज्रगात्रौ ददर्श लोकोऽखिल एव तौ
रणे । गदाभिघातेन वृकोदरस्य विचेतनः प्रापतदत्र मद्रराट् ॥ ७ ॥
भीमोऽपि कोपात्प्रचलत्पदः क्षितौ निधाय जानुं सहसोत्थितः क्षणात्
॥ ८ ॥ विचेतनं पतितं मद्रराजं विलोक्य भीमं च तमाह्वयन्तम् ।
रथं समारोप्य जनस्य पश्यतः पुरश्च भीमस्य कृपोपजग्मिवान् ॥ ९ ॥
विजित्य मद्राधिपमोजसाऽरिहा नदन्रथं प्राप्य निजं स मारुतिः ।
व्यद्रावयद्बाणगणैः परेषामनीकिनीं द्रोणसमक्षमेव ॥ १० ॥ विद्रावय-
त्याशु कुरून्वृकोदरे विधूय सौभद्रमुखान्ससात्यकीन् । द्रोणोऽभिपेदे
नृपतिं ग्रहीतुं तमाससादाशु धनञ्जयो रथी ॥ ११ ॥ सवासुदेवप्रयते
रथे स्थितः शरैः शरीरांतकरैः समन्ततः । निहत्य नागाश्वरथान्प्रवर्त-
यन्नद्यताश्चेव च शोणितापगाः ॥ १२ ॥ निहन्यमानासु किरीटिना
चमूष्वारक्षिते धर्मसुते तथाऽऽपदः । चमूं च भीमार्जुनबाणभग्नां द्रोणो-
पहृत्यापययौ निशागमे ॥ १३ ॥

स धार्तराष्ट्रेण युधिष्ठिराग्रहात्संश्रावितः क्रूरवचो निशायां ।
जगाद दूरं समराद्विनीयतां पार्थस्ततो धर्मसुतं ग्रहीष्ये ॥ १४ ॥ तता
सुशर्मा सहितो महारथैः संशप्तकैर्दूरतरं प्रणेतुम् । युद्धाय भीमानुजमा
कृष्टो दुर्योधनेनोमिति सोऽप्यवादीत् ॥ १५ ॥ समाह्वायामासुरथो
र्जुनं ते प्रातर्हुताशस्य दिशं रणाय । आयोधयत्तान्स च तत्र गत्वा
भीमो गजानीकमथात्र चावधीत् ॥ १६ ॥ निहन्यमानेषु गजे
सर्वशो विद्राव्यमाणेष्वखिलेषु राजसु । प्राग्जोतिषो धार्तराष्ट्रार्थित
समागमत्सुप्रतीकेन धन्वी ॥ १७ ॥ विभीषिताः सुप्रतीकेन भीमाद्या



न तस्थुस्तदनु स्म सात्यकिः । सौभद्रमुख्याश्च गजं तमभ्ययुश्चिक्षेप
तेषां स रथानथाम्बरे ॥ १८ ॥ शैनेयपूर्वेषु रथोज्झितेषु भूमाववप्लुत्य
कथञ्चिदेव । स्थितेषु भीमे च विभीषिताश्वान्संयम्य युध्यत्यपि कृष्ण
ऐक्षत् ॥ १९ ॥ सङ्केशितो वैष्णवास्त्रं विमुञ्चेत्प्राग्जोतिषो भीमसेने
ततोऽहम् । याम्यर्जुनेनैव तदस्त्रमात्मनः स्वीकर्तुमन्येन वरादधार्यम् ॥
॥ २० ॥ इति स्म सञ्चिन्त्य सहार्जुनेन तत्राययावथ पार्थं त्रिगर्ताः ।
न्यवारयम्स्त्वाष्ट्रमस्त्रं स तेषु व्यवासृजन्मोहनायाशु वीरः ॥ २१ ॥
तदस्त्रवीर्येण विमोहितास्ते परस्परं कृष्णपार्थाविति स्म । जघ्नुस्तदा
वासविस्तान्विसृज्य प्राग्जोतिषं हन्तुमिवाभ्ययाद्द्रुतम् ॥ २२ ॥ विसृज्य
भीमं स च पार्थमेव ययौ गजस्कन्धगतो गजं तम् । सञ्चोदयामास
रथाय तस्य चक्रेऽपसव्यं हरिरेनमाशु ॥ २३ ॥ मनोजवेनैव रथे परेण
सम्भ्राम्यमाणेन तु तं गजः सः । प्राप्तुं शशाकाथ शरैः सुतीक्ष्णैरभ्य-
र्दयामास नृपं स वासविः ॥ २४ ॥ अस्त्रैश्च शस्त्रैः सुचिरं नृवीराव-
युध्यतां तौ बलिनां प्रबर्हौ । अथो चकर्तास्य धनुः स पार्थः स
वैष्णवास्त्रं च तदाऽङ्कुशेऽकरोत् ॥ २५ ॥ तस्मिन्नस्त्रे तेन तदा प्रमुक्ते
दधार तद्वासुदेवोऽमितौजाः । तदंसदेशेऽस्य तु वैजयन्ती बभूव माला-
खिललोकभर्तुः ॥ २६ ॥ दृष्ट्वैव तद्धारितमच्युतेन पार्थः किमर्थं
विधृतं त्वयेति । ऊचे तमाहाशु जगन्निवासो मयाऽखिलं धार्यते सर्व-
दैव ॥ २७ ॥ न मादृशोऽन्योऽस्ति कुतः परो मत्सोऽहं चतुर्धा
जगतो हिताय । स्थितोऽस्मि मोक्षप्रलयस्थितीनां सृष्टेश्च कर्ता क्रमशः
स्वमूर्तिभिः । स वासुदेवादिचतुःस्वरूपः स्थितोऽनिरुद्धो हृदि
चाखिलस्य ॥ २८ ॥ स एव च क्रोडतनुः पुराऽहं भूमिप्रियार्थं
नरकाय चादाम् । अस्त्रं मदीयं वरमस्य चादामवध्यतां यावदस्त्रं
सूनोः ॥ २९ ॥ अस्त्रस्य चान्यो न तु कश्चिदस्ति योऽवध्य एतस्य
हतश्च मत्तः । इति स्म तेनैव मया धृतं तदस्त्रं तदेनं जहि चास्त्रहीनम् ॥

॥ ३० ॥ इत्युक्तमाकर्ण्य स केशवेन सम्मन्त्र्य बाणं हृदये मुमोच। प्राग्जोतिषस्यापरमुत्तमं शरं गजेन्द्रकुम्भस्थल आश्वमज्जयत् ॥ ३१ ॥ उभौ च तौ पेततुरद्रिसन्निभौ महेन्द्रवज्राभिहताविवाशु। निहत्य तौ वासविरुग्रपौरुषौ मुमोद साधु स्वजनाभिपूजितः ॥ ३२ ॥

अथाचलं वृषभं(कं) चैव हत्वा कनीयसौ शकुनेस्तं च बाणैः। विव्याध मायामसृजत्स तां च विज्ञानास्त्रेणाशु नाशाय चक्रे ॥ ३३ ॥ स नष्टमायः प्राद्रवत्पापकर्मा ततः पार्थः शरपूगैश्चमूं ताम्। विद्रावयामास तदा गुरोः सुतो माहिष्मतीपतिमाजौ जघान ॥ ३४ ॥ तदा भीमस्तस्य निहत्य वाहान्व्यद्रावयद्धार्तराष्ट्रीं चमूं च। भीमार्जुनाभ्यां हन्यमानां चमूं तां दृष्ट्वा द्रोणः क्षिप्रमपाजहार ॥ ३५ ॥ प्राग्जोतिषे निहते चाग्रहाच्च युधिष्ठिरस्यातिविषण्णरूपः। दुर्योधनोऽश्रावयद्दीनवाक्यान्यत्र द्रोणः सोऽपि नृपं जगाद ॥ ३६ ॥ पार्थे गते श्वो नृपतिं ग्रहीष्ये निहन्मि वा तत्सदृशं तदीयम्। इति प्रतिज्ञां स विधाय भूयः प्रातर्ययौ युद्धमाकाङ्क्षमाणः ॥ ३७ ॥

पद्मव्यूहं व्यूह्य परैरभेद्यं वराद्विष्णोस्तस्य मन्त्रं च जप्त्वा। पार्थांश्च तं प्रापुर्ऋतेऽर्जुनेन संशप्तकैर्युयुधे सोऽपि वीरः ॥ ३८ ॥ पार्था व्यूहं च तं प्राप्य नाशकन्भेत्तुमुद्यताः ॥ ३९ ॥ जानंश्च प्रतिभायोगात्काम्यं नैवाजपन्मनुम्। भीमो युधिष्ठिरस्तत्र तज्ज्ञं सौभद्रमब्रवीत् ॥ भिन्धि व्यूहमिमं तात वयं त्वामनु यामहे ॥ ४० ॥ स एवमुक्तो रथिनां प्रबर्हो विवेश भित्त्वा द्विषतां चमूं ताम्। अन्वेव तं वायुसुतादयश्च विवक्षवः सैन्धवेनैव रुद्धाः ॥ ४१ ॥ वरेण रुद्रस्य निरुध्यमानो जयद्रथेनात्र वृकोदरस्तु। विष्णोरभीष्टं वधमार्जुनेस्तदा विज्ञाय शक्तोऽपि न चात्यवर्तत ॥ ४२ ॥ जयद्रथस्थेन वृषध्वजेन प्रयुध्यमानेषु वृकोदरादिषु। प्रविश्य वीरः स धनञ्जयात्मजो विलोडयामास परोरुसेनाम् ॥ ४३ ॥ स द्रोणदुर्योधनकर्णशल्यद्रौण्यग्रणीभिः कृतवर्म-



युक्तैः। रुद्धश्चचारारिबलेष्वभीतः शिरांसि कृन्तंस्तदनुव्रतानाम् ॥४४॥ स लक्ष्मणं राजसुतं प्रसह्य पितुः समीपेऽनयदाशु मृत्यवे। बृहद्बलं चोत्तमवीर्यकर्मा वरं रथानामयुतं च पत्रिभिः ॥ ४५ ॥ द्रोणादयस्तं हरिकोपभीताः प्रत्यक्षतो हन्तुमशक्नुवन्तः। सम्मन्त्र्य कर्णं पुरतो निधाय चक्रुर्विचापाश्वरथं क्षणेन ॥ ४६ ॥ कर्णो धनुस्तस्य कृपश्च सारथिं द्रोणो हयानाशु विधूय सायकैः। सचर्मखड्गं रथचक्रमस्य प्रणुद्य हस्तस्थितमेव चक्रुः ॥ ४७ ॥ भीतेषु कृष्णादथ तद्बधाय तेष्वाससादाशु गदायुधं गदी। दौःशासनिस्तौ युगपच्च मग्रतुर्गदाभिघातेन मिथोऽतिपौरुषौ ॥ ४८ ॥ तस्मिन्हते शत्रुरवं निशम्य हर्षोद्भवं मारुतिरुग्रविक्रमः। विजित्य सर्वानपि सैन्धवादीन्युधिष्ठिरस्यानुमते न्यषीदत् ॥ ४९ ॥ व्यासस्तदा तानमितात्मवैभवो युधिष्ठिरादीन् ग्लपितानबोधयत्। विजित्य संशप्तकपूगमुग्रो निशागमे वासविराप साच्युतः ॥ ५० ॥ निशम्य पुत्रस्य वधं भृशार्तः प्रतिश्रवं सोऽथ चकार वीरः। जयद्रथस्यैव वधे निशायां स्वप्नेऽनयत्तं गिरिशान्तिकं हरिः ॥ ५१ ॥ स्वयमेवाखिलजगद्रक्षाद्यमितशक्तिमान्। अप्यच्युतो गुरुद्वारा प्रसादकृदहं त्विति ॥५२॥ ज्ञापयन्फल्गुनस्यास्त्रगुरुं गिरिशमञ्जसा। प्रापयित्वैनमेवैतत्प्रसादादस्त्रमुल्बणम् ॥ चक्रे तदर्थमेवास्य चक्रे रक्षां तदात्मिकाम् ॥ ५३ ॥ सान्त्वयित्वा सुभद्रां च गत्वोपप्राव्यमच्युतः। योजयित्वा रथं प्रातः सार्जुनो योद्धुमभ्ययात् ॥५४॥

श्रुत्वा प्रतिज्ञां पुरुहूतसूनोर्दुर्योधनेनार्थितः सिन्धुराजम्। त्राताऽस्म्यहं सर्वथेति प्रतिज्ञां कृत्वा द्रोणो व्यूहमभेद्यमातनोत् ॥ ५५ ॥ स दिव्यमग्र्यं शकटाब्जचक्रं कृत्वा स्वयं व्यूहमुखे व्यवस्थितः। पृष्ठे कर्णद्रौणिकृपैः सशल्यैर्जयद्रथं गुप्तमधात्परैश्च ॥ ५६ ॥ अथार्जुनो दिव्यरथोपरि स्थितः सुरक्षितः केशवेनाव्ययेन। विजित्य दुर्मर्षणमग्रतोऽभ्ययाद्द्रोणं सुधन्वा गुरुमुग्रपौरुषः ॥ ५७ ॥ प्रदक्षिणीकृत्य

तमाश्वगात्ततः कालात्ययं त्वेव विशङ्कमानः । रथं मनोवेगमथानयद्धरिर्यथा शराः पेतुरमुष्य पृष्ठतः ॥ ५८ ॥ विजित्य हार्दिक्यमथाप्रयत्नतः स इन्द्रसूनुः प्रविवेश तद्बलम् । विलोडयामास च सायकोत्तमैर्यथा गजेन्द्रो नलिनीं बलोद्धतः ॥ ५९ ॥ स उच्चकाशेऽतिरथो रथोत्तमे सवासुदेवो हरिणा यथेन्द्रः । चकर्त चोग्रो द्विषतां शिरांसि शरैः शरीरान्तकरैः समन्ततः ॥ ६० ॥ दृढायुमच्युतायुं च हत्वा विन्दानुविन्दकौ । शराभ्यां प्रेषयामास यमाय विजयो युधि ॥६१॥ सुदक्षिणं च काम्भोजं निहत्याम्बष्ठमेव च । श्रुतायुधं नदीजातं वरुणादाससाद ह ॥ ६२ ॥ यस्यादाद्वरुणो दिव्यममोघां महतीं गदाम् । स तु तेन शरैस्तीक्ष्णैरर्पितो विरथं क्षणात् ॥ ६३ ॥ चकार पार्थस्य रथमारुह्यारिधराय ताम् । गदां चिक्षेप सा तस्य वारुणेः शिर एव तु ॥ विभेद शतधा शीर्णमस्तिष्कः सोऽपतद्भुवि ॥ ६४ ॥ अयुध्यन्तं स्वगदया यदि ताडयसि स्वयम् । तया विशीर्णमस्तिष्को भविष्यसि न संशयः ॥ ६५ ॥ अमोघा चान्यथा सेयं गदा तव भविष्यति ॥ ॥ ६६ ॥ इत्यब्रवीत्तं वरुणः पुरा तेन स केशवे । अयुध्यति गदाक्षेपात्तया शीर्णशिरा अभूत् ॥ ६७ ॥ हतेषु वीरेषु निजेषु सङ्घशो विद्रावितेष्वाकुलिते च सैन्ये । दुर्योधनो द्रोणमुपेत्य दीनमुवाच हा पार्थ उपेक्षितस्त्वया ॥ ६८ ॥ इतीरितोऽभेद्यममुष्य वर्म बध्वा महामन्त्रबलात्स विप्रः । जगाद येनैव बलेन पार्थैर्विरुध्यसे तेन हि याहि फल्गुनम् ॥ ६९ ॥ इतीरितो धार्तराष्ट्रः स चापमादाय सौवर्णरथोपरिस्थितः । जगाम पार्थं तमवारयच्च शरैरनेकैरनलप्रकाशैः ॥७०॥ विव्याध पार्थोऽपि तमुग्रवेगैः शरैर्न ते तस्य च वर्मभेदनम् । चक्रुस्ततो वासविर्दिव्यमस्त्रं तद्वर्मभेदाय समाददे रुषा ॥ ७१ ॥ सन्धीयमानं तु गुरोः सुतस्तच्चिच्छेद पार्थोऽथ सुयोधनाश्वान् । हत्वा तलेऽविध्यदथैनमुग्रैर्द्रौणिः शरैः पार्थमवारयद्युधि ॥ ७२ ॥ स द्रौणिकर्णप्रमुखैर्धनञ्जयो युयोध ते चैनमवारयञ्छरैः । बभूव युद्धं तदतुल्यमद्भुतं जयद्रथार्थेऽद्भुतवीर्यकर्मणाम् ॥७३॥ पार्थे प्रविष्टे कुरुसैन्यमध्यं द्रोणोऽविशत्पाण्डवसैन्यमाशु । स तद्रथानीकमुदारवेगैः शरैर्विधूय न्यहनच्च वीरान् ॥ ७४ ॥ स वीरवर्यः स्थविरोऽपि यूनां युवेव मध्ये प्रचचार धन्विनाम् । प्रपातयन्वीरशिरांसि बाणैर्युधिष्ठिरं चासददुग्रवीर्यः ॥७५॥ नृपग्रहेच्छुं तमवेत्य सत्यजिन्न्यवारयद्द्रौपदिराशु वीर्यवान् । निवारितस्तेन शिरः शरेण चकर्त पाञ्चालसुतस्य विप्रः ॥ ७६ ॥ निहत्य तं वीरतमो रणोत्कटं युधिष्ठिरं बाणगणैः समर्दयत् ॥ ७७ ॥ स्वशक्तितस्तेन विधाय सङ्गरं निरायुधो व्यश्वरथः कृतः क्षणात् । स ऊर्ध्वबाहुर्भुवि संस्थितोऽपि ग्रहीतुमाजौ गुरुणाऽभिपन्नः ॥ माद्रीसुतस्यावरजस्य यानमारुह्य वेगादपजग्मिवांस्ततः ॥ ७८ ॥ द्रोणं ततः शैशुपालिः सपुत्रो जारासन्धिः काशिराजः सशैब्यः । समासदन्कैकयाश्चैव पञ्च समर्दयन्बाणगणैश्च सर्वशः ॥ ७९ ॥ स तान्क्रमेणैव निकृत्तकन्धराञ्छरोत्तमैस्तत्र विधाय विप्रः । निनाय लोकं परमर्कमण्डलं व्रजन्ति निर्भिद्य यमूर्ध्वरेतसः ॥ ८० ॥ विधूयमाने गुरुणोरुसैन्ये पृथासुतानां पृतनाः परेषाम् । प्रायो रणे मारुतसूनुनैव हतप्रवीरा मृदिताः पराद्रवन् ॥ ८१ ॥ अलम्बुसो नाम तदैव राक्षसः समासदन्मारुतिमुग्रपौरुषम् । स पीडितस्तेन शरैः सुतेजनैः क्षणाददृश्यत्वमवाप मायया ॥ ॥८२॥ सोऽदृश्यरूपोऽनुचरानपीडयद्भीमस्य तद्वीक्ष्य चुकोप मारुतिः । अस्त्रज्ञतामात्मनि केशवाज्ञया सन्दर्शयन्नागतधर्मसङ्कटः ॥८३॥ त्वाष्ट्रास्त्रमादत्त स काम्यकर्महीनोऽपि भीमस्तत उत्थिताः शराः । ते बाणवर्यास्तददृश्यवेधिनो रक्षो विदार्याविविशुर्धरातलम् ॥ ८४ ॥ तद्धन्यमानं प्रविहाय भीममपाद्रवद्दूरतरं सुभीतम् । ततस्तु भीमो द्विषतां वरूथिनीं विद्रावयामास शरैः सुमुक्तैः ॥ ८५ ॥ तदैव कृष्णातनयाः समेता जघ्नुः शलं संयति सौमदत्तिम् । अलम्बुसं प्राप तदा घटोत्कचः

परस्परं तौ रथिनावयुध्यताम् ॥ ८६ ॥ घटोत्कचस्तं विरथं विधाय खस्थं ख एवाभियुयोध संस्थितः । ततस्तु तं भीमसुतो निगृह्य निपात्य भूमौ प्रददौ प्रहारम् ॥ ८७ ॥ पदा शिरस्येव स पिष्टमस्तको ममार मध्ये पृथिवीपतीनाम् । तस्मिन्हते भैमसेनिः कुरूणां व्यद्रावयद्रथवृन्दं समन्तात् ॥ ८८ ॥ तदाऽऽसदत्कृतवर्मा रथेन सेनां पाण्डूनां शरवर्षं प्रमुञ्चन् । ददौ वरं तस्य हि पूर्वमच्युतः प्रीतः स्तुत्या सर्वजयं मुहूर्ते ॥ ८९ ॥ स तेन पाञ्चालगणान्विजिग्ये यमौ च भीमस्य पुरोऽथ तं च । विव्याध बाणेन स वासुदेववरं विजानन्न तदा समभ्ययात् ॥ ९० ॥ विनैव वृष्णीन्विजये वरो यदमुष्य तेनास्य हयान्स सात्यकिः । निहत्य बाणैरतुदत्स यानमन्यत्समास्थाय ततोऽपजग्मिवान् ॥ ९१ ॥ तदा हरिः पाञ्चजन्यं सुघोषमापूरयामास जयेऽभियुध्यति । कर्णादिभिर्द्रौणिमुखै रिपूणां बलप्रहाणाय परः परेभ्यः ॥ ॥९२॥ स पाञ्चजन्योऽच्युतवक्त्रवायुना भृशं सुपूर्णोदरनिःसृतध्वनिः । जगद्गिरिब्रह्मेशसुरेन्द्रपूर्वकं प्रकम्पयामास युगात्यये यथा ॥ ९३ ॥ गाण्डीवघोषे च तदाभिभूते युधिष्ठिरो भीतभीतस्तदैत्य । शैनेयमूचे परसैन्यमग्रे पार्थे स्वयं युध्यति केशवः स्म ॥ ९४ ॥ न श्रूयते गाण्डिवस्याद्य घोषः संश्रूयते पाञ्चजन्यस्य रावः । तद्याहि जानीहि तमद्य पार्थं यदि स्म जीवत्यसहाय एषः ॥ ९५ ॥ इतीरितः सात्यकिरत्र विप्रान्सम्पूज्य वित्तैः परमाशिषश्च । जयाय तेभ्यः प्रतिगृह्य सेनामुखं ययौ भीमसेनानुयातः ॥ ९६ ॥ भीमस्तु सेनामुखमाशु भित्त्वा प्रावेशयद्युयुधानं चमूं ताम् । स युध्यमानो गुरुणाऽभ्युपेक्षितः सूतं निहत्य द्रावयामास चाश्वान् ॥ ९७ ॥ बलं विवृद्धं च तदाऽस्य सात्यकेर्विप्राशीर्भिः कृष्णवरादपि स्म । बलस्य वृद्धिर्हि पुराऽस्य दत्ता कृष्णेन तुष्टेन दिने हि तस्मिन् ॥ ९८ ॥ ततो विवृद्धोरुबलात्स सात्यकिः संस्थाप्य भीमं प्रययौ रथेन । तं बाणवर्षैः पृतनां समन्ताभिघ्नन्तमाजौ हृदिकात्मजोऽभ्ययात् ॥९९॥ तयोरभूद्युद्धमतीव दारुणं तत्राकरोत्तं विरथं स सात्यकिः । विजित्य तं सात्यकिरुग्रधन्वा ययावतीत्यैव शिरांसि यूनाम् ॥ १०० ॥ कृन्तञ्छरैस्तं जलसन्ध आगमद्रणे गजस्कन्धगतोऽभियोद्धुम् । निवारयन्तं तमसह्यविक्रमं निहत्य बाणैः समरे स सात्यकिः ॥१०१॥ विलोडयामास बलं कुरूणां निघ्नन्गजस्यन्दनवाजिपत्तिनः ॥१०२॥ स पार्वतेयांश्च शिलाभिवर्षिणो निहत्य विद्राव्य च सर्वसैनिकान् । समासदत्केशवफल्गुनौ च बली तमाराथ(शु) च यूपकेतुः ॥ १०३ ॥ तयोरभूद्युद्धमतीवघोरं चिरं विचित्रं च म(हाविभीषणं)हद्विभीष(ण)म् ॥१०४॥ परस्परं तौ तुरगान्निहत्य निपात्य सूतौ धनुषी निकृत्य । समीयतुश्चर्मवरासिधारिणौ विचित्रमार्गानपि दर्शयन्तौ ॥ १०५ ॥ स सौमदत्तिर्भुवि सात्यकिं रणे निपात्य केशेषु च सम्प्रगृह्य । पदाऽस्य वक्षस्यधिरुह्य खड्गमुदग्रहीदाशु शिरोऽपहर्तुम् ॥ ॥ १०६ ॥ तद्वासुदेवस्तु निरीक्ष्य विश्वतश्चक्षुर्जगादाशु धनञ्जयं रणे । त्रायस्व शैनेयमिति स्म सोऽपि भल्लेन चिच्छेद भुजं परस्य ॥ १०७ ॥ स तेन चोत्कृत्तसखड्गबाहुर्विनिन्द्य पार्थं निषसाद भूमौ । प्रायोपविष्टः शरसंस्तरे हरिं ध्यायन्विनिन्दन्नसुरप्रवेशात् ॥ १०८ ॥ गतेऽसुरावेशउतातिभक्त्या ध्यायत्यमुष्मिन्गरुडध्वजं तम् । शैनेय उत्थाय निवार्यमाणः कृष्णार्जुनाद्यैरहरच्छिरोऽस्य ॥१०९॥ तदा स्वकीयं रथमेतदर्थं क्लृप्तं ददौ सात्यकये ससूतम् । कृष्णोऽथ पार्थस्य हयास्तृपार्दितास्तदाऽसृजद्वारुणास्त्रं स पार्थः ॥ ११० ॥ तेनैव तीर्थं परमं चकार तथाश्वशालामपि बाणरूपाम् । ततो विमुच्यात्र हयानपाययद्धरिस्तदा वासविरार्दयत्परान् ॥ १११ ॥ युयोज कृष्णस्तुरगान्रथे पुनर्गतश्रमानुद्धृतसायकान्प्रभुः । प्रचोदिते तेन रथे स्थितः पुनस्तथैव बीभत्सुररीनयोधयत् ॥ ११२ ॥

शिनिप्रवीरे तु गते युधिष्ठिरः पुनश्च चिन्ताकुलितो बभूव ह ।

जगाद भीमं च न गाण्डिवध्वनिः संश्रूयते पाञ्चजन्यस्य रावः ॥११३॥ मया नियुक्तश्च गतः स सात्यकिर्भारं च तस्याधिकमेव मन्ये । तत्पाहि पार्थं युयुधानमेव त्वं भीम गत्वा यदि जीवतस्तौ ॥ ११४ ॥ इतीरितः प्राह वृकोदरस्तं न रक्षितं वासुदेवेन पार्थम् । ब्रह्मेशानावपि जेतुं समर्थौ किं द्रौणिकर्णादिधनुर्भृतोऽत्र ॥ ११५ ॥ अतो भयं नास्ति धनञ्जयस्य न सात्यकेश्चापि हरेः प्रसादात् । रक्ष्यस्त्वमेवात्र मतो मयाद्य द्रोणो ह्ययं त्वां यतते ग्रहीतुम् ॥ ११६ ॥ इतीरितः प्राह युधिष्ठिरस्तं न जीवमाने युधि मां घटोत्कचे । धृष्टद्युम्ने चास्त्रविदां वरिष्ठे द्रोणो वशं नेतुमिह प्रभुः क्वचित् ॥ ११७ ॥ यदि प्रियं कर्तुमिहेच्छसि त्वं मम प्रयाह्याशु च पार्थसात्यकी । रक्षस्व सञ्ज्ञामपि सिंहनादात्कुरुष्व मे पार्थशैनेयदृष्टौ ॥११८॥ तथा हते चैव जयद्रथे मे कुरुष्व सञ्ज्ञामिति तेन चोक्तः । भीमस्तु हैडिम्बममुष्य रक्षणे व्याधाच्च सेनापतिमेव सम्यक् ॥ ११९ ॥ स चाह सेनापतिरत्र भीमं प्रयाहि तौ यत्र च केशवार्जुनौ । न जीवमाने मयि धर्षितुं क्षमो द्रोणो नृपं मृत्युरहं च तस्य ॥ १२० ॥ इति ब्रुवाणं(णे) प्रणिधाय भीमः पुनःपुनस्तं नृपतिं गदाधरः । ययौ परानीकमधिज्यधन्वा निरन्तरं प्रवमन्बाणपूगान् ॥ ॥ १२१ ॥ न्यवारयत्तं शरवर्षधारो द्रोणो वचश्चेदमुवाच भीमम् । शिष्यस्नेहाद्वासविः सात्यकिश्च मया प्रमुक्तौ भृशमानतौ मयि ॥१२२॥ स्वीया प्रतिज्ञाऽपि हि सैन्धवस्य गुप्तौ मया पार्थकृते विसृष्टा । दास्ये न ते मार्गमहं कथञ्चित्पश्यास्त्रवीर्यं मम दिव्यमद्भुतम् ॥ १२३ ॥ इत्युक्तवाक्यः स गदां समाददे चिक्षेप तां द्रोणरथाय भीमः । उवाच चाहं पितृवन्मानये त्वां सदामृदुस्त्वां प्रति नान्यथा क्वचित् ॥ १२४ ॥ अमार्दवे पश्य च यादृशं बलं ममेति तस्याशु विचूर्णितो रथः । गदाभिघातेन वृकोदरस्य सस्तूतवाजिध्वजयन्त्रकूबरः ॥ १२५ ॥ द्रोणो गदामापतन्तीं निरीक्ष्य त्ववप्लुतो लाघवतो धरातले । तदैव दुर्योधनयापि



रथं परं समास्थाय शरान्ववर्ष ह ॥१२६॥ शरैस्तदीयैः परमास्त्रमन्त्रितैः प्रवृष्यमाणो जगदीरणात्मजः । शिरो निधायाशु पुरो वृषो यथा तमभ्ययादेव रथादवप्लुतः ॥ १२७ ॥ मनोजवादेव तमाप्य भीमो रथं गृहीत्वाम्बर आक्षिपत्क्षणात् । शक्तोऽप्यहं त्वां न निहन्मि गौरवा-दित्येव सं(सु)ज्ञापयितुं तदस्य ॥ १२८ ॥ सवाजिसूतः सरथः क्षितौ पतन्विचूर्णितोऽस्माद्गुरुरप्यवप्लुतः । तदा विशोकस्य रथं समानयत्तमा-रुह्यद्भीम उदारविक्रमः ॥ १२९ ॥ द्रोणोऽपि दुर्योधनदत्तमन्यं रथं समास्थाय युधिष्ठिरं ययौ । ग्रहीतुकामं नृपतिं प्रयान्तं न्यवारयत्संयति वाहिनीपतिः ॥ १३० ॥ विद्रावितां द्रोणशरैः स्वसेनां संस्थाप्य भूयो द्रुपदात्मजः शरैः । द्रोणं निवार्यैव चमूं परेषां विद्रावयामास च तस्य पश्यतः ॥१३१॥ तयोरभूद्युद्धमतीवरौद्रं जयैषिणोः पाण्डवधार्तराष्ट्रयोः । अत्यद्भुतं सन्ततबाणवर्षमनारतं सुचिरं निर्विशेषम् ॥ १३२ ॥ ततः प्रायाद्भीमसेनोऽमितौजा मृद्नञ्छरैः कौरवराजसेनाम् । विन्दानुविन्द-प्रमुखा धार्तराष्ट्रास्तमासेदुर्द्वादश वीरमुख्याः ॥ १३३ ॥ विद्धः शरैस्तै-र्बहुभिर्वृकोदरः शिरांसि तेषां युगपच्चकर्त । हतेषु तेषु प्रवरेषु धन्विनां सत्यव्रतः पुरुमित्रो जयश्च ॥ १३४ ॥ वृन्दारकः पौरवश्चेत्यमात्याः समासेदुर्धार्तराष्ट्रस्य भीमम् ॥ १३५ ॥ स तैः पृषत्कैरवकीर्यमाणः सितान्विपाठान्युगपत्समाददे । जहार तैरेव शिरांसि तेषां हतेषु तेष्वेव परे प्रदुद्रुवुः ॥ १३६ ॥ स सिंहवत्क्षुद्रमृगान्समन्ततो विद्राव्य शत्रू-न्हृदिकात्मजं रणे । अभ्यागमत्तेन निवारितः शरैः क्षणेन चक्रे विरथाश्वसूतम् ॥ १३७ ॥ स गाढविद्धस्तु वृकोदरेण रणं विसृज्याप-ययौ क्षणेन । विजित्य हार्दिक्यमथाशु भीमो विद्रावयामास वरूथिनीं ताम् । सम्प्रेषयन्सर्वनराश्वकुञ्जरान्यमाय यातो हरिपार्थपार्श्वम् ॥१३८॥ दृष्ट्वैव कृष्णविजयौ परमप्रहृष्टस्ताभ्यां निरीक्षित उत प्रतिभाषितश्च । संज्ञां नृपस्य स ददावपि सिंहनादाच्छ्रुत्वा परां मुदमवाप स चाग्रज-

बुद्धिः ॥१३९॥ भीमस्य नानदत एव महास्वनेन विण्मूत्रशोणितमथो मृतिमापुरेके । भीतेषु सर्वनृपतिष्वमुमाप तूर्णं कर्णो विकर्णमुखरा अपि धार्तराष्ट्राः ॥ १४० ॥ हत्वा विकर्णमुत तत्र च चित्रसेनं सञ्चूर्णितं प्रविदधे रथमर्कसूनोः । घोरैः शरैः पुनरपि स्म स मृद्यमानः कर्णोऽपयानमकरोद्द्रुतमेव भीमात् ॥ १४१ ॥ आश्वास्य चैव सुचिरं पुनरेव भीमं युद्धाय याति धृतराष्ट्रसुतैस्तथान्यैः । तांश्चैव तत्र विनिहत्य तथैव कर्णो व्यश्वायुधः कृत उतापययौ क्षणेन ॥१४२॥ विकर्णचित्रसेनाद्या एवं वीरतमाः सुताः । कर्णस्य पश्यतो भीमबाणकृत्तशिरोधराः ॥१४३॥ निपेतुर्धृतराष्ट्रस्य रथेभ्यः पृथिवीतले । त्रयोविंशतिरेवात्र कर्णसाहाय्यकारिणः ॥ १४४ ॥ एकविंशतिवारं च व्यश्वसूतरथध्वजः । गाढमभ्यर्दितस्तीक्ष्णैः शरैर्भीमेन संयुगे ॥ १४५ ॥ प्राणसंशयमापन्नः सर्वलोकस्य पश्यतः । रणं त्यक्त्वा प्रदुद्राव रुदन्दुःखात्पुनः पुनः ॥ ॥१४६॥ द्वाविंशतिमयुद्धे तु रामदत्तं सुभास्वरम् । अभेद्यं रथमारुह्य विजयं धनुरेव च ॥ १४७ ॥ तद्दत्तमेव सङ्गृह्य तूणौ चाक्षयसायकौ । आससाद रणे भीमं कर्णो वैकर्तनो रुषा ॥ १४८ ॥ सुघोर आसीत्तु तयोर्विमर्दो भीमस्य कर्णस्य च दीर्घकालम् । आकाशमाच्छादयतोः शरौघैः परस्परं चैव सुरक्तनेत्रयोः ॥ १४९ ॥ ततो भीमो महाबाहुः सहजाभ्यां च संयुतम् । त्वां तु कुण्डलवर्मभ्यां शक्नुयां हन्तुमञ्जसा ॥ ॥ १५० ॥ इति ज्ञापयितुं तस्य कुण्डले कवचं तथा । शरैरुत्कृत्य समरे पातयामास भूतले ॥ १५१ ॥ एवं तान्यपकृष्याहं हन्यां त्वामिति वेदयन् । पुनश्च बहुभिस्तीक्ष्णैः शरैरेनं समर्दयत् ॥१५२॥ ततस्तु भीमस्य बभूव बुद्धिरस्पर्धिनः सर्वजयो हि दत्तः । अमुष्य रामेण न च स्पृधाऽयं कर्णो मया युध्यति कृच्छ्रगो ह्ययम् ॥ १५३ ॥ तथापि मे भगवानत्यनुग्रहाज्जयं ददात्यात्मवचो विहाय । मया तु मान्यं वचनं हरेः सदा तस्माद्दास्ये विवरं त्वद्य शत्रोः ॥ १५४ ॥ ए



स्मृत्वा तेन रन्ध्रे प्रदत्ते कर्णोऽस्त्रवीर्येण धनुर्न्यकृन्तत् । रश्मीन्हयानां च ततो रथं स तत्याज नैजं बलमेव वेदयन् ॥१५५॥ न मे रथाद्यैर्धनुषा वापि कार्यमित्येव सञ्ज्ञापयितुं वृकोदरः । खमुत्पपातोत्तमवीर्यतेजा रथं च कर्णस्य समास्थितः क्षणात् ॥१५६॥ भीतस्तु कर्णो रथकूबरे तदा व्यलीयताधः स वृकोदरो रथात् । अवप्लुतो ज्ञापयितुं स्वशक्तिं निरायुधत्वेऽप्यरिनिग्रहादौ ॥१५७॥ नैच्छद्गृहीतुं विनिहन्तुमेव वा रथं धनुर्वाऽस्य रणेऽपहर्तुम् । द्रोणस्य यद्वत्पूर्वमतीवशक्तोऽप्यमानयद्रामवचोऽस्य भक्त्या ॥१५८॥ सत्यां कर्तुं वासवेश्च प्रतिज्ञां सम्मानयन्वैष्णवत्वाच्च कर्णम् । दातुं रन्ध्रं सूर्यजस्य प्रयातः शरक्षेपार्धं दूरमतिष्ठदत्र ॥ १५९ ॥ ततः कर्णो दूरगतं वृकोदरं सम्मानयन्तं रामवाक्यं विजानन् । शरैरविध्यत्स च तानवारयद्गजैर्मृतैस्तांश्च चकर्त कर्णः ॥ १६० ॥ व्यसून्गजान्प्रक्षिपन्तं समेत्य संस्पृश्य चापेन वचश्च दुष्टम् । संश्रावयामास सुयोधनस्य प्रीत्यै प्रजानन्नपि तस्य वीर्यम् ॥ ॥ १६१ ॥ संश्रावयन्तं वचनानि रूक्षाण्यपाहनद्बाणगणैस्तदाऽर्जुनः । स वर्महीनः पार्थबाणाभितप्तो व्यपागमद्भीम आपात्मयानम् ॥ १६२ ॥ कर्णो भीमे वासवीं नैव शक्तिं विमोक्तुमैच्छन्नैव बीभत्सुतोऽन्यान् । हन्यामिति प्राह यतः स कुन्त्यै यद्यप्यवध्यः स तया पि भीमः ॥१६३॥ नारायणास्त्रं शिरसि प्रपातितं न यस्य लोमाप्यदहच्छिरःस्थितम् । किं तस्य शक्तिः प्रकरोति वासवी तथाऽन्यदप्यस्त्रशस्त्रं महच्च ॥ १६४ ॥ भीमः कर्णरथं प्राप्तः शक्तिं नादातुमैच्छत । अभिप्रायं केशवस्य जानन्हैडिम्बमृत्यवे ॥ १६५ ॥

ततः कर्णोऽन्यमास्थाय रथमर्जुनमभ्ययात् । दिव्यं रथं धनुश्चैव कृष्णबुद्ध्यार्जुनो हरेत् ॥ १६६ ॥ इति भीतस्तु तां शक्तिमादायार्जुनमृत्यवे । युद्धायायाद्रथं चापं शक्तिं चैकत्र नाकरोत् ॥१६७॥ एकं हतं चेदन्यत्स्यादिति मत्वा भयाकुलः । बिभेति सर्वदा नीतेः कृष्णस्या-

मिततेजसः ॥ १६८ ॥ निश्चितो मरणायैव मृतिकाले तु तं रथम् ।
आरुह्यागाद्धि पूर्वं तु न कालं मन्यते मृतेः ॥ १६९ ॥ शक्तिं तु
तद्रथगतां प्रसमीक्ष्य कृष्णः संस्थाप्य पार्थमपि सात्यकिमेव योद्धुम् ।
दत्वा स्वकीयरथमेव विरोचनस्य पुत्रेण सोऽदिशदमुष्य बलं प्रदाय ॥
॥ १७० ॥ शिष्यं त्वशक्तमिह मे प्रतियोधनाय पार्थो ह्यदादिति स
सात्यकिमीक्षमाणः । संस्पर्धयैव युयुधे विरथं चकार तेनैव सात्यकि-
रमुं हरियानसंस्थः ॥ १७१ ॥ न केशवरथे कश्चित्स्थितो याति
पराजयम् । अतश्च सात्यकिर्नापि कर्णेनात्र पराजयम् ॥१७२॥ शस्त्र-
सङ्ग्रहकाले तु कुमाराणां व्रतं भवेत् । इत्युक्तं जामदग्न्येन धनुर्विद्या
पुरा कृता ॥ १७३ ॥ तच्छत्रुवधरूपं च पूर्वासिद्धं च गूहितम् ।
अविरुद्धं च धर्मस्य कार्यं रामस्य तुष्टिदम् ॥ अनुपद्रवाय लोकस्येत्यतो
भीमो व्रतं त्विदम् ॥ १७४ ॥ चकार तूबरेत्युक्तो हन्यामिति रहः
प्रभुः ॥१७५॥ अनुपद्रवाय लोकस्य सुव्यक्तश्मश्रुमण्डलः । सुश्मश्रुं
मां न कश्चिद्धि तथा ब्रूयादिति स्फुटम् ॥ तदर्जुनो विजानाति
स्नेहाद्भीमोदितं रहः ॥ १७६ ॥ अर्जुनस्यापि गाण्डीवं देहीत्युक्तो
निहन्मि तम् ॥१७७॥ गाण्डीवस्यागमं पूर्वं जानात्येव हि नारदात् ।
इति तच्च विजानाति भीम एको न चापरः ॥ १७८ ॥ प्रतिज्ञां
भीमसेनस्य ब्रुवतः फल्गुने रहः । दुर्योधनस्तु शुश्राव तां च कर्णाय
सोऽब्रवीत् ॥ १७९ ॥ अतूबरोऽपि तेनासौ तस्मात्तूबर इत्यलम् ।
उक्तः प्रकोपनायैव तस्मादर्जुनमब्रवीत् ॥ १८० ॥ जानासि मत्प्रतिज्ञां
त्वं त्वत्प्रतिज्ञामहं तथा । अतो हन्तव्यतां प्राप्तो मम वैकर्तनोऽत्र हि ॥
॥ १८१ ॥ प्रतिज्ञातो वधश्चास्य त्वयाऽपि मदनुज्ञया । अतस्त्वया
मयैवायं हन्तव्यः सूतनन्दनः ॥ १८२ ॥ इत्युक्तो वासविः प्राह
हन्तव्योऽयं मयैव हि । त्वदीयोऽहं यतस्तेन मत्कृतं त्वत्कृतं भवेत् ॥
॥१८३॥ न त्वत्कृतं मत्कृतं स्याद्गुरुर्मम यतो भवान् । अतो मयैव



हन्तव्य इत्युक्त्वा कर्णमब्रवीत् ॥१८४॥ रूक्षावचः श्रावितोऽयं भीमः
कृष्णस्य शृण्वतः । यच्चाभिमन्युर्युष्माभिरेकः सम्भूय पातितः ॥१८५॥
अतस्त्वां निहनिष्यामि त्वत्पुत्रं च तवाग्रतः । इत्युक्तोऽन्यं रथं प्राप्य
कर्ण आवीज्जयद्रथम् ॥ १८६ ॥ द्रौणिकर्णाभिगुप्तं तं नाशकद्धन्तु-
मर्जुनः । तत्र वेगं परं चक्रे द्रौणिः पार्थनिवारणे ॥ १८७ ॥ न
चैनमशकत्तर्तुं यत्नवानपि फल्गुनः । तयोरासीच्चिरं युद्धं चित्रं लघु
च सुष्ठु च ॥ १८८ ॥ तद्दृष्ट्वा भगवान्कृष्णो लोहितायति भास्करे ।
अजिते द्रोणतनये त्वहते च जयद्रथे ॥ अर्जुनस्य जयाकाङ्क्षी ससर्ज
तम ऊर्जितम् ॥ १८९ ॥ तमोव्याप्ते गगने सूर्यमस्तं गतं मत्वा
द्रोणपूर्वाः समस्ताः । विशश्रमुः सैन्धवश्चार्जुनस्य हतप्रतिज्ञस्य मुखं
समैक्षत ॥१९०॥ तदा हरेराज्ञया शक्रसूनुश्चकर्त बाणेन जयद्रथस्य ।
वर्हिं विविक्षन्निव दर्शितः शिरस्तदा वचः प्राह जनार्दनस्तम् ॥१९१॥
नैतच्छिरः पातय भूतले त्वमितीरितः पाशुपतास्त्रतेजसा । दधार बाणै-
रनुपुङ्खपुङ्खैः पुनस्तमूचे गरुडध्वजो वचः ॥ १९२ ॥ इदं पितुस्तस्य
करे निपात्यतां वरोऽस्य दत्तो हि पुराऽमुनाऽयम् । शिरो निकृत्तं
भुवि पातयेद्यस्तवास्य भूयाच्च शिरः सहस्रधा ॥ १९३ ॥ इति स्म
सन्ध्योऽस्य पिताऽपि तेनेत्युदीरिते तस्य सन्ध्याक्रियस्य । अङ्के व्यधा-
त्तच्छिर आशु वासविः ससम्भ्रमात्तद्भुवि च न्यपातयत् ॥ १९४ ॥
ततोऽभवत्तस्य शिरः सहस्रधा हरिश्च चक्रे तमसो लयं पुनः । तदैव
सर्वे सकलैश्च दृष्टे हाहेति वादः सुमहानथासीत् ॥ १९५ ॥ भीमस्तदा
शल्यदुर्योधनादीन्कृपं च जित्वा व्यनदत्सुभैरवम् । कुर्वन्सहायं फल्गुन-
स्यैव तुष्टो बभूव शैनेययुतो हते रिपौ ॥ १९६ ॥ अपूरयत्पाञ्चजन्यं
च कृष्णो मुदा तदा देवदत्तं च पार्थः । भीमस्य नादं सह पाञ्चजन्य-
घोषं श्रुत्वा निहतं सिन्धुराजम् ॥ ज्ञात्वा राजा धर्मसुतो मुमोद
दुर्योधनश्चास सुदुःखितस्तदा ॥ १९७ ॥

ततो द्रौणिमुखां सेनां सर्वां भीमोऽभ्यवर्तत । पार्थः कर्णमुखां
शिष्टां ततोऽभज्यत तद्बलम् ॥१९८॥ शीर्णां सेनां प्रविविशुर्धृष्टद्युम्न-
पुरोगमाः । ततस्तं देशमापुस्ते यत्र भीमधनञ्जयौ ॥ १९९ ॥ तत
एकीकृताः सर्वे पाण्डवाः सहसोमकाः । परान्विद्रावयामासुस्ते भीताः
प्राद्रवन्दिशः ॥ २०० ॥ विद्राव्यमाणं सैन्यं तद्दृष्ट्वा दुर्योधनो नृपः ।
जयद्रथवधाच्चैव कुपितोऽभ्यद्रवत्परान् ॥ २०१ ॥ स भीमसेनं च
धनञ्जयं च युधिष्ठिरं माद्रवतीसुतौ च । धृष्टद्युम्नं सात्यकिं द्रौपदेया-
न्सर्वानेकः शरवर्षैर्ववर्ष ॥ २०२ ॥ तं विव्यधुस्ते बहुभिः शिलीमुखैः
स ताननादृत्य चकर्त बाणैः । धनूंषि चित्राणि महारथानां चकार
सङ्ख्ये विरथौ यमौ च ॥ २०३ ॥ आदाय चापानि पराणि तेऽपि
दुर्योधनं ववृषुः सायकौघैः । अचिन्तयित्वैव शरान्स एको न्यवारय-
त्तानखिलांश्च बाणैः ॥ २०४ ॥ तं गाहमानं द्विषतां बहूनां मध्ये
द्रोणद्रौणिकृपप्रधानाः । दृष्ट्वा सर्वे जुगुपुश्चात्तचापा अनारतं बाणगणा-
न्सृजन्तः ॥ २०५ ॥ सुयोधनः कर्णमाह जहि भीममिमं युधि ।
स आह नैष शक्यो हि जेतुं देवैः सवासवैः ॥ २०६ ॥ दैवाज्जीवाम्यहं
राजन्युध्यंस्तेनातिपीडितः । अतो घटामहे शक्त्या जयो दैवसमाहितः ॥
॥ २०७ ॥ दुर्योधनो द्रोणमाह सैन्धवस्त्वदुपेक्षया । पार्थेन निहतो
भीमसात्यकिभ्यां च मे बलम् ॥ २०८ ॥ प्रतिज्ञा च परित्यक्ता
पाण्डवस्नेहतस्त्वया । इत्युक्तः कुपितो द्रोणः प्रतिज्ञामकरोत्ततः ॥२०९॥
इतः परं नैव रणाद्रात्रावहनि वा क्वचित् । गच्छेयं नैव मोक्ष्यामि
वर्म बद्धं कथञ्चन ॥ २१० ॥ मत्पुत्रश्च त्वया वाच्यः पाञ्चालान्वि
शेषय । सदौहित्रानिति प्रोक्त्वा विजगाहे निशागमे ॥ २११ ॥ चमूं
परेषामभ्यागाद्धृष्टद्युम्नस्तमाशु च । द्रौणिदुर्योधनौ तत्र विरथीकृत्य
मारुतिः ॥ द्रावयामास तत्सैन्यं पश्यतां सर्वभूभृताम् ॥ २१२ ॥
अक्षौहिण्यस्तु सप्तैव सेनयोरुभयोरपि । हतास्तासां च भीमेन तिस्रो



द्वे फल्गुनेन च ॥२१३॥ सौभद्रसात्यकिमुखैस्तन्मध्ये षोडशांशकः ।
हैडिम्बपार्षतमुखैस्त्रयाच्च दशमांशकः ॥ २१४ ॥ भीष्मद्रोणद्रौणिभिश्च
द्वे समं निहते तदा । तदन्यैर्मिलितैः सर्वैस्तच्चतुर्थांश्च एव च ॥२१५॥
ततो रात्रौ पञ्चभिश्च पार्थाः षड्भिश्च कौरवाः । अक्षौहिणीभिः
संव्यूह्य युद्धं चक्रुः सुदारुणम् ॥ २१६ ॥ भीमं सेनां द्रावयन्तं पुनः
कर्णः समासदत् । सकर्णं पुरतो भीमो दुष्कर्णं कर्णमेव च ॥ २१७ ॥
दुर्योधनस्यावरजौ निष्पिपेष पदा क्षणात् । रथाश्वध्वजसूतैश्च सहितौ न
व्यपश्यताम् ॥२१८॥ निरायुधोऽहमिति मां त्वमात्थ परुषं वचः ॥
॥ २१९ ॥ निरायुधः पदैवाहं त्वां हन्तुमशकं तदा । इति कर्णस्य
तौ भीमः सञ्ज्ञया ज्ञापयन्भुवि ॥ पदा पिपेष कालिङ्गं मुष्टिनैव जघान
ह ॥ २२० ॥ मुष्टिना त्वद्वधायाहं समर्थ इति किं वदे ॥ २२१ ॥
तस्मान्मया रक्षितस्त्वमिति ज्ञापयितुं प्रभुः । साश्वसूतध्वजरथः कलिङ्गो
मुष्टिचूर्णितः ॥ २२२ ॥ केतुमांश्च पिता तस्य शक्रदेवः श्रुतायुधः ।
अक्षौहिण्या सेनया च सह भीमेन पातिताः ॥ २२३ ॥ खड्गयुद्धे पुरा
भीष्मे सैनापत्यं प्रकुर्वति । कर्णानुजान्ध्रुवाद्यांश्च बहूञ्जघ्ने स वै निशि ॥
॥ २२४ ॥ सञ्ज्ञां भीमकृतां ज्ञात्वा शक्तिं चिक्षेप चापराम् । कर्णः
शक्तिर्मया दिव्या न मुक्ता तेन जीवसि ॥ २२५ ॥ इति ज्ञापयितुं
तां तु ज्ञात्वा भीमः क्षणात्तदा । खमुत्पत्य गृहीत्वा च कर्णे चिक्षेप
सत्वरः ॥२२६॥ यदि त्वया तदा मुक्ता शक्तिस्त्वां सा हनिष्यति ।
इति ज्ञापयितुं सा च कर्णरक्षणकाङ्क्षिणा ॥ २२७ ॥ मुक्ता दक्षभुजे
साऽथ विदार्य धरणीं तथा । भित्त्वा विवेश कर्णस्य दर्शयन्ती
निदर्शनम् ॥ २२८ ॥ ततो भीमः पुनस्तं तु रथमास्थाय चापभृत् ।
कर्णस्य पुरतः शत्रून्द्रावयामास सर्वतः ॥२२९॥ तं कर्णो वारयामास
शरैः सन्नतपर्वभिः । भीमः कर्णरथायैव गदां चिक्षेप वेगतः ॥२३०॥
स तद्गदाभिघाताय स्थूणाकर्णास्त्रमासृजत् । तेनास्त्रेण प्रतिहता सा

गदा भीममात्रजत् ॥ २३१ ॥ भीमो गदां समादाय कर्णस्य रथमारुहत् । तया सञ्चूर्णयामास कर्णस्य रथकूबरम् ॥ २३२ ॥ एवं त्वच्चूर्णनि शक्तो मत्कामात्त्वं हि जीवसि । एवं निदर्शयित्वैव पुनः स्वरथमात्रजत् ॥ २३३ ॥ पुनः कर्णपुरः सेनां जघान बहुशो रणे । कर्णस्तु तं परित्यज्य सहदेवमुपाद्रवत् ॥ २३४ ॥ स तु तं विरथीकृत्य धनुः कण्ठेऽवसज्जय च । कुत्सयामास बहुशः स तु निर्वेदमागमत् ॥ २३५ ॥ न हन्तुमैच्छत्तं कर्णः पृथायै स्वं वचः स्मरन् । तं विसृज्य रणे कर्णो जघ्ने पार्थवरूथिनीं ॥ ॥ २३६ ॥

ततो द्रौणिर्विविधैर्बाणसंघैर्जघान पार्थस्य चमूं समन्ततः । सा हन्यमाना रणकोविदेन नाशं(न शं) लेभे मृत्युनार्ता प्रजेव ॥२३७॥ दृष्ट्वा सेनां द्रौणिबलाभिभूतां तमाह्वयामास घटोत्कचो युधि । द्रौणिस्तमाहालमलं न वत्स पुत्रस्तातं योधयस्वाद्य मां त्वम् ॥ २३८ ॥ इत्युक्त ऊचे न पिता मम त्वं सखा पितुर्यद्यपि शत्रुसंश्रयात् । अरिश्च मेऽसीति तमाह यद्यरिं मां मन्यसे तद्वदहं करोमि ते ॥ २३९ ॥ इत्यूचिवाञ्छक्रधनुः प्रकाशं विष्फार्य चापं प्रकिरञ्छरौघान् । अभ्यागमद्राक्षसमुग्रयेगः स्वसेनया सोऽपि तमभ्यवर्तत ॥ २४० ॥ स रक्षसां लक्षसमावृतो बली नृभिश्च वीरैर्बहुभिः सुशिक्षितैः । अक्षौहिणीमात्रबलेन राक्षसः संक्षोभयामास गुरोः सुतं शरैः ॥ २४१ ॥ स तेन बाणैर्बहुभिः सुपीडितो विभिन्नगात्रः क्षतजाभिप्लुताङ्गः । व्यावृत्य नेत्रे कुपितो महद्धनुर्विष्फार्य बाणै रजनीं चकार ॥ २४२ ॥ सोऽक्षौहिणीं तां क्षणमात्रतः क्षरन्महाशरांस्तानपि राक्षसान्क्षयम् । निनाय पुत्रं च घटोत्कचस्य निष्ठ्यं पुरा योऽञ्जनवर्मनामकः ॥ २४३ ॥ निरीक्ष्य सेनां स्वसुतं च पातितं घटोत्कचो द्रोणसुतं शरेण । विव्याध गाढं स सुविह्वलो ध्वजं समाश्रितश्चाशु ससंज्ञकोऽभवत् ॥ २४४ ॥ उत्थाय



बाणं यमदण्डकल्पं सन्धाय चापे प्रविकृष्य राक्षसे । मुमोच तेनाभिहतः पपात विनष्टसंज्ञः स्वरथे घटोत्कचः ॥ २४५ ॥ विमूर्च्छितं सारथिरस्य दूरं निनाय युद्धाज्जगतोऽभिपश्यतः । द्रौणिश्च सेनां निशितैः शरोत्तमैर्व्यद्रावयत्पाण्डवसोमकानाम् ॥ २४६ ॥ संज्ञामवाप्याथ घटोत्कचोऽपि क्रुद्धोऽविशत्कौरवसैन्यमाशु । विद्रावयामास च बाणवर्षैः प्रकम्पयामास महारथांस्तदा ॥ २४७ ॥ तदैव पार्थं प्रति योद्धुमागतं वैकर्तनं वीक्ष्य जगत्पतिर्हरिः । घटोत्कचं प्राहिणोच्छक्तिमुग्रां तस्मिन्मोक्तुं पार्थरक्षार्थमेव ॥ २४८ ॥ स कर्णमाहूय युयोध तेन तस्यानु दुर्योधनपूर्वकाश्च ये । द्रोणेन चैतान्समरे स एको निवारयामास ममर्द चाधिकम् ॥ २४९ ॥ ते बाध्यमाना बहुशो बलीयसा कर्णं पुरोधाय तमभ्ययोधयन् । न विव्यथे तत्र रणे स कर्णः स्ववीर्यमास्थाय महास्त्रवेत्ता ॥ २५० ॥ निवारयामास गुरोः सुतं तदा भीमस्त्रिगर्ताञ्छतमन्युनन्दनः । अलम्बको नाम तदैव राक्षसः समासदद्भीमसुतं निहन्तुम् ॥ २५१ ॥ युद्ध्वा प्रगृह्यैनमथो निपात्य घटोत्कचो भूमितलेऽसिनास्य । उत्कृत्य शीर्षं तु सुयोधनेऽक्षिपद्विषेदुरत्राखिलभूमिपालाः ॥ २५२ ॥ अलायुधोऽथागमदुग्रवीर्यो नराशनस्तं स घटोत्कचोऽभ्ययात् । युद्ध्वा मुहूर्तं स तु तेन भूमौ निपात्य तं यज्ञपशुं चकार ॥ २५३ ॥ अथास्य शिर उत्कृत्य क्रोधाद्दुर्योधनोरसि । चिक्षेप तेन सम्भ्रान्ताः सर्वे दुर्योधनादयः ॥ २५४ ॥ घटोत्कचबलख्यात्यै समर्थेनापि यो रणे । न हतो भीमसेनेन हतेऽस्मिन्भैमसेनिना । सर्वे सञ्चोदयामासुः कर्णं शक्तिविमोक्षणे ॥२५५॥ अस्मिन्हते हतं सर्वं किं नः पार्थः करिष्यति । एवं सञ्चोद्यमानः स धार्तराष्ट्रैः पुनःपुनः । हैडिम्बेनार्द्यमानैश्च स्वयं च भृशपीडितः ॥ ॥ २५६ ॥ आदत्त शक्तिं विपुलां पाकशासनसम्मताम् ॥ २५७ ॥ तामम्बरस्थाय घटोत्कचाय शैलोपमायातुलविक्रमाय । चिक्षेप मृत्यो

रसनोपमामलं प्रकाशयन्तीं प्रदिशो दिशश्च ॥ २५८ ॥ निर्भिन्नवक्षाः
स तया पपात व्यचूर्णयच्छत्रुबलं हतोऽपि । तस्मिन्हते जहृषुर्धार्तराष्ट्रा
उच्चुक्रुशुर्दुधुवुश्चाम्बराणि ॥ २५९ ॥

तदा ननर्त केशवः समाश्लिष्य फल्गुनम् । ननाद शङ्खमाध-
मज्जहास चोरुनिःस्वनः ॥ २६० ॥ तमपृच्छद्गुडाकेशः किमेतदिति
दुर्मनाः । हते सुतेऽग्रजेऽस्माकं वीरे किं नन्दसि प्रभो ॥ २६१ ॥
तमाह भगवान्कृष्णो दिष्ट्या जीवसि फल्गुन । त्वदर्थं निहिता शक्ति-
र्विमुक्ताऽस्मिन्हि राक्षसे ॥ २६२ ॥ ततो युधिष्ठिरो दुःखादमर्षा-
च्चाभ्यवर्तत । कर्णं प्रति तमाहाथ कृष्णद्वैपायनः प्रभुः ॥ २६३ ॥
ययार्जुनो निहन्तव्यस्तयाऽसौ राक्षसो हतः । तन्माशुचस्त्वं राजेन्द्र
दिष्ट्या जीवति फल्गुनः । इत्युक्त्वा प्रययौ व्यासस्ततो युद्धमवर्तत ॥
॥ २६४ ॥ भीमार्जुनाभ्यामभिहन्यमाने बले कुरूणामितरैश्च पाण्डवैः ।
प्रदीपहस्ता अथ योधकाश्च सर्वेऽपि निद्रावशगा बभूवुः ॥ २६५ ॥
दृष्ट्वैव तानाह धनञ्जयस्तदा स्वप्स्यन्तु यावच्छशिनः प्रकाशः । इतीरिता
आशिषः फल्गुनाय प्रयुज्य सर्वे सुषुपुर्यथास्थिताः ॥ २६६ ॥

पुनश्च चन्द्रेऽभ्युदिते युधे ते समाययुः शस्त्रमहास्त्रवर्षाः ।
तत्रायातः सात्यकिं सोमदत्तो भूरिश्च ताभ्यां युयुधे स एकः ॥२६७॥
हतौ च तौ पेततुस्तेन भूमौ बाह्लीक एनं समरे त्वयोधयत् । स
सात्यकिं विरथीकृत्य बाणं वधाय तस्याशु मुमोच वीरः ॥ २६८ ॥
चिच्छेद तं भीमसेनस्त्रिधैव तस्मै शतघ्नीं प्रजहार बाह्लिकः । तया हतो
विह्वलितो वृकोदरो जघान तं गदया सोऽपतच्च ॥ २६९ ॥ बाह्लीकः
प्रार्थयामास पूर्वं स्नेहपुरःसरम् । भीम त्वयैव हन्तव्यो रणेऽहं प्रीति-
मिच्छता । तदा यशश्च धर्मं च लोकं च प्राप्नुयामहम् ॥ २७० ॥
इत्युक्त आह तं भीमो नितरां व्यथितस्तदा । हन्यां नैवान्यथा पुत्रे
तत्ते शुश्रूषणं भवेत् ॥ २७१ ॥ इति तेन हतस्तत्र भीमसेनेन



बाह्लिकः ॥ २७२ ॥ हते बाह्लीके कौरवा भीमसेनमभ्याजग्मुः कर्ण-
सुयोधनाद्याः । द्रौणिं पुरस्कृत्य गुरुं च पार्षतः सभ्रातृकः सात्यकिना
समभ्ययात् ॥ २७३ ॥ संशप्तकैरेव पार्थो युयोध तद्युद्धमासीदति-
रौद्रमद्भुतम् । अक्षौहिणी तत्र भीमार्जुनाभ्यां निषूदिता रात्रियुद्धे
समस्ता ॥ २७४ ॥

ततः सूर्यश्चाभ्युदितस्तदाऽतिघोरं द्रोणः कर्म युद्धे चकार । स
पाञ्चालानां रथवृन्दं प्रविश्य जघान हस्त्यश्वरथान्नरांश्च ॥ २७५ ॥
विद्रावितास्तेन महारथाश्च नैवाविन्दञ्छर्म बाणान्धकारे । युवेव वृद्धोऽपि
चचार युद्धे स उग्रधन्वा परमास्त्रवेत्ता ॥ २७६ ॥ रथार्बुदं तेन हतं
च तत्र ततः सहस्रं गुणितं नराणाम् । ततो दशांशो निहतो हयानां
गजार्बुदं चैव रणोत्कटेन ॥ २७७ ॥ तथा विराटद्रुपदौ शराभ्यां
निनाय लोकं परमाजिमध्ये । ततो विजित्यैव गुरोः सुतादीन्धृष्टद्युम्नं
भीमसेनो जुगोप ॥ २७८ ॥ धृष्टद्युम्नो भीमसेनाभिगुप्तो द्रोणं हन्तुं
यत्नमुच्चैश्चकार । निवारयामास गुरुः शरौघैर्धृष्टद्युम्नं सोऽपि तं
सायकेन ॥ २७९ ॥ विव्याध तेनाभिहतः स मूर्छामवाप विप्रो
निषसाद चाशु ॥२८०॥ धृष्टद्युम्नः सत्वरं खड्गचर्मण्यादाय तस्याऽरुरुहे
रथोत्तमम् । सञ्ज्ञामवाप्याथ गुरुः शरौघैः प्रादेशमात्रैर्व्यथयामास तं
च ॥ २८१ ॥ स तैरतिव्यथितस्तद्रथाच्च परावृत्तः स्वरथं चारुरोह ।
सुसंरब्धौ तौ पुनरेव युद्धं सञ्चक्रतुर्वृष्टशराम्बुधारौ ॥ २८२ ॥ निवार्य
शत्रून्स शरैर्ब्रह्मास्त्रमसृजद्द्विजः । तेन सन्दाहयामास पाञ्चालान्सुबहूत्रणे ॥
पुरुजित्कुन्तिभोजश्च तेनान्येऽपि हतास्तदा ॥ २८३ ॥ भीमोऽर्जुनः
सात्यकिश्च पर्यायेण गुरोः सुतम् । दूरतो वारयामासुर्महत्या सेनया
सह ॥२८४॥ कर्णदुर्योधनादींश्च शल्यं भोजं कृपं तथा । भीमार्जुनौ
शरौघेण वारयामसतू रणे ॥ २८५ ॥ तत्र भीमो गजानीकं जयत्सेनं
च मागधम् । जघान सुबहूंश्चैव मागधानां रथव्रजान् ॥ २८६ ॥ अथ

मालवराजस्य त्वश्वत्थामाभिदं गजम् । भीमसेनहतं दृष्ट्वा वासुदेव-
प्रचोदितः ॥ अश्वत्थामा हत इति प्राह राजा युधिष्ठिरः ॥ २८७ ॥
अश्वत्थामवधं श्रुत्वा नाहं योत्स्य इति स्वयम् । पुरोक्तं धर्मजायैव तेन
द्रोणो युधिष्ठिरम् ॥ २८८ ॥ ब्रूहि सत्यमिति प्राह सत्यमित्येव
सोऽब्रवीत् । उपांशु कुञ्जरश्चेति द्रोणोऽतिव्यथितोऽभवत् ॥ २८९ ॥
तस्य भीमो रथेषां च गृहीत्वा न तवेदृशम् । योग्यं गुणवतो नित्यं
परधर्मोपजीवनम् ॥२९०॥ इत्याह स्वस्था मुनयश्चालमेहीति तं तदा ।
ऊचुस्तदखिलं ज्ञात्वा द्रोणः शस्त्रमवासृजत् ॥२९१॥ सन्यस्य कर्माणि
तदाऽखिलानि योगारूढः परमं वासुदेवम् । सर्वेश्वरं नित्यनिरस्तदोषं
ध्यायन्मुक्त्वा देहमगात्स्वधाम ॥ २९२ ॥ तं केशवः पाण्डवा गौतमश्च
यान्तं स्वलोकं ददृशुर्विहायसा ।

धृष्टद्युम्नः पाण्डवैर्वार्यमाणोऽप्यगात्खड्गं चर्म चादाय तत्र ॥२९३॥
छित्त्वाऽसिना तस्य शिरः पुनश्च रथं स्वकीयं त्वरया समास्थितः । दृष्ट्वा
कृपस्तं सुभृशं भयार्दितः सम्प्राद्रवद्वाजिनमेकमास्थितः ॥ २९४ ॥
सञ्छिन्ने द्रोणशिरसि गर्हयामास वासविः । युधिष्ठिरश्च पाञ्चाल्यं
सात्यकिश्चापि कोपितः ॥ २९५ ॥ धृष्टद्युम्नस्तु तावाह कथं भूरिश्रवा
हतः । इति तं सात्यकिः क्रुद्धो गदापाणिः समभ्ययात् ॥ २९६ ॥
आह्वयामास पाञ्चाल्यस्तं धृतासिरविस्मयः । तदा जग्राह शैनेयं भीमः
कृष्णप्रचोदितः । शमयामास पार्थं च पाञ्चाल्यस्नेहयन्त्रितः ॥२९७॥
ते वासुदेवेन तदा सुशिक्षिताः स्नेहं पुनः पूर्ववदापुरुत्तमम् । यत्ताश्च
युद्धाय समुद्यताश्च तदाऽगमद्द्रौणिरप्यात्तधन्वा ॥ २९८ ॥ आश्रुत्य
तातं निहतं प्रतिज्ञां चकार निःशेषरिपुप्रमाथने । नारायणास्त्रं विससर्ज
कोपात्तदा भीता भीममृते समस्ताः ॥ २९९ ॥ युधिष्ठिरः प्राह विषण्ण-
चेतनः शैनेयपूर्वाः प्रतियान्तु सर्वे । सभ्रातृकोऽहं द्रौणिवरास्त्रभग्नो
भवेयमित्यत्र जगाद केशवः ॥ ३०० ॥ नमध्वमस्त्रस्य ततो विमोक्ष्य-



थेत्यथ प्रणेमुश्च धनञ्जयादिकाः । सर्वे न भीमस्तदमुष्य मूर्ध्नि पपात
सोऽस्त्राविव संस्थितोऽग्निः ॥ ३०१ ॥ अदह्यमाने भीमेऽपि वह्नौ
वह्निरिव स्थिते । आ(अ)वेष्टयद्वारुणेन पार्थोऽत्रात्मप्रपत्तये ॥३०२॥
न देहे पतितास्त्रस्य बहिर्वेष्टनतः फलम् । तथापि स्नेहवशगो वेष्टया-
मास फल्गुनः ॥ ३०३ ॥ अमोघत्वं निजास्त्रस्य भीमस्यावध्यतामपि ।
साधयन्सार्जुनः कृष्णो भीमस्य रथमारुहत् ॥ ३०४ ॥ वेष्टितं
वारुणास्त्रेण प्रविष्टं बाह्यतस्तदा । सहितत्वात्केशवेन नरत्वादथ फल्गुनम् ॥
॥ ३०५ ॥ तदस्त्रं नादहत्ताभ्यां स्वरथादवरोपिते । भीम अच्छिन्न-
हेतौ च तदस्त्रं शान्तिमागमत् ॥ ३०६ ॥ शुद्धक्षत्रियधर्मेषु निरतो
यद्वृकोदरः । वाहनादवतीर्यान्यैः प्रणतेऽपि निरायुधैः । सायुधः सरथी
युध्यदविषह्यमपीश्वरैः ॥ ३०७ ॥ स्वधर्महानौ मित्राणां कर्तव्यं यन्नि-
षेधनम् । अतः सोऽन्यानपि प्राह मा नमध्वमिति स्वयम् ॥ ३०८ ॥
नमस्कार्यमपि ह्यस्त्रं न नम्यं जीवनेच्छया । समरे शत्रुणा मुक्तं तस्मात्तं
न चकार सः ॥ ३०९ ॥ अस्त्राभिमानी वायुर्हि देवताऽस्य हरिः
स्वयम् । तस्माद्भीमस्वरूपत्वान्नादहच्चाग्निमग्निवत् ॥ ३१० ॥ मन-
सैवादरं चक्रे भीमोऽस्त्रे च हरौ तदा । क्षत्रधर्मानुसारेण न ननाम च
बाह्यतः ॥ ३११ ॥ वासुदेवः स्वकीयास्त्रं भीमं चामोघमेव तु ।
साधयित्वाऽनन्तशक्तिः पुनरश्वानचोदयत् ॥ ३१२ ॥

पुनः प्रयोक्तुमस्त्रं तद्धार्तराष्ट्रोऽभ्यचोदयत् । द्रौणिर्न शक्य-
मित्युक्त्वा धृष्टद्युम्नं समभ्ययात् ॥ ३१३ ॥ आयान्तमीक्ष्यैव गुरोः
सुतं तं धृष्टद्युम्नं सात्यकिरन्वयाद्रणे । उभौ च तौ सायकाभ्यामविध्य-
न्निपेततुस्तौ च विमूर्च्छितौ रणे ॥ ३१४ ॥ भीमस्याभ्यागतस्या-
श्वान्द्रौणिर्व्यद्रावयद्रणे । संस्थापयति तान्भीमे ददर्श द्रौणिमर्जुनः ॥
॥ ३१५ ॥ ततोऽर्जुनस्तं प्रति योद्धुमागमद्रूक्षा वाचः श्रावयन्क्रुद्ध-
रूपः । तत्राग्नेयं द्रौणिरमुञ्चदस्त्रं तेन व्याप्ता पृतना पाण्डवानाम् ॥

॥ ३१६ ॥ अक्षौहिणी निहता चात्र सेना पार्थं सयानं हरिरुज्जहार ॥
॥ ३१७ ॥ जीवन्तमालोक्य सुरेन्द्रनन्दनं द्रौणिः कोपात्कार्मुकं
चापहाय । ययौ तमागत्य जगाद कृष्णो वेदान्तकृत्पूर्णषाड्गुण्यदेहः ॥
॥३१८॥ मा याहि साक्षाद्गिरिशः सुराणां कार्याय भूमौ बलवानजा-
यथाः । महच्च कार्यं पुनरस्ति दृष्टं तवाशु तच्च प्रतिपादयेति ॥३१९॥
तथोदितः प्रातरिति ब्रुवाणो ययौ प्रणम्याखिलवेदयोनिम् । ययुस्त-
मन्वेव सुयोधनादयो दुःखानतास्ते शिबिराय भीताः ॥३२०॥ पार्थाश्च
सर्वे मुदिता जनार्दनं परं स्तुवन्तः शिबिराय जग्मुः । तत्रापि रात्रा-
वमितान्हरेर्गुणाननुस्मरन्तो मुमुदुः समेताः ॥३२१॥ (४२६८) ॥ इति
श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये
नारायणास्त्रोपशमनं ( द्रोणपर्वनिर्णयो ) नाम षड्विंशोऽध्यायः ॥२६॥

---

## ॥ अथ सप्तविंशोऽध्यायः ॥

॥ ॐ ॥ अथानुज्ञामुपादाय द्रौणेर्दुर्योधनो नृपः । कर्णं सेनापतिं
चक्रे सोऽगाद्युद्धाय दंशितः ॥ १ ॥ तत्राभवद्युद्धमतीवदारुणं पाण्डोः
सुतानां धृतराष्ट्रजैर्गजे । तत्रोदयाद्रिप्रतिमे प्रदृश्यते भीमो यथोद्य-
त्सविताऽतिनिर्मलः ॥ २ ॥ तं कालयन्तं नृपतीन्क्षेमधूर्तिरभ्यागमत्तस्य
गजं जघान च । तं वीर्यमत्तं प्रतिलभ्य भीमो निनाय मृत्योः सदनाय
शीघ्रम् ॥ ३ ॥ निहत्य तं मारुतिरभ्यकृन्तच्छिरांसि यूनां परपक्ष-
पातिनाम् । विक्षोभयामास च शत्रुसैन्यं सिंहो यथैव श्वसृगालयूथम् ॥
॥ ४ ॥ सङ्क्षोभ्यमाणं तदनीकमीक्ष्य द्रौणी रथेन प्रतिजग्मिवांस्तम् ।
तद्युद्धमासीदतिघोरमद्भुतं पुरा यथा नास च कस्यचित्कचित् ॥ ५ ॥
दृष्ट्वैव तद्देवगन्धर्वविप्रा ऊचुर्नेदृग्दृष्टपूर्वं सुयुद्धम् । न चोत्तरं वाऽपि



भविष्यतीदृक्कलां च सर्वाणि न षोडशीम(मि)युः ॥ ६ ॥ नैतादृशी
ज्ञानसम्पद्बलं वा द्वयं कुतो वायुमृते शिवं तथा । द्वयोः समाहार इह
द्वयोरपि ज्ञानस्य बाह्वोश्च बलस्य सूर्जितः ॥ ७ ॥ इतीर्यमाणे विबुधै-
र्नरोत्तमौ दिशः समस्ता गगनं च पत्रिभिः । निरन्तरं चक्रतुरुत्तमौजसौ
दृष्ट्वैव तत्प्रीतिमगुर्महारथाः ॥८॥ शरासने मारुतिना निराकृते द्रौणि-
र्महास्त्राणि मुमोच तस्मिन् । तान्यस्त्रवर्यैर्बलवानविस्मयः संशामयामास
सुतोऽनिलस्य ॥ ९ ॥ पुनः शरैरेव परस्परं तावयुध्यतां चित्रमलं च
सुष्ठु । तदा तु भीमस्य शरैर्भृशार्दितो द्रौणिः पपाताशु दृढं विचेतनः ॥
॥१०॥ भीमश्च विह्वलतनुः स तु किञ्चिदेव पूर्वं गते गुरुसुते प्रययौ
क्षणेन । निर्धूतयुद्धश्रम आत्तधन्वा योद्धुं गजौघं प्रतिनादिताशः ॥११॥
तस्मिन्गजान्मर्दयति धार्तराष्ट्रो युधिष्ठिरम् । आगाद्युद्धाय तौ युद्धं
राजानौ चक्रतुश्चिरम् ॥१२॥ तत्र तं विरथं चक्रे सहसैव युधिष्ठिरः ।
स गदामाददे गुर्वीं तं भीमोऽभ्यपतद्गदी ॥ १३ ॥ दृष्ट्वा कृपस्तं
स्वरथमारोप्यापययौ ततः । तदैव कर्णनकुलौ भृशं बाणैरयुध्यताम् ॥
॥ १४ ॥ नकुलं विरथं कृत्वा कर्णोऽथ प्रपलायिनम् । अनुद्रुत्य च
वेगेन कण्ठे धनुरवासृजत् ॥ १५ ॥ उक्त्वा च परुषा वाचः कुन्त्या
वचनगौरवात् । न जघानैव नकुलं विसृज्य च परान्ययौ ॥ १६ ॥
विन्दानुविन्दावथ कैकयौ रणे समासदत्सात्यकिरुग्रविक्रमः । तयो-
रमुष्याभवदुग्रवैशसं प्रवर्षतोरुत्तमसायकान्बहून् ॥ १७ ॥ ताभ्यां
निरुद्धः सहसा जहार तत्रानुविन्दस्य शिरोऽथ विन्दः । युयोध
शैनेयमथारथावुभौ परस्परं चक्रतुरुत्तमाहवे ॥ १८ ॥ ततश्च
चर्मासिधरौ प्रचेरतुः श्येनौ यथाऽऽकाशतले कृतश्रमौ । निकृत्य
चान्योन्यमुभौ च वर्मणी वरासिपाणी युगपत्समीयतुः ॥ १९ ॥ तत्रा-
पहस्तेन शिरः सकुण्डलं जहार विन्दस्य मृधे स सात्यकिः । निहत्य
तौ बन्धुजनैः सुपूजितो जगाम शत्रूनपरान्प्रकम्पयन् ॥ २० ॥

कृपमायान्तमीक्ष्यैव तपसा मां प्रपीडयेत्। इति मत्वा पार्षतस्तु भीमं शरणमेयिवान् ॥ २० ॥ कर्णं समन्तात्प्रतिकालयन्तं वरूथिनीमिन्द्रसुतः समभ्ययात् । क्षणात्तमाजौ विरथं च चक्रे ततोऽपहारं स चकार चम्वाः ॥ २२ ॥ पराजितः संयति सूर्यसूनुः सुतेन शक्रस्य स धार्तराष्ट्रम्। जगाद बाहुं प्रतिगृह्य पार्थो जिगाय मामन्यमनस्कमाजौ ॥ २३ ॥ कामं रथो मे धनुरप्यभेद्यं दत्तं भृगूणामधिपेन दिव्यम्। यन्ता न तादृङ्मम यादृशो हरिः शल्यो यदि स्यात्त्वदरिं निहन्याम् ॥ २४ ॥ इतीरिते सौत्यकृते स शल्यं प्रोवाच स क्रुद्ध इवाभवत्तदा। दुर्योधनो रथिनः सारथेस्तु व्यवर्णयत्सुत्तमतामशामयत् ॥ ॥ २५ ॥ बुद्धया बलेन ज्ञानेन धैर्याद्यैरपि योऽधिकः। रथिनः सारथिः स स्यादर्जुनस्य यथा हरिः ॥ २६ ॥ यथा शिवस्य ब्रह्माऽभूद्दहतस्त्रिपुरं पुरा। इत्यादिवाक्यैः संशान्त इव शल्योऽस्य सारथिः ॥ ॥ २७ ॥ बभूव तेन सहितः सेनां व्यूह्य रवेः सुतः। गच्छन्युद्धाय दर्पेण प्राह यो मेऽर्जुनं पुमान्। दर्शयेत्तस्य दास्यामि प्रीतो वित्तमनर्गलम् ॥ २८ ॥ इति ब्रुवाणं बहुशः प्राह शल्यः प्रहस्य च। निवातकवचा येन हता दग्धं हि खाण्डवम् ॥ २९ ॥ को नाम तं जयेन्मर्त्यो दृष्टो वाऽपि स गोग्रहे। काकगोमायुधर्मा त्वं हंससिंहोपमं रणे ॥ ३० ॥ मा याहि पार्थं मा याहि हतोऽनेन यमक्षयम्। इत्युक्तो रविजो मद्राश्वितरां पर्यकुत्सयत् ॥ ३१ ॥ शल्योऽपि सर्वदेवेषु नीचमध्योत्तमा नराः। सन्तीत्युक्त्वाऽस्य सारथ्यं चक्रे पार्थहितेच्छया ॥ ३२ ॥ कर्णोऽपि शल्यनियतेन रथेन पार्थसेनामवाप्य विदुधाव शरैः समन्तात्। संरक्षितो युधि सुयोधनगौतमाद्यैराचार्यजेन च महास्त्रविदां वरेण ॥ ३३ ॥ तं भीमपार्षतशिनिप्रवराभिगुप्ता सा पाण्डवेयपृतनाऽभिववर्ष बाणैः। तां सूर्यसूनुरथ बाणवरैर्विदार्य सम्प्राद्रवच्छितशरैरथ धर्मसूनुम् ॥ ३४ ॥ कृत्वा तमाशु विरथं धनुरस्य



कण्ठे सज्जं निधाय परुषा गिर आह चोच्चैः। दृष्ट्वैव मारुतिरमुं भृशमातुतोद दुर्योधनं विरथकार्मुकमाशु कृत्वा ॥ ३५ ॥ तं प्राणसंशयगतं नृपतिं निरीक्ष्य कर्णं जगाद युधि मद्रपतिः प्रदर्श्य। यस्यार्थमेष समरस्त्वमियं च सेना तं त्वं यमस्य सदनं प्रयियासुमद्य ॥ ३६ ॥ भीमेन पीडितममुं परिपाहि शीघ्रं किं ते युधिष्ठिरममुं हि युधाऽभिपीड्य। श्रुत्वाऽस्य वाक्यमतिहाय युधिष्ठिरं तं कर्णो ययौ नृपतिरक्षणतत्परोऽलम् ॥ ३७ ॥ दृष्ट्वैव तं पवनसूनुरभि त्वियाय क्रोधादिधक्षुरिव कर्णममेयधामा। राजावनाय शिनिपुङ्गवपार्षतौ च सन्दिश्य कर्णमभिगच्छत आस रूपम् ॥ ३८ ॥ अन्ते कृतान्तनरसिंहतनोर्यथैव विष्णोर्हरं ग्रसत आत्तसमस्तविश्वम्। तद्वेगतः प्रतिचचाल धरा समस्ता विद्राविता च सकला प्रतिवीरसेना ॥ ३९ ॥ वैकर्तनेन शरसञ्चयताडितः स बाणं च वज्रसदृशं प्रमुमोच तस्मिन्। तेनाहतो मृतकवत्स पपात कर्णो भीमः क्षुरं च जगृहेऽभिययौ च पश्चाम् ॥४०॥ निन्दां हरेश्च विदधाति परोक्षगोऽपि यस्तं प्रगृह्य करवाणि विजिह्वमेव। एवं हि वायुतनयस्य सदा (महा) प्रतिज्ञा छेत्तुं स तेन रविजस्य ससार जिह्वाम् ॥ ॥ ४१ ॥ आयान्तमन्तिकममुं प्रसमीक्ष्य शल्यो नेत्याह हेतुभिरहो न मृषा प्रतिज्ञा। कार्या त्वयैव पुरुहूतसुतस्य जिह्वां मा तेन पातय मरुत्सुत सूतसूनोः ॥४२॥ इत्युक्त्वा प्रमुखात्तस्य रथेनैव तु मद्रराट्। वैकर्तनमपोवाह सर्वलोकस्य पश्यतः ॥ ४३ ॥

जित्वा सूर्यसुतं भीमः कौरवाणामनीकिनीम्। सर्वां विद्रावयामास द्रौणिदुर्योधनावृताम् ॥४४॥ अक्षौहिणीत्रयं तेन तदा विलुलितं क्षणात्। तदैव गुरुपुत्रोऽयात्पाण्डवानामनीकिनीम् ॥ ४५ ॥ विमृद्य सकलां सेनां कृत्वा च विरथं नृपम्। धृष्टद्युम्नं यमौ चैव सात्यकिं द्रौपदीसुतान् ॥ क्षणेन विरथीकृत्य सर्वांश्चक्रे निरायुधान् ॥ ४६ ॥ तान्भग्नदर्पात्रणतोऽपयातानन्वेव बाणावृतमन्तरिक्षम्। कुर्वन्ययौ धर्मराज-

स्तमाह किं नः स्वधर्मे निरतान्विहंसि ॥ ४७ ॥ क्षत्रियान्परधर्मस्थो मा हिंसीरिति चोदितः । प्रहस्य तान्विहायैव ययौ यत्राच्युतार्जुनौ ॥ ॥ ४८ ॥ संशप्तकैस्तत्र संयुध्यमानं समाह्वयामास सुरेन्द्रसूनुम् । स बाणयुक्तं भुजगेन्द्रकल्पमुन्नम्य बाहुं युधये सुशूरम् ॥ ४९ ॥ पार्थः संशप्तकगणैः संसृष्टः समरार्थिभिः । आहूतो द्रौणिना चैव कार्यं कृष्णमपृच्छत ॥ चोदयामास च हयान्कृष्णो द्रौणिरथं प्रति ॥ ५० ॥ उभौ च तावस्त्रविदां प्रधानौ महाबलौ संयति जातदर्पौ । शरैः समस्ताः प्रदिशो दिशश्च द्रौणीन्द्रसूनू तिमिराः प्रचक्रतुः ॥ ५१ ॥ द्रौणिस्तदा स्यन्दनवाजिरोमस्वरोमकूपध्वजकार्मुकेभ्यः । शरानमोघान्सततं सृजानो बबन्ध पार्थं शरपञ्जरेण ॥५२॥ तस्मिन्निबद्धे हरिरप्रमेयो विबोधयामास सुरेन्द्रसूनुम् । आलिङ्गनेनास्य ददौ बलं च स उत्थितोऽस्त्राण्यमुचन्महान्ति ॥ ५३ ॥ निवार्य तान्यस्त्रवरैर्गुरोः सुतश्चिच्छेद च ज्यां युधि गाण्डिवस्य । ववर्ष पार्थं च शरैरथान्या ज्याऽऽसीत्तया गाण्डिवं सोऽप्ययुङ्क्त ॥५४॥ ततः शरेण कुपितः शितेन द्रौणिसारथेः । शिरो जहार कौन्तेयः सारथ्यं सोऽकरोत्स्वयम् ॥५५॥ शरान्विसृजता तेन सारथ्यमपि कुर्वता । शरकूटेन पार्थः स पुनर्बद्धो द्विजन्मना ॥ ॥ ५६ ॥ पुनरालिङ्ग्य कृष्णस्तमधाच्छत्रुविघातकम् । बलमस्मिंस्ततः पार्थ उत्तस्थौ शरचापभृत् ॥ ५७ ॥ ववर्ष च शरान्भूयो द्रोणपुत्रेऽरिमर्दनः । पुनस्तस्य तुतोद ज्यां द्रौणिः सन्धाय तां पुनः ॥ ५८ ॥ पार्थो द्रोणसुतस्याश्वरश्मींश्चिच्छेद सायकैः । विरश्मयो हया द्रौणेः पुनः पार्थशराहताः ॥५९॥ अपोहुर्दूरमेवास्मात्सोऽपि सन्धाय तान्पुनः । चिन्तयामास नैतस्मादधिकं शक्यतेऽर्जुने ॥ ६० ॥ सारथित्वात्केशवस्य ध्वजस्थत्वाद्धनूमतः । गाण्डीवत्वात्कार्मुकस्य चेषुध्योरक्षयत्वतः ॥६१॥ अवध्यत्वात्तथाऽश्वानामभेद्यत्वाद्रथस्य च । अतो योद्धुं समर्थोऽपि नायामि धनञ्जयम् ॥ ६२ ॥



एवं स मत्वा प्रविवेश सेनां पाण्डोः सुतानामथ तं समभ्ययात् । पाण्ड्यस्तयोरास सुयुद्धमद्भुतं प्रवर्षतोः सायकपूगमुग्रम् ॥ ६३ ॥ अष्टावष्टशता(गवा)न्यूहुः शकटानि यदायुधम् । अह्नस्तदष्टभागेन द्रौणिश्चिच्छेद तत्र हि ॥ ६४ ॥ अथ तं विरथीकृत्य छित्वा कार्मुकमाहवे । सकुण्डलं शिरो द्रौणिर्जहार मुकुटोज्ज्वलम् ॥ ६५ ॥ अथ विद्रावयामास पृतनां पाण्डवीं शरैः । तदा जघान पार्थोऽपि दण्डधाराख्यमागधम् ॥ ॥ ६६ ॥ विद्राव्यमाणां पृतनां निरीक्ष्य गुरोः सुतेनाभ्यगमत्त्वरावान् । धृष्टद्युम्नस्तं स ऊचे सुपापं हनिष्ये त्वामद्य युद्धे गुरुघ्नम् ॥ ६७ ॥ इत्युक्तो दर्शयामास पार्षतः खड्गमुत्तमम् । अयं तव पितुर्हन्ता वदिष्यति तवोत्तरम् ॥ ६८ ॥ इत्युक्त्वा धनुरादाय ववर्ष च शरान्बहून् । तयोः समभवद्युद्धं तुमुलं रोमहर्षणम् ॥ ६९ ॥ तत्र तं पार्षतं द्रौणिः क्षणेन विरथायुधम् । कृत्वाऽन्ताय शरांस्तीक्ष्णान्मुमोच न च तस्य ते ॥७०॥ त्वचं च चिच्छिदुर्द्रौणिः खड्गहस्तोऽभिजग्मिवान् । खड्गेन सोऽस्त्रशस्त्रैरप्यनिर्भिन्नत्वचं तदा ॥ ७१ ॥ मौर्व्या ममन्थ धनुषः पातयित्वा धरातले । आकृष्यमाणं पार्षतं तं दृष्ट्वा कृष्णप्रचोदितः । पार्थो भीमश्चोभयतः शरैरभिविजघ्नतुः ॥ ७२ ॥ स ताभ्यां वज्रसमितैः शरैरभिहतो भृशम् । विसृज्य पार्षतं स्वीयमारुरोह रथं पुनः ॥ ७३ ॥ जगाम च ततोऽन्यत्र पाञ्चाल्योऽपि रथं पुनः । आरुह्यान्यं स्वात्तधन्वा कृतवर्माणमभ्ययात् ॥ ७४ ॥ तयोरासीत्सुतुमुलं युद्धमद्भुतदर्शनम् । तत्र नातिप्रयत्नेन पाञ्चाल्यो विरथायुधम् ॥ ७५ ॥ चकार कृतवर्माणं तमपोवाह गौतमः । अथ दुर्योधनो राजा माद्रेयावभ्ययाद्रणे ॥७६॥ ताभ्यां तस्याभवद्युद्धं घोरमद्भुतदर्शनम् । तत्र नातिप्रयत्नेन तेन तौ विरथीकृतौ ॥ ७७ ॥ स्वयं युधिष्ठिरो राजा तदा तं समवारयत् । व्यश्वसूतध्वजं चक्रे तं च दुर्योधनो रणे ॥ ७८ ॥ अथाऽऽगतं सूर्यसुतं पुनश्च जगाम भीमो रभसो रथेन । दुर्योधनं चास्य समक्षमेव चकार

वीरो विरथं क्षणेन ॥ ७९ ॥ निवार्य कर्णं च शरैरमुष्य सूनोः सुषेणस्य शिरश्चकर्त । पपात भूमौ स पितुः समीपे यथा हतः सत्यसेनोऽमुनैव ॥ ८० ॥ यथैव कर्णावरजौ पुरैव निशायुद्धे कर्णपुरः प्रपातितौ । हतं तमीक्ष्यैव विकर्तनात्मजः क्रोधान्वितो भीमसेनं विहाय ॥ ययौ प्रमृद्यैव चमूं युधिष्ठिरं रथेऽपरे स्वश्वयुते व्यवस्थितम् ॥ ॥ ८१ ॥ न्यवारयेतां शिनिपुत्रपार्षतौ कृष्णासुताः सोमकसङ्घयुक्ताः । स तान्समस्तान्विरथान्विधाय युधिष्ठिरं प्राप युतं यमाभ्याम् ॥ ८२ ॥ निहत्य सोऽश्वान्युधि धर्मसूनोर्निरायुधौ तौ च यमौ चकार । तानेकयानोपगतान्पुनश्च ममर्द बाणैश्च वचोभिरुग्रैः ॥ ८३ ॥ तदैव मोक्षाय नृपस्य भीमो दुर्योधनं विरथं संविधाय । विव्याध मर्मस्वतितीक्ष्णसायकैस्तं दर्शयामास रवेः सुताय ॥ ८४ ॥ शल्यस्तदा धर्मसुतं विहाय कर्णो ययौ तत्र युधिष्ठिरोऽपि । गत्वा शनैः शिबिरं तत्र शिश्ये कर्णो यदा राजगर्द्धी(गृध्नी) जगाम ॥ ८५ ॥ द्रौणिः कृपश्चात्र तदैव जग्मतुस्तदा भीमो द्रौणिकर्णौ जगाम । कृपो नृपं रथमारोपयच्च विद्धं शरैर्भीमबाहुप्रमुक्तैः ॥ ८६ ॥ नृपं समादाय कृपेऽपयाते भीमार्दितौ द्रौणिकर्णौ शरौघैः । विहाय तं जग्मतुः सोमकानां चमूं शरौघैरभिपातयन्तौ ॥ ८७ ॥

अथात्र राजानमवक्षमाणो धनञ्जयो वासुदेवप्रणुन्नः । अभ्याययौ पार्षतः स्वां तु सेनां कर्णाहतां वीक्ष्य कुरूनपीडयत् ॥८८॥ न्यवारयत्समायातं कपिप्रवरकेतनम् । द्रौणिर्दुःशासनश्चैव धृष्टद्युम्नमवारयत् ॥ ॥ ८९ ॥ उभावतिरथौ तौ तु शस्त्रास्त्रैरभ्यवर्षताम् । दुःशासनपार्षतश्च कुर्वन्तौ बाणजं तमः ॥ ९० ॥ तत्र दुःशासनेनाजौ स्तम्भितो द्रुपदात्मजः । यतमानोऽपि निर्यत्नः कृतो युद्धे निरायुधः ॥ ९१ ॥ तदाऽभवद्युद्धमतीवदारुणं द्रौणेस्तनूजेन तु वज्रपाणेः । तत्रापि बद्धः शरपञ्जरेण पार्थोऽपनुत्ताऽपि च (हि) गाण्डिवज्या ॥ ९२ ॥ पार्थोऽथ



कृष्णैधितबाहुवीर्यो निहत्य सूतं गुरुपुत्रकस्य । छित्वा च रश्मींस्तुरगानमुष्य विद्रावयामास शरैः सुदूरम् ॥ ९३ ॥ अतीत्य पुत्रं तु गुरोः समागते पार्थे कर्णो द्रावयामास सेनाम् । पाण्डोः सुतानां शरवर्षधारो दुर्योधनश्चानु ययौ तमेव ॥ ९४ ॥ कर्णमायान्तमालोक्य द्रावयन्तं निजां चमूम् । धनुरन्यत्समादाय धृष्टद्युम्नो न्यवारयत् ॥ ॥ ९५ ॥ तयोरासीन्महद्युद्धं चिरं सममविश्रमम् । तदैव सात्यकिर्वीरो दुर्योधनमवारयत् ॥९६॥ निवारितः सात्यकिना रणे दुर्योधनो नृपः । निहत्य सात्यकेरश्वान्द्रौपदेश्चापमच्छिनत् ॥ ९७ ॥ तदन्तरैव कर्णोऽपि पार्षताश्वानपोथ(पात)यत् । तयोर्विरथयोरेव(वं) भग्नं तत्पाण्डवं बलम् ॥ ९८ ॥

बलं स्वकीयं बहुधा विभिन्नं समीक्ष्य भीमो मृगराजकेतुः । कृत्वा धराकम्पकमुग्रनादं रणेऽभ्ययात्कौरवराजसैन्यम् ॥९९॥ नादेन बाणैश्च वृकोदरेण भग्नं तदा कौरवसैन्यमाशु । दिशो विदुद्राव सुयोधनोऽपि कृतो रणे तेन विवाहनायुधः ॥१००॥ दृष्ट्वैव तत्पाण्डवानां च सेना समावृत्ता क्षिप्रमवार्यविक्रमा । तया पुनः कौरवाणां बलं तद्भग्नं दूराद्दूरतरं प्रदुद्रुवे ॥ १०१ ॥ हन्यमानं दिशो यान्तं पाञ्चाल्यैर्भीमसंश्रयात् । दुर्योधनबलं दृष्ट्वा जज्वालाधिरथिः क्रुधा ॥ १०२ ॥ सोऽमोघं रामदैवत्यमस्त्रं भार्गवसञ्ज्ञितम् । सर्वास्त्रनाशकं दिव्यमप्रतिद्वन्द्वमाददे ॥१०३॥ तच्च भीमपुरोगेषु सैन्येष्वमुचदुल्बणम् । तदस्त्रं वर्जयामास भीमं रामप्रसादतः ॥१०४॥ अन्ये तु दुद्रुवुः केचिच्छिष्टाः प्रापुर्यमक्षयम् । न ह्यस्त्रं द्रावमाणांस्तद्धन्ति तेन सपार्षताः ॥ १०५ ॥ पाञ्चाला द्रौपदेयाश्च शैनेयाद्याश्च सर्वशः । पलायनेनोर्वरिता अर्जुनोऽप्यस्त्रमुद्यतम् ॥ १०६ ॥ वीक्ष्य प्रत्यस्त्रहीनं तदप्राप्यैव रवेः सुतम् । वासुदेवमिदं प्राह वर्जयित्वैव सूतजम् ॥ १०७ ॥ अन्यत्र यामि नैवास्मादस्त्राज्जीवनमन्यथा । इत्यूचिवांसं पार्थं तं कृष्णोऽप्राप्यैव

सूतजम् ॥ १०८ ॥ अन्येनैव पथा भीमं प्रापयामास विश्वकृत् । तत्रार्जुनोऽवदद्भीमं याहि द्रष्टुं युधिष्ठिरम् ॥ १०९ ॥ प्रवृत्तिं विद्धि भूपस्य मां तु संशप्तका युधे । आह्वयन्ति हतोच्छेषास्तानहं यामि तद्युधे ॥ ११० ॥ इत्यूचिवांसं तमुवाच भीमो जानन्स्वबाह्वोर्बलमप्रमेयम् । संशप्तकान्सूतजं कौरवांश्च योत्स्येऽहमेकस्त्वमुपैहि भूपम् ॥ ॥१११॥ त्यक्त्वा रणं नाहमितो व्रजेयं न मां वदेत्कश्चन युद्धभीतम् । इति ब्रुवाणं तमनन्तशक्तिः प्रीतः कृष्णः प्रशशंसाधिकेष्टम् ॥ ११२ ॥

ययौ युधिष्ठिरं द्रष्टुं शिबिरं सार्जुनो हरिः । दृष्ट्वा तौ नृपतिः कर्णं हतं मत्वा शशंस ह ॥ ११३ ॥ अभिवाद्य हनिष्यामीत्युक्तः पार्थेन स क्रुधा । भृशं विनिन्द्य बीभत्सुमाह कृष्णाय गाण्डिवम् ॥ देहि पुत्रं स राधाया हनिष्यति न संशयः ॥ ११४ ॥ अथवा भीम एवैनं निवृत्ते त्वयि पातयेत् । त्वं तु कुन्त्या वृथा सूतः क्लीबो मिथ्याप्रतिश्रवः ॥ ११५ ॥ अहं तु सूतपुत्रेण क्लिष्टो मारुतितेजसा । जीवामीत्यग्रजेनोक्त उद्बबर्हासिमुत्तमम् ॥ ११६ ॥ वायुदेवस्तमाहेदं किमेतदिति सर्ववित् ॥ ११७ ॥ तमाह गाण्डिवं दातुं यो वदेत्तद्वधो मया । प्रतिज्ञातस्ततो हन्मि नृपमित्याह तं हरिः ॥११८॥ सत्यस्य वचनं श्रेयः सत्यज्ञानं तु दुष्करम् । यत्सतां हितमत्यन्तं तत्सत्यमिति निश्चयः ॥ ११९ ॥ धर्मस्य वचनं श्रेयो धर्मज्ञानं तु दुष्करम् । यः सतां धारको नित्यं स धर्म इति निश्चयः ॥ १२० ॥ कौशिकाख्यो ब्राह्मणो हि लीनं ग्रामजनं क्वचित् । तस्करेष्वभिधायैव निरयं प्रत्यपद्यत ॥ १२१ ॥ कश्चिद्व्याधो मृगं हत्वा मातापितृनिमित्ततः । भक्षार्थमभ्यगात्स्वर्गमसुरोऽसौ मृगो यतः ॥ १२२ ॥ उपद्रवाय लोकस्य तपश्चरति दुर्मतिः । तस्मात्सद्धारको धर्म इति कृत्वा विनिश्चयम् । मा नृपं जहि सत्यां त्वं कुरु वाचं तिरस्कुरु ॥ १२३ ॥ इत्युक्तो बहुधाऽनिन्दत्क्रोधादेवार्जुनो नृपम् । त्वं नृशंसः कृतघ्नश्च निर्वीर्यः



परुषंवदः ॥ १२४ ॥ त्वत्तः सुखं नास्ति किञ्चिन्न मां गर्हितुमर्हसि । भीमो मां गर्हितुं योग्यो यो ह्यस्माकं सदा गतिः ॥ १२५ ॥ यो युध्यते सर्ववीरैरद्यापि त्वं तु निन्दकः । इत्याद्युक्त्वाऽऽत्मनाशाय विकोशं कृतवानसिम् ॥ १२६ ॥ पुनः कृष्णेन पृष्टः स स्वाभिप्रायमुवाच तम् । तच्छ्रुत्वा गर्हयित्वैनं पुनराह जनार्दनः ॥ १२७ ॥ मतिपूर्वं देहहानात्पापं महदवाप्यते । धर्मार्थकाममोक्षाणां साधनं देहतोऽस्ति यत् ॥ १२८ ॥ अतो मा त्यज देहं तु कुरु चात्मप्रशंसनम् । वधो गुरूणां त्वङ्कारः स्वप्रशंसैव चात्मनः ॥ १२९ ॥ इत्युक्तः स त्वहङ्काराच्छशंस स्वगुणानलम् ॥ १३० ॥ गुरुनिन्दाऽऽत्मपूजा च न धर्माय भवेत्क्वचित् । तथाप्यर्जुनहार्दं तत्सम्प्रकाश्य जनार्दनः ॥१३१॥ तस्य लज्जां समुत्पाद्य नाशयित्वा च तं मदम् । नाहं वेद परं धर्मं कृष्ण एव गतिर्मम ॥ १३२ ॥ इति भावं समुत्पाद्य दोषान्नाशयितुं हरिः । कारयामास तत्सर्वमर्जुनेन जगत्पतिः ॥ १३३ ॥ तत एतदविज्ञानात्कुपितो नृपतिर्भृशम् । आहास्तु राजा भीमस्त्वं युवा मां जहि च स्वयम् ॥ वनं वा विफलो यामीत्युक्त्वोत्तस्थौ स्वतल्पतः ॥ ॥ १३४ ॥ तं वासुदेवः प्रतिगृह्य हेतुमुक्त्वा सर्वं शमयामास नेता । पार्थश्च भूपस्य पपात पादयोः क्षमापयन्सोऽपि सुप्रीतिमाप ॥ १३५ ॥ तौ भ्रातरौ वासुदेवप्रसादान्महापदो मुक्तिमाप्यातिहृष्टौ । भक्त्या समस्ताधिपतिं शशंसतुस्त्वया समः को नु हरे हितो नः ॥ १३६ ॥

ततः प्रणम्य बीभत्सुरग्रजं परिरम्भितः । तेनाभिनन्दितः प्रीत्या चाशीर्भिः प्रययौ युधे ॥ १३७ ॥ तं शङ्कितं कर्णजये स्विन्नगात्रं हरिस्तदा । सङ्कीर्त्य पूर्वकर्माणि नरावेशं विशेषतः ॥ व्यञ्जयामास धैर्यं च तस्यासीत्तेन सुस्थिरम् ॥ १३८ ॥ भीमस्तदा शत्रुबलं समस्तं विद्रावयामास जघान चाजौ । वीरान्रणायाभिमुखान्स्वयन्त्रा कुर्वन्स वार्तां रममाण एव ॥१३९॥ तदाऽऽसदत्तं शकुनिः ससैन्यो दुर्योधन-

स्यावरजैरुपेतः । तं भीमसेनो विरथं निरायुधं विधाय बाणैर्भुवि च
न्यपातयत् ॥ १४० ॥ न जघ्निवांस्तं सहदेवभागं प्रकल्पितं स्वेन
तदाऽक्षगोष्ठ्याम् । तं मूर्च्छितं श्वासमात्रावशिष्टं दुर्योधनः स्वरथेनाप-
निन्ये ॥ १४१ ॥ दुर्योधनस्यावरजा दशात्र प्रदुद्रुवुर्भीमसेनं विहाय ।
ततोऽर्जुनं वासुदेवं च दृष्ट्वा प्रीतः श्रुत्वा धर्मराजप्रवृत्तिम् ॥ १४२ ॥
पुनश्च निघ्नन्तमरिप्रवीरान्विद्रावयन्तं च निजां वरूथिनीम् । ससार
दुःशासन आत्तधन्वा भीमोऽपि तं सिंह इवाभिपेदिवान् ॥ १४३ ॥
तं रूक्षवाचो मुहुरर्पयन्तं विधाय भीमो विरथं क्षणेन । प्रगृह्य भूमौ
विनिपात्य वक्षो विदारयामास गदाप्रहारतः ॥ १४४ ॥ आक्रम्य
कण्ठं च पदोदरेऽस्य निविश्य पश्यन्मुखमात्तरोषः । विकोशमाकाश-
निभं विधाय महासिमस्योरसि सञ्चखान ॥ १४५ ॥ कृत्वाऽस्य वक्ष-
स्युरुसत्तटाकं पपौ निकामं तृषितोऽमृतोपमम् । तच्छोणिताम्भो श्रम-
दक्षमेनं संस्मारयामास पुरा कृतानि ॥ १४६ ॥ वाक्सायकांश्चास्य पुरा
समर्पितान्संस्मारयामास पुनःपुनर्भृशम् । दन्तान्तरं न प्रविवेश तस्य
रक्तं ह्यपेयं पुरुषस्य जानतः ॥ १४७ ॥ तथापि शत्रुप्रतिभीषणाय
पपाविवास्वाद्य पुनःपुनर्भृशम् । स्मरन्नृसिंहं भगवन्तमीश्वरं स मन्युसूक्तं
च ददर्श भक्त्या ॥ १४८ ॥ यस्ते मन्यो इत्यतो नारसिंहं सोमं तस्मै
चार्पयच्छोणिताख्यम् । युद्धाख्ययज्ञे सोमबुद्ध्याऽरिवक्ष इहेति साम्ना
गदया विभिन्दन् ॥ १४९ ॥ उवाच वाचं पुरुषप्रवीरः सत्यां प्रतिज्ञां
लोकमध्ये विधाय । याः सपतयस्ता अपतयो हि जाता या साऽपतिः
सा सपतिश्च जाता ॥ १५० ॥ पश्यन्तु चित्रां परमस्य शक्तिं ये वै
तिलाः षण्डतिला बभूवुः । एनं गृहीतं हि मया यदीह कश्चित्पुमा-
न्मोचयतु स्ववीर्यात् ॥ १५१ ॥ इति ब्रुवाणः पुनरेव रक्तं पपौ सुधां
देववरो यथा दिवि । पुनश्च सप्राणममुं विसृज्य नदन्ननर्तारिबले
निरायुधः ॥ १५२ ॥ प्रत्यनृत्यन्पुरा येऽस्मान्पुनर्गौरिति गौरिति ।



तान्वयं प्रतिनृत्यामः पुनर्गौरिति गौरिति ॥ १५३ ॥ इति ब्रुव-
न्नृत्यमानोऽरिमध्य आस्फोटयञ्छत्रुगणानजोहवीत् । शशाक च द्रष्टु-
ममुं न कश्चिद्वैकर्तनद्रौणिसुयोधनादिषु ॥ १५४ ॥ भयात्तु कर्णस्य
पपात कार्मुकं निमीलयामास तदाऽक्षिणी च । सम्बोधितो मद्रराजेन
युद्धे स्थितः कथञ्चित्स तु पार्थभागः ॥ १५५ ॥ द्रौणिर्विहायैनमपा-
जगाम दूरं तदा भीमसेनो जगाद । पीतः सोमो युद्धयज्ञे मयाऽद्य
वध्यः पशुर्मे हरये सुयोधनः ॥ १५६ ॥ इति ब्रुवन्मृतमुत्सृज्य शत्रुं
दुर्योधनं चाशु रुषाऽभिदुद्रुवे। आयान्तमीक्ष्यैव तमुग्रपौरुषं दुद्राव भीतः
स सुयोधनो भृशम् ॥ १५७ ॥ बलद्वयं चापययौ विहाय भयाद्भीमं
कृष्णपार्थौ विनैव । आयोधनं शून्यमभून्मुहूर्तं ननर्त भीमो व्याघ्रपदेन
हर्षात् ॥ १५८ ॥ सङ्कल्प्य शत्रून् गोवदेवाजिमध्ये शार्दूलवत्तच्चरितं
निशाम्य । जहास कृष्णश्च धनञ्जयश्च शशंसतुश्चैनमतिप्रहृष्टौ ॥१५९॥
यदा स रङ्गः पवमानसूनुना शून्यः कृतस्तत्र मुहूर्तमात्रात् । दुर्योधन-
स्यावरजाः शरौघैरवीवृषन्भीममुदारसत्वम् ॥ १६० ॥ तान्मारुतिर्बाण-
वरैर्निकृत्तशीर्षान्यमायानयदाशु वीरः । तस्मिन्दिने विंशतिधार्तराष्ट्रा
हतास्तदन्ये समरात्प्रदुद्रुवुः ॥ १६१ ॥

कर्माण्यनन्यौपयिकानि भीमे कुर्वत्येवं भीतभीतेऽरिसङ्घे ।
निमीलिताक्षे च भयेन कर्णे कर्णात्मजो नकुलं प्रत्यधावत् ॥ १६२ ॥
माद्रीसुतो वृषसेनं शरौघैरवारयत्तं विरथं चकार । कर्णात्मजः सोऽप्यसि-
चर्मपाणिस्तस्यानुगांस्त्रिसहस्रं जघान ॥१६३॥ कर्णात्मजस्तस्य सञ्छिद्य
चर्म भीमार्जुनादीनपि बाणसङ्घैः । अवीवृषत्तस्य शरेण पार्थो ग्रीवा-
बाहूरून्युगपच्चकर्त ॥ १६४ ॥ एकेन बाणेन सुते हते स्वे वैकर्तनो
वासविमभ्यधावत् । तयोरभूद्द्वैरथयुद्धमद्भुतं सर्वास्त्रविद्वरयोरुग्ररूपम् ॥
॥१६५॥ पक्षग्रहास्तत्र सुरासुरास्तयोरन्ये च जीवा गगनं समाश्रिताः ।
महान्विवादोऽप्यभवत्तयोः कृते तदा गिरिशोऽवददब्जयोनिम् ॥१६६॥

सुरासुराणां भीमसुयोधनौ द्वौ समाश्रयौ तत्प्रियौ कर्णपार्थौ । प्राणोपमौ तेन चैतत्कृते ते सुरासुराः कर्तुमिच्छन्ति युद्धम् ॥ १६७ ॥ यदा विनाशो जगतां महान्स्यात्तेनानयोः सममेवास्तु युद्धम् । इतीरिते पद्मयोनिं जगाद कृष्णो यत्र जयश्च तत्र ॥१६८॥ कामो न कृष्णस्य मृषा भवेद्धि कामोऽस्य पार्थस्य जयं प्रदातुम् । इत्यूचिवान्वासवः फल्गुनस्य जयोऽस्तु कर्णस्य वधस्तथेति । उक्त्वाऽनमत्कञ्जभवं तथेति प्राहासुरान्देवताश्चाबभाषे ॥ १६९ ॥ न कर्णार्जुनयोरर्थे विरोधं कुरुत कचित् । भीमदुर्योधनार्थे वा पश्यन्त्वेव च सङ्गरम् ॥ इत्युक्ते शान्तिमापन्ना ददृशुः सङ्गरं तयोः ॥ १७० ॥ ववर्षतुस्तौ च महास्त्रशस्त्रैर्भीमो रथस्थोऽवरजं जुगोप । शैनेयपाञ्चालमुखाश्च पार्थमावार्य तस्थुः प्रसभं नदन्तः ॥ १७१ ॥ दुर्योधनद्रौणिमुखाश्च कर्णं ररक्षुरावार्य तदाऽऽस युद्धम् ॥ तत्रार्जुनं बाणगणैः स कर्णः सम्मर्दयामास विशेपयत्रणे ॥ तदा नदन्भीमसेनो जगाद गदां समादाय समात्तरोषः ॥ १७२ ॥ अहं चैनं गदया पोथयामि त्वं वा जहीमं समुपात्तवीर्यः । कृष्णोऽपि तं बोधयामास सम्यङ्करावेशं व्यञ्जयन्भूय एव ॥ १७३ ॥ समृद्धवीर्यः स तदा धनञ्जयः सुयोधनद्रौणिकृपान्सभोजान् । साकं च बाणैर्विरथांश्चकार विव्याध तानप्यरिहा सुपुङ्खैः ॥ १७४ ॥ ते किञ्चिद्दूरतस्तस्थुः पश्यन्तो युद्धमद्भुतम् । अमानुषं तत्पार्थस्य दृष्ट्वा कर्म गुरोः सुतः । गृहीत्वा पाणिना पाणिं दुर्योधनमभाषत ॥ १७५ ॥ दृष्टं हि भीमस्य बलं त्वयाऽद्य तथैव पार्थस्य यथा जिता वयम् । अलं विरोधेन समेत्य पाण्डवैः प्रशाधि राज्यं च मया समेतः ॥ १७६ ॥ धनञ्जयस्तिष्ठति वारितो मया जनार्दनो नैव विरोधमिच्छति । वृकोदरस्तद्वचने स्थितः सदा युधिष्ठिरः शान्तमनास्तथा यमौ ॥ १७७ ॥ हितार्थमेतत्तव वाक्यमीरितं गृहाण मे नैव भयादुदीरितम् । अहं ह्यवध्यो मम पैत



मातुलो न शंकितुं मे वचनं त्वमर्हसि ॥ १७८ ॥ इतीरितः प्राह सुयोधनस्तं दुःशासनस्याद्य पपौ हि शोणितम् । शार्दूलचेष्टामकरोच्च भीमो न मे कथञ्चित्तदनेन सन्धिः ॥ १७९ ॥ इत्युक्तो द्रौणिरासीत्स तूष्णीं कर्णधनञ्जयौ । महास्त्रशस्त्रवर्षेण चक्रतुः खं निरन्तरम् ॥ ॥ १८० ॥ आग्नेयवारुणैन्द्रादीन्येतान्यन्योन्यमृत्यवे । ब्रह्मास्त्रमप्युभौ तत्र प्रयुज्यानदतां रणे । अन्योन्यास्त्रप्रतीघातं कृत्वोभौ च विचेरतुः ॥ ॥ १८१ ॥ क्रमेण वृद्धोरुबलेन तत्र सुरेन्द्रपुत्रेण विरोचनात्मजः । निराकृतो नागमयं शरोत्तमं ब्रह्मास्त्रयुक्तं विससर्ज वासवौ ॥ १८२ ॥ तं वासुदेवो रथमानमय्य मोघं चकारार्जुनतः किरीटम् । चूर्णीकृतं तेन सुरेन्द्रसूनोर्दिवं ययौ बाणगतश्च नागः ॥ १८३ ॥ नमिते वासुदेवेन रथे पञ्चाङ्गुलं भुवि । अपाङ्गदेशमुद्दिश्य मुक्ते नागे किरीटिनः ॥ १८४ ॥ भङ्क्त्वा किरीटं वियति गच्छति प्रभुणोदितः । बाणैस्तक्षकपुत्रं तं वासविः पूर्ववैरिणं ॥ १८५ ॥ हत्वा निपातयामास भूमौ कर्णस्य पश्यतः । ब्रह्मास्त्रस्यातिवेगित्वं प्राप्तं कर्णेन भार्गवात् ॥ १८६ ॥ पुनश्च पार्थेन महास्त्रयुद्धं प्रकुर्वतः सूर्यसुतस्य चक्रम् । रथस्य भूमिर्ग्रसति स्म शापादस्त्राणि दिव्यानि च विस्मृतिं ययुः ॥ १८७ ॥ उद्धर्तुकामो रथचक्रमेव पार्थं ययाचेऽवसरं प्रदातुम् । नेत्याह कृष्णोऽञ्जलिकं सुघोरं त्रिनेत्रदत्तं जगृहे च पार्थः ॥ १८८ ॥ सत्येन धर्मेण च सन्नियोज्य मुमोच कर्णस्य वधाय बाणम् । चिच्छेद तेनैव च तस्य शीर्षं सन्धित्सतो बाणवरं सुघोरम् ॥ १८९ ॥ अपराह्णेऽपराह्णस्य सूर्यजस्येन्द्रसूनुना । छिन्नमञ्जलिकेनाजौ सोत्सेधमपतच्छिरः ॥ १९० ॥ तस्मिन्हते दीनमुखः सुयोधनो ययौ समाहृत्य बलं सशल्यः । युधिष्ठिरः कर्णवधं निशम्य तदा समागत्य ददर्श तत्तनुम् ॥ १९१ ॥ शशंस कृष्णं च धनञ्जयं च भीमं च येऽन्येऽपि युधि प्रवीराः । गत्वा च ते शिबिरं मोदमाना

ऊषुः सकृष्णास्तदनुव्रताः सदा ॥ १९२ ॥ (४४६०) ॥ इति श्रीमन्महाभारततात्पर्यनिर्णये श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते कर्णपातो(वधो) नाम सप्तविंशोऽध्यायः ॥२७॥

---

## ॥ अथ अष्टाविंशोऽध्यायः ॥

॥ॐ॥ प्रभातायां तु शर्वर्यां गुरुपुत्रानुमोदितः । शल्यं सेनापतिं कृत्वा योद्धुं दुर्योधनोऽभ्ययात् ॥ १ ॥ तमभ्ययुः पाण्डवाश्च हृष्टा युद्धाय दंशिताः । तत्रासीत्सुमहद्युद्धं पाण्डवानां परैः सह ॥ २ ॥ अग्रे भीमः पाण्डवानां मध्ये राजा युधिष्ठिरः । पृष्ठे गाण्डीवधन्वाऽसीद्वासुदेवाभिरक्षितः ॥३॥ चक्ररक्षौ यमौ राज्ञो धृष्टद्युम्नश्च सात्यकिः । नृपस्य पार्श्वयोरास्तामग्रेऽन्येषां गुरोः सुतः ॥ ४ ॥ मध्ये शल्यः पृष्ठतोऽभूद्भ्रातृभिश्च सुयोधनः । चक्ररक्षौ तु शल्यस्य शकुनिस्तत्सुतस्तथा ॥ कृपश्च कृतवर्मा च पार्श्वयोः समुपस्थितौ ॥ ५ ॥ तत्राभवन्महद्युद्धं भीमस्य द्रौणिना सह । राज्ञः शल्येन च तथा घोररूपं भयानकम् ॥ ६ ॥ तत्र नातिप्रयत्नेन द्रौणिर्भीमेन सायकैः । विरथीकृतस्तथा धर्मसूनुः शल्येन तत्क्षणात् ॥ ७ ॥ आससाद तदा शल्यं कपिप्रवरकेतनः । तयोरासीन्महद्युद्धमद्भुतं रोमहर्षणम् ॥८॥ रथमन्यं समास्थाय द्रौणिर्भीमं समभ्ययात् । दुर्योधनश्च भीमस्य शरैरावारयद्दिशः ॥ ९ ॥ तावुभौ शरवर्षेण वारयामास मारुतिः । ताभ्यां तस्याभवद्युद्धं सुघोरमतिमानुषम् ॥ १० ॥ दुर्योधनस्यावरजान्द्रौपदेया युयुत्सुना । शिखण्ड्याद्यैर्मातुलैश्च सह सर्वान्न्यवारयन् ॥ ११ ॥ सहदेवस्तु शकुनिमुलूकं नकुलस्तथा । धृष्टद्युम्नश्च हार्दिक्यं सात्यकिः कृपमेव च ॥ १२ ॥ तेषां तदभवद्युद्धं चित्रं लघु च सुष्ठु च ।



शल्यस्तु शरसङ्घातैः पार्थस्यावारयद्दिशः ॥ १३ ॥ सोऽपि विव्याध विशिखैः शल्यमाहवशोभिनम् । तयोस्तु सममेवासीच्चिरं देवासुरोपमम् ॥ ॥ १४ ॥ ततः शरं वज्रनिभं मद्रराजः समाददे । तेन विव्याध बीभत्सुं हृदये स मुमोह च ॥ १५ ॥ उपलभ्य पुनः सञ्ज्ञां वासविः शत्रुतापनः । चिच्छेद कार्मुकं सङ्ख्ये मद्रराजस्य धीमतः ॥ १६ ॥ सोऽन्यत्कार्मुकमादाय मुमोचास्त्राणि फल्गुने । सौरं याम्यं च पार्जन्यं तान्यैन्द्रेण जघान सः ॥ १७ ॥ पुनर्न्यकृन्तत्तच्चापमिन्द्रसूनुरमर्षितः । शल्यो गदां समादाय चिक्षेपार्जुनवक्षसि ॥ १८ ॥ तदा मुमोह बीभत्सुस्तत उच्चुक्रुशुः परे । प्राप्तसञ्ज्ञः पुनः पार्थः शल्यं विव्याध वक्षसि ॥ स विह्वलितसर्वाङ्गः शिश्रिये ध्वजमुत्तमम् ॥ १९ ॥ समाश्वस्तः पुनर्बाणं यमदण्डनिभं रणे । मुमोच पार्थस्य स च निर्बिभेद स्तनान्तरम् ॥ २० ॥ तेन विह्वलितः पार्थो ध्वजयष्टिं समाश्रितः ॥ ॥ २१ ॥ समाश्वस्तः प्रचिच्छेद मद्रराजस्य कार्मुकम् । छत्रं ध्वजं च तरसा सारथिं च न्यपातयत् ॥ २२ ॥ तदाऽन्यं रथमास्थाय धर्मराजः शरोत्तमैः । चतुर्भिश्चतुरो वाहाञ्छल्यस्य निजघान ह ॥२३॥ शल्योऽन्यं रथमास्थाय सर्वांस्ताञ्छरवृष्टिभिः । छादयामास राजानं विरथं च चकार ह ॥२४॥ निहत्याश्वान्सात्यकेश्च धृष्टद्युम्नस्य चाभिभूः । चापे छित्वा च यमयोर्दध्मौ शङ्खं महास्वनम् ॥ २५ ॥ ततस्तु शल्यं समुदीर्यमाणं दृष्ट्वा रणे भीमसेनस्तरस्वी । न्यवारयद्बाणवरैरनेकैश्चकार चैनं विरथं क्षणेन ॥ २६ ॥ आस्थाय चान्यं रथमापतन्तं पुनश्च शल्यं भृशमेव मर्मसु । निर्भिद्य बाणैर्विरथं चकार पुनस्तृतीयं रथमारुरोह ॥ ॥ २७ ॥ आत्तान्यात्तान्यायुधान्यस्य भीमः सर्वाणि चिच्छेद बिभेद चास्य । मर्माणि बाणैर्नितरां पुनश्च स मुष्टिमुद्यम्य जगाम धर्मजम् ॥ ॥२८॥ तं भीमभिन्नमर्माणं विवर्माणं निरायुधम् । श्वासमात्रावशिष्टं च मरणायैव केवलम् ॥ २९ ॥ आत्मानमभिगच्छन्तं दृष्ट्वाऽन्यं रथ-

मास्थितः । हन्तुकामो रणे वीरममोघां शक्तिमाददे ॥३०॥ दिव्यास्त्रैरभिसंयोज्य तां तदा धर्मनन्दनः । सत्यधर्मफलैश्चैव चिक्षेपास्य हृदि त्वरन् ॥ ३१ ॥ स भिन्नहृदयो भूमौ पपाताभिमुखो नृपम् । सत्यधर्मरतः शल्य इन्द्रस्यातिथितामगात् ॥ ३२ ॥

मद्रराजे हते वीरे सुशर्माऽर्जुनमभ्ययात् । संशप्तकावशिष्टैस्तमनयन्मृत्यवेऽर्जुनः ॥ ३३ ॥ दुर्योधनस्यावरजानवशिष्टान्वृकोदरः । सर्वाञ्जघान सेनां च निःशेषामकरोद्रणे ॥ ३४ ॥ उलूकं सहदेवोऽथ शकुनिं चातिपापिनम् । जघान द्रौणिहार्दिक्यकृपान्भीमार्जुनौ ततः ॥ ॥३५॥ बहुशो विरथीकृत्य पीडयित्वा पुनःपुनः । द्रावयामासतुस्ते तु भीषिता विविशुर्वनम् ॥ ३६ ॥ शैनेयेन गृहीतोऽथ सञ्जयोऽनन्तशक्तिना । व्यासेन मोचितोऽथैकः पार्थान्दुर्योधनोऽभ्यगात् ॥ ३७ ॥ तेषामभूत्तस्य च घोररूपं युद्धं स बाणैर्बहुशोऽर्जुनं च । चकार मूर्च्छाभिगतं युधिष्ठिरं यमावयत्नाद्विरथांश्चकार ॥३८॥ तं भीमसेनो विरथं चकार गजं समारुह्य पुनः समभ्ययात् । पुनश्च शैनेयशिखण्डिपार्षतान्यमौ नृपं च व्यदधान्निरायुधान् ॥ ३९ ॥ गजे च भीमेन शरैर्निपातिते समारुहद्वाजिवरं सुनिर्भयः । स तेन च प्रासकरो रणेऽरिहा चचार शैनेयमताडयच्च ॥४०॥ मुमोह तेनाभिहतः स सात्यकिर्यमावपि प्रासनिपीडितौ रथे । निषीदतुर्धर्मसुतं प्रयान्तं समीक्ष्य भीमोऽस्य जघान वाजिनम् ॥ ४१ ॥ प्रासे निकृत्ते तु वृकोदरेण विवाहनः सोऽपि ययौ सुयोधनः । आदाय गुर्वीं च गदां प्रयातो द्वैपायनस्योरुसरो विवेश ॥ ४२ ॥

एवमक्षौहिणीषट्कं भीमेन निहतं रणे । पञ्च पार्थेन निहता अर्धं कालिङ्गकानृते ॥४३॥ एकादशाक्षौहिणीभ्यः शिष्टमन्यैर्निषूदितम् । अक्षौहिणीचतुष्कं च पार्थानां द्रौणिना हतम् ॥ ४४ ॥ अन्यैरन्याः समस्तैश्च द्रोणकर्णमहाव्रताः । दुर्योधनो भीमसूनुः प्रायः सेनाहनः



क्रमात् ॥ ४५ ॥ जयं लब्ध्वा नदत्सूच्चैः पाण्डवेषु महात्मसु । दुर्योधनो जलस्तम्भं कृत्वा मन्त्राञ्जजाप च ॥ ४६ ॥ मन्त्रा दूर्वाससा दत्ता मृतसञ्जीवनप्रदाः ॥ ४७ ॥ जले स्थित्वा जपन्सप्तदिनैः सर्वान्मृतानपि । उद्धरेद्धार्तराष्ट्रोऽयं स्युरवध्याश्च ते पुनः ॥ ४८ ॥ इति विद्याबलं तस्य ज्ञात्वा पाण्डुसुतास्ततः । अन्विष्यन्तः शुश्रुवुश्च व्याधेभ्यस्तं जले स्थितम् ॥४९॥ आगच्छंश्च ततस्तत्र पुरस्कृत्य जनार्दनम् । तदा जलात्समुन्मज्य त्रिभिर्द्रौणिपुरःसरैः मन्त्रयन्तं स्म ददृशुस्तान्दृष्ट्वा ते प्रदुद्रुवुः ॥ ५० ॥ दुर्योधनोऽविशत्तोयं दृष्ट्वा तं केशवाज्ञया । युधिष्ठिरः सुपरुषैर्वाक्यैरेनमथाह्वयत् ॥ ५१ ॥ अमर्षितोऽसौ धृतराष्ट्रपुत्रः श्वसंस्तदा दण्डहतो यथाऽहिः । उवाच शाठ्यात्तपसे वनाय यायां भवाञ्छासतु सर्वपृथ्वीम् ॥ ५२ ॥ तमाह धर्मजो राजा यस्त्वं कृष्णे समागते । सूच्यग्रवेधितां पृथ्वीं दातुं नैच्छः कथञ्चन ॥ ५३ ॥ घातयित्वा सर्वपृथ्वीं भीष्मद्रोणमुखानपि । दातुमिच्छसि सर्वां त्वं (च) पृथ्वीं नाद्य वयं पुनः ॥५४॥ अहत्वा प्रतिगृह्णीम एहि युद्धे स्थिरो भव । न कुरूणां कुले जातो यस्त्वं भीतो ह्यपोऽविशः ॥ ५५ ॥ इत्यादि रूक्षवचनं श्रुत्वा दुर्योधनो रुषा । जलस्तम्भात्समुत्तस्थौ श्वसन्नाशीविषो यथा ॥ ५६ ॥ उवाच चैक एवाहमकिरीटो विवर्मकः । भवन्तो बहवो वर्मशिरस्त्राणयुता अपि ॥ ५७ ॥ यद्येवमपि मे युद्धं भवद्भिर्मन्यसे समम् । सर्वैरेकेन वा युद्धं करिष्ये न च भीर्मम ॥ ॥ ५८ ॥ इत्युक्त आह धर्मात्मा वर्माद्यं च ददामि ते । वृणीष्व प्रतियोद्धारं पञ्चानां त्वं यमिच्छसि ॥ ५९ ॥ हत्वैकं भुङ्क्ष्व राज्यं त्वमन्ये याम वनं वयम् । हते वा त्वयि तेनैव भुञ्जीमश्चाखिलां भुवम् ॥ आधत्स्व चायुधं तेन जेतुमिच्छसि शात्रवान् ॥ ६० ॥ इत्युक्त ऊचे न हि दुर्बलैरहं योत्स्ये चतुर्भिर्भवदर्जुनादिभिः । भीमेन योत्स्ये गदया सदा हि मे प्रिया गदा नान्यदथायुधं स्पृहे ॥ ६१ ॥

श्रुत्वाऽस्य वाक्यं रभसा वृकोदरो गदां तदाऽध्यर्धभराधिकां मुदा । राज्ञो गदायाः प्रतिगृह्य वीरः समुत्थितो युद्धमनाः समुन्नदन् ॥६२॥

अथाह नारायण आदिदेवो युधिष्ठिरं कष्टमिदं त्वया कृतम् । न ह्येष राजा गदया रणे चरञ्शक्यो विजेतुं निखिलैः सुरासुरैः ॥६३॥ स निश्चयाद्धश्चतुरो निहन्यात्सहार्जुनान्भीमसेनः कथञ्चित् । हन्तैनमाजौ न हि भीमतुल्यो बले कचिद्धार्तराष्ट्रः कृती च ॥ ६४ ॥ ऊरू भीमेन भेत्तव्यौ प्रतिज्ञां रक्षता रिपोः । नाभेरधस्ताद्धननं जना आहुर्गदामृधे ॥ ६५ ॥ अधर्म इति तत्कृष्णो लोकनिन्दानिवृत्तये । आपद्धर्मं दर्शयितुं किञ्चिद्व्याजेन संयुतः ॥ ६६ ॥ भीमो हन्याद्धार्तराष्ट्रमित्यूचे यद्यपि स्फुटम् । अव्याजेनापि शक्तोऽसौ बलं निःसीममाह च ॥ ॥६७॥ आह शिक्षामप्यनूनां यत्नं दुर्योधनेऽधिकम् । न हि भीमोऽतिप्रयत्नं कुर्यादिति गुणो ह्ययम् ॥६८॥ प्रतिज्ञापालनं धर्मो दुष्टेषु च विशेषतः । इति धर्मरहस्यं तु वित्तः कृष्णवृकोदरौ ॥ ६९ ॥ नान्यस्ततो लोकनिन्दां व्यपनेतुमुभावपि । अनापद्यापदिव च दर्शयेतां जनस्य तु ॥ ७० ॥ ततो भीमः सर्वलोकस्य धर्मं प्रकाशयन्वाक्यमिदं जगाद । ऊरू तवाहं हि यथाप्रतिज्ञं भेत्स्यामि नैवात्र विचारणीयम् ॥ ॥ ७१ ॥ इति ब्रुवन्तं प्रससार चाजौ दुर्योधनस्तत्र बभूव युद्धम् । भीमस्तदाग्रयप्रकृतिं विधित्सुर्मन्दः स आदौ व्यचरज्जनार्थे ॥ ७२ ॥ दर्शयन्तौ गदामार्गं चित्रं तौ प्रविचेरतुः । बलभद्रोऽप्याजगाम तदा तौ प्रतिवारितुम् ॥७३॥ वारितावपि तेनोभौ नैव युद्धं व्यमुञ्चताम् । ततो ददर्श तद्युद्धं मानितः कृष्णपूर्वकैः ॥७४॥ तौ शिक्षाबलसंयुक्तौ मण्डलानि विचेरतुः । तत्र भीमं वञ्चयितुं धार्तराष्ट्रः शिरः क्षितौ ॥ ॥ ७५ ॥ व्यधादुच्छ्रितसक्थीकस्तदा कृष्णाभ्यनुज्ञया । पृष्ठमूलेऽहनद्भीमो भिन्नसक्थिश्च सोऽपतत् ॥ ७६ ॥ प्रतिज्ञापालनार्थाय नाभेर्नोपर्यधस्तदा ॥ ७७ ॥ गदायुद्धस्य मर्यादां यशश्चाप्यभिरक्षितुम् । नाधस्तान्मध्य एवासौ निजघ्ने तं वृकोदरः ॥ ७८ ॥ एवं प्रतिज्ञायुग्मार्थं भग्नसक्थियुगं रणे । द्यूते कृष्णां निधेहीति यदवादीत्सुयोधनः ॥ तत्प्रतिज्ञानुसारेण भीमो मूर्धानमक्रमीत् ॥७९॥ 'ऋषभं मासमानानामि'ति सूक्तं ददर्श ह । तेषां पुण्यानि विद्याश्च समादायैव सर्वशः ॥ तांश्चकार तमोगन्तॄंस्तस्य मूर्ध्नि पदाक्रमत् ॥८०॥ स्मारयामास कर्माणि यानि तस्य कृतानि च । कृष्णबन्धे कृतो मन्त्र इति मूर्ध्नि पदाऽहनत् ॥ ॥ ८१ ॥ पुनःपुनश्च तद्वीक्ष्य चुक्रोध मुसलायुधः । चुक्रोश नैव धर्मोऽयमित्यसावूर्ध्वबाहुकः ॥ ८२ ॥ पुनः क्रोधातिताम्राक्ष आदाय मुसलं हलम् । अभिदुद्राव भीमं तं न चचाल वृकोदरः ॥ ८३ ॥ अभये संस्थिते भीमे रामं जग्राह केशवः । आह धर्मेण निहतो भीमेनायं सुयोधनः ॥८४॥ न मण्डलेऽभिसारे वा नापसारे च नाभितः । अधो हन्याद्वञ्चयन्तमधो हत्वा न दुष्यति ॥ ८५ ॥ कृता प्रतिज्ञा च वृकोदरेण भेत्स्ये तवोरू इति युक्तिपूर्वकम् । संश्रावयानेन तदेष धर्मतो जघान दुर्योधनमग्रयकर्मा ॥८६॥ वासुदेववचः श्रुत्वा धर्मच्छलमिति ब्रुवन् । रौहिणेयो जगामाशु स्वपुरीमेव सानुगः ॥८७॥ तस्मिन्गते वासुदेवं समपृच्छद्युधिष्ठिरः । धर्मोऽयमथवाऽधर्म इति तं प्राह केशवः ॥ ॥ ८८ ॥ न साक्षाद्धर्मतो वध्या ये च पापतमा नराः । देवैर्हि वञ्चयित्वैव हताः पूर्वं सुरारयः ॥ ८९ ॥ अतोऽयमप्यधर्मेण हतो नात्रास्ति दूषणम् । भीष्मद्रोणौ च कर्णश्च यदैवोपाधिना हताः ॥९०॥ को नु दुर्योधने पापे हते दोषः कथञ्चन । प्रतिज्ञापालनायापि बिभेदोरू वृकोदरः ॥९१॥ धर्मतश्च प्रतिज्ञेयं कृताऽनेनानुरूपतः । लोकतोऽपि न धर्मस्य हानिरत्र कथञ्चन ॥ ९२ ॥ ये भीमस्याप्रभावज्ञा आपद्धर्मं च मन्वते । अवध्यत्वे शिववराद्गदाशिक्षाबलादपि ॥ जरासन्धोपमो यस्माद्धार्तराष्ट्रः सुविश्रुतः ॥९३॥ तस्मात्स धर्म एवायं भीमचीर्ण इति ब्रुवन् । अपि संशयिनं चक्रे धर्मराजं जगत्पतिः ॥९४॥ भूभारक्षतिजो

धर्मो मच्छुश्रूषात्मकश्च यः। भीमस्यैव भवेत्सम्यगिति बुद्ध्या परः प्रभुः॥ ॥९५॥ स्वेनैव बलभद्राय जनाय च पुनःपुनः। श्रुत्वाऽप्युक्तं न तत्याज संशयं धर्मजो यतः॥९६॥ ततोऽप्यसंशयं कृष्णो न चकार युधिष्ठिरम्। मुख्यधर्मं हि भगवान्बलायाह जनाय च॥ ९७॥ धर्मेणैव हतो राजा धार्तराष्ट्रः सुयोधनः। इति यद्वक्ष्यति पुनर्निश्चयार्थेऽर्जुनाय च॥ ॥ ९८॥ पुनःपुनर्धर्मत एव भीमो जघान राजानमिति ब्रुवन्तम्। जगाद कृष्णं स्फुरिताधरोष्ठः क्रोधात्सुपापो धृतराष्ट्रसूनुः ॥ ९९ ॥ त्वयैव पापे निहिता हि पार्थाः पापाधिकस्त्वं हि सदैक एव। इत्यूचिवांसं प्रजगाद कृष्णो न त्वत्समः पापतमः कदाचित् ॥१००॥ भीष्मादिहत्याऽपि तवैव पापं यदन्वयुस्त्वामपि(ति) पापनिश्चयम्। पापं च पापानुगतं च हत्वा कथञ्चनाप्यस्ति न चैव पापम्॥ १०१॥ न पाण्डवेष्वस्ति ततो हि किञ्चित्पापं प्रयत्नाच्च निसर्गतोऽपि। गुणाधिकास्ते मदुपाश्रयाश्च को नाम तेष्वण्वपि पापमाह॥ १०२॥ निसर्गतः पापतमस्त्वमन्यान्धर्मस्थितान्पापपथे निधाय। स्वयं च पापे निरतः सदैव पापात्सुपापां गतिमेव यासि॥ १०३॥ इति ब्रुवन्तं पुनराह कृष्णं दुर्योधनः पापकृतां प्रधानः। स्वन्तोत्तमो नाम क एव मत्तः को नाम दोषोऽस्ति मया कृतोऽत्र॥ १०४॥ इष्टं च यज्ञैश्चरितं च पूर्तैः पदं रिपूणां निहितं च मूर्ध्नि। मृत्युश्च सङ्ग्रामशिरस्यवाप्तो रणोन्मुखेनैव मया किमन्यत्॥ १०५॥ इष्टा भोगा मया भुक्ताः प्राप्ता च परमा गतिः। दुःखिनो दुःखमाप्स्यन्ति पार्थास्ते कूटयोधिनः॥ १०६॥ चन्द्रार्कसन्निभैः शूरैर्धार्मिकैः सद्भिरुज्झिता। केवला रत्नहीनेयं पाण्डवैर्भुज्यतां मही॥ ९०७॥ इत्युक्तवत्येव नृपे सुरेशैः प्रसूनवृष्टिर्विहिता पपात ह। तामेव बुद्धिं धृतराष्ट्रसूनोः कृत्वा दृढां पातयितुं तमोऽन्धे॥ १०८॥ सम्भावयत आत्मानं वासुदेवं विनिन्दतः। तत्परांश्च कथं न स्यात्तमोऽन्ते च विशेषतः॥



॥ १०९॥ यदैकैकमलं तत्र दुःखाधिक्यं समुच्चयात्। इति तत्कारयित्वेश आह मोघं तवाखिलम्॥ ११०॥ नृशंसस्य कृतघ्नस्य गुणवद्द्वेषिणः सदा। यदि धर्मफलं ध्वान्तं सूर्यवत्स्यात्प्रकाशकम्॥ ॥ १११॥ वदन्पुनः पुनरिदं धर्मतो हत इत्यपि। ख्यापयामास भगवाञ्जने निजजनेष्टदः॥ ११२॥

प्रख्यापिते वासुदेवेन धर्मे सतां सर्वेषां हृद्यमासीत्समस्तम्। हतं च धर्मेण नृपं व्यजानन्पापोऽयमित्येव विनिश्चितार्थाः॥ ११३॥ युधिष्ठिरो पापदर्शी सदैव ससंशयोऽभूत्सुमनोऽभिवृष्ट्या। स्नेहाद्द्रौणिः सञ्जयो रौहिणेयो दौर्योधनात्पापमित्येव चोचुः॥ ११४॥

ततः कृष्णः पाण्डुपाञ्चालकैस्तैर्भृशं नदद्भिर्हर्षितैः समेतः। ययौ विरिञ्चेशसुरेन्द्रमुख्यैः सम्पूजितस्तैश्च रणाङ्गणात्स्मयन्॥ ११५॥ ततः श्रुत्वा सञ्जयाद्दुःखतप्तं सम्बोधयिष्यन्पितरं युयुत्सुः। कृष्णस्य राज्ञश्च मतेऽनुयातो जगाम चान्वेव जनार्दनश्च॥ ११६॥ धर्मयुक्तैश्च तत्त्वार्थैर्लोकवृत्तानुदर्शकैः। वाक्यै राजानमाश्वास्य प्रायात्पार्थान्पुनर्हरिः॥ ११७॥ कालानुसारतो देवांश्चोपसंहर्तुमच्युतः। ययौ सपार्थशैनेयः कुरूणां शिबिरं निशि॥ ११८॥ तदैव हार्दिक्यकृपान्वितोऽयात्सुयोधनं द्रौणिरमुं शयानम्। प्रभग्नसक्थिं श्वसृगालभूतैः सम्भक्ष्यमाणं ददृशे श्वसन्तम्॥ ११९॥ स दुःखशोकाभिहतो विनिन्द्य पार्थान्मया भूप किमत्र कार्यम्। इत्याह निष्पाण्डवतां कुरुष्वेत्यमुं व्याधात्पांस्वभिषेकिणं नृपः॥ १२०॥ उच्छिद्य सन्ततिं पाण्डोः कृत्वा स्वक्षेत्रसन्ततिम्। तया भूरक्षणहृदा सोऽभिषिक्तस्तथेत्यगात्॥ १२१॥ स कृष्णभीमपार्थानां भयादेव पुनर्वनम्। कृपसात्वतसंयुक्तो विवेश गहनं रथी॥ १२२॥ तस्य चिन्तयतो द्रोणवधं दुर्योधनस्य च। नागान्निद्रा निशीथे च ध्वाङ्क्षान्न्यग्रोधवासिनः॥ १२३॥ हतान्सुबहुसाहस्रानेकेनातिबलेन तु। कौशिकेन

निरीक्ष्यैव प्राह तौ कृपसात्वतौ ॥ १२४ ॥ निदर्शनेन ह्येतेन प्रेरितः
परमात्मना । यामि पाण्डुसुतान्हन्तुमित्युक्त्वाऽऽरुरुहे रथम् । निवा-
रितोऽपि ताभ्यां स प्राद्रवच्छिबिरं प्रति ॥ १२५ ॥ अनुजग्मतुस्तावपि
तं शिबिरद्वारि चैक्षत । उग्ररूपधरं रुद्रं स्वकीयां तनुमेव सः ॥१२६॥
परीतं वासुदेवेन बहुकोटिस्वरूपिणा । दृष्ट्वैव वासुदेवं तमत्रसद्गौतमी-
सुतः ॥१२७॥ वासुदेवाज्ञयैवात्र स्वात्मनाऽपि सदाशिवः । अयुध्य-
दग्रसच्चाशु द्रौणेः सर्वायुधान्यपि ॥ १२८ ॥ अचिन्त्या हरिशक्तिर्य-
दृश्यन्ते त्महनोऽपि हि । अतस्तया प्रेरितेन स्वात्मनैवाखिलेष्वपि ॥
॥ १२९ ॥ आयुधेषु निगीर्णेषु द्रौणिर्यज्ञं तु मानसम् । चक्रेऽऽत्मानं
पशुं कृत्वा स्वात्मस्थायैव विष्णवे ॥ १३० ॥ यज्ञतुष्टेन हरिणा
प्रेरितः शङ्करः स्वयम् । आत्मने द्रोणपुत्राय ददौ सर्वायुधानि च ॥
॥ १३१ ॥ उवाच चाहमादिष्टो विष्णुना प्रभविष्णुना । अरक्षं
पार्थशिबिरमियन्तं कालमेव तु ॥ १३२ ॥ तदिच्छयैव निर्दिष्टो दास्ये
मार्गं तवाद्य च । आयुधानि च सर्वाणि हन्तुं सर्वानिमाञ्जनान् ॥१३३॥
इत्युदीर्य प्रदायाशु सर्वा हेतीर्वृषध्वजः । तत्रैवान्तर्दधे सोऽपि प्रोवाच
कृपसात्वतौ ॥ १३४ ॥ ये निर्यास्यन्ति शिबिराज्जहितं तांश्च सर्वशः ।
इत्युक्त्वा प्रविवेशान्तर्धन्वी खड्गी कृतान्तवत् ॥ १३५ ॥ पारावतार्श्वं
स तदा शयानमुपेत्य पद्भ्यां समताडयच्च । वक्षस्यसाववदद्धीतनिद्रो
जाने भवन्तं हि गुरोस्तनूजम् ॥१३६॥ समुत्थितं मां जहि शस्त्रपाणिं
शस्त्रेण वीरोऽसि स वीरधर्मः । लोकाश्च मे सन्त्वथ शस्त्रपूता इति
ब्रुवाणं स रुषा जगाद ॥ १३७ ॥ न सन्ति हि ब्रह्महणां (हि) सुलोका
विशेषतश्चैव गुरुद्रुहां पुनः । न धर्मयुद्धेन वधार्हकाश्च ये त्वद्विधाः
पापतमाः सुपाप ॥ १३८ ॥ अवश्यभाविनं मृत्युं धृष्टद्युम्नो विचिन्त्य
तम् । तूष्णीं बभूव स्वप्नेऽपि नित्यं पश्यति तां मृतिम् ॥ १३९ ॥
द्रौणिं च कालरात्रिं च द्रोणपातादनन्तरम् । विशसन्तं कृषन्तीं च



स्वप्ने पश्यति(ऽपश्यद्धि) पार्षतः ॥१४०॥ समाक्षिपद्द्रोणसुतोऽस्य कण्ठे
निबध्य मौर्वीं धनुषोऽप्युरःस्थः । ममन्थ कृच्छ्रेण विहाय देहं ययौ
निजस्थानमसौ च वह्निः ॥१४१॥ ततः शिखण्डिनं हत्वा युधामन्यू-
त्तमौजसौ । जनमेजयं च पाञ्चालीसुतानभिययौ ज्वलन् ॥ १४२ ॥
तैरुत्थितैरस्यमानः शरैः खड्गेन जघ्निवान् । सर्वान्सव्यापसव्येन तथान्या-
न्पाण्डवात्मजान् ॥१४३॥ ऋत एकं भैमसेनिं काशिराजात्मजात्मजम् ।
तं तदान्तर्हितः शर्वः कैलासमनयत्क्षणात् ॥१४४॥ स शर्वत्रातनामाऽऽ-
सीदतस्तत्रैव सोऽवसत् । पुराऽर्थितः स्वदौहित्रस्यामरत्वाय शङ्करः ।
काशिराजेन तेनासौ जुगोपैनं कृपायुतः ॥ १४५ ॥ वासुदेवमतं
ज्ञात्वा साम्राज्याय परीक्षितः । वारयामास भूलोकं नैव याहीत्यमुं
शिवः ॥ १४६ ॥ सामान्यतोऽपाण्डवाय द्रोणिनाऽप्यभिसन्धितम् ।
तद्रूपेणैव रुद्रेण विनैनमिति चिन्तितम् ॥ १४७ ॥ अस्त्रं ब्रह्मशिरश्चैनं
न जघानैक्यतस्तयोः । चेकितानादिकांश्चैव जघानान्यांश्च सर्वशः
॥ १४८ ॥ स चेदिपाञ्चालकरूशकाशीनन्यांश्च सर्वान्विनिहत्य वीरः ।
शिरांस्त्रियश्चैव निहन्तुमुग्रः प्राज्वालयत्तच्छिबिरं समन्तात् ॥ १४९ ॥
जिजीविषूंस्तत्र पलायमानान्द्वारि स्थितौ गौतमसात्वतौ च । निजघ्नतुः
सर्वतः पार्षतस्य सूतस्त्वेकः शेषितो दैवयोगात् ॥ १५० ॥ खड्गेन
प्रहृतं दृष्ट्वा हार्दिक्येन पपात ह । भूमौ प्रागेव संस्पर्शान्न ज्ञातस्तमसाऽ-
मुना ॥ १५१ ॥ अन्यासक्ते समुत्थाय प्राद्रवद्यत्र पार्षती । तस्या
अकथयत्सर्वं सा भीमायाह दुःखिता । प्राद्रवद्रथमारुह्य स धन्वी
गौतमीसुतम् ॥ १५२ ॥ तदन्तरे द्रौणिरपि प्रयातः कृष्णासुतानां
मुदितः शिरांसि । आदाय हार्दिक्यकृपानुयातो दुर्योधनं सन्निकृष्ट-
प्रयाणम् ॥१५३॥ दृष्ट्वा तदुक्तं च निशम्य पापस्तुष्टोऽत्यजत्साध्विति
देहमाशु । भीमार्जुनाभ्यामथ केशवाच्च भीताः पृथक्द्रौणिमुखाः प्रयाताः
॥ १४५ ॥

तत्रैकलं द्रोणसुतं रथेन यान्तं रथी मारुतिरन्वधावत् । तमाद्रवन्तं प्रसमीक्ष्य भीतः पराद्रवद्द्रोणिरतिद्रुताश्वैः ॥ १५५ ॥ आद्रवन्तं पुनर्दृष्ट्वा भीमं द्रोणात्मजो रुषा । आवृत्य युध्यन्विजितोऽस्त्रं ब्रह्मशिर आददे ॥ १५६ ॥ एतस्मिन्नन्तरे कृष्णो धर्मजेनार्जुनेन च । तत्रागमत्तदस्त्रं च भीमं चाव्यर्थतां (चामोघतां) नयन् ॥ १५७ ॥ अवध्यो भीमसेनस्तदस्त्रं चामोघमेव यत् । विष्णुर्नैवोभयं यस्मात्क्लृप्तं भीमोऽस्त्रमेव तत् ॥ १५८ ॥ गायत्री तत्र मन्त्रो यद्ब्रह्मा तद्ध्यानदेवता । ध्येयो नारायणो देवो जगत्प्रसविता स्वयम् ॥ १५९ ॥ ऊचे च पार्थयोः कृष्णो यत्कृतं द्रौणिना पुरा । स्वायुधानां याचनं चाप्यशक्तेन तदुद्धृतौ ॥ १६० ॥ पृष्टेनोक्तं त्वया हीनां कृत्वा दुर्योधनाय गाम् । दातुं तदायुधं मेऽद्येत्येवमुक्तेऽऽत्मनोदितम् । मैवं कार्षीः पुनरिति ध्यायताब्धेस्तटे स्वमुम् ॥ १६१ ॥ तदस्त्रं प्रज्वलद्दृष्ट्वाऽपाण्डवत्वविधित्सया । धरायां द्रौणिना मुक्तं कृष्णेन प्रेरितोऽर्जुनः ॥ १६२ ॥ स्वस्त्यस्तु द्रोणपुत्राय भूतेभ्यो मह्यमेव च । इति ब्रुवंस्तदेवास्त्रमस्त्रशान्त्यै व्यसर्जयत् ॥ १६३ ॥ अनस्त्रज्ञेषु मुक्तं तद्धन्यादस्त्रमुचं यतः । गुरुभक्त्या ततो द्रौणेः स्वस्त्यस्त्वित्याह वासविः ॥ १६४ ॥ तदस्त्रयोस्तु संयोगे भूतानां संहृतिर्भवेत् । भूतानां स्वस्तिरप्यत्र काङ्क्षिता करुणात्मना ॥ १६५ ॥ तथाप्यस्त्रद्वयं युक्तं भूतानां नाशकृद्ध्रुवम् । तस्मान्निवारयन्योगं तयोर्मध्येऽभवत्क्षणात् ॥ १६६ ॥ निःसीमशक्तिः परमः कृष्णः सत्यवतीसुतः । संस्थाप्यास्त्रद्वयं दूरे तावाह पुरुषोत्तमः ॥ १६७ ॥ सन्ति ह्यस्त्रविदः पूर्वं प्रायश्चैतन्न तैः कृतम् । लोकोपद्रवकृत्कर्म सन्तः कुर्युः कथं क्वचित् ॥ १६८ ॥ इत्युक्ते फल्गुनः प्राह मया मुक्तं महापदि । शान्त्यर्थमेव च विभो क्षन्तव्यं भवता ततः ॥ १६९ ॥ द्रौणिरप्येवमेवाह तौ वेदपतिरब्रवीत् । निवर्त्यतामस्त्रमिति शक्रसूनुस्तथाऽकरोत् ॥ १७० ॥ निवर्तनाप्रा



द्रौणिं वासुदेवोऽप्यभाषत ॥ १७१ ॥ क्षत्रतेजा ब्रह्मचारी कौमारादपि पाण्डवः । निवर्तने ततः शक्तो नायं द्रोणात्मजोऽपि सन् ॥१७२॥ अब्रह्मचर्यादित्युक्ते व्यासो द्रौणिमभाषत । निवर्तनासमर्थस्त्वं देहि नैसर्गिकं मणिम् ॥ १७३ ॥ जितः प्रागेव भीमेन भीमायैव महाप्रभम् । अपि केवलया वाचा पार्थेभ्योऽस्त्रं निवर्तय ॥ १७४ ॥ इत्युक्तो मूर्धजं रत्नं जरामरणनाशनम् । क्षुत्तृट्श्रमहरं दिव्यं गन्धध्वान्तहरं शुभम् ॥ १७५ ॥ उत्कृत्य भीमाय ददौ मुक्ताः पश्चैव पाण्डवाः । अस्त्रादिति ततो वेदभर्ता वासविमब्रवीत् ॥ १७६ ॥ तात मुक्तं द्रौणिनाऽपि त्वमेवास्त्रं निवर्तय । इत्युक्तस्तं प्रणम्याशु सञ्जहारार्जुनोऽपि तत् ॥ १७७ ॥ यादवेशोऽथ गौतम्याः सुतमाहैकसन्ततेः । वाचा निवर्तयास्त्रं त्वमित्युक्ते द्रौणिरब्रवीत् ॥ १७८ ॥ पक्षपातादिच्छसि त्वं भागिनेयस्य सन्ततिम् । तत्रैव पातयाम्यस्त्रमुत्तरागर्भकृन्तने ॥ १७९ ॥ वासुदेवः पुनः प्राह यदि हन्तव्य एव ते । गर्भस्तथापि नैवास्त्रं पातयास्मिन्कथञ्चन ॥ १८० ॥ अभिमन्योर्मृतस्यैव देहे पातय मानद । एवं त्वदस्त्रनिहतं गर्भमुज्जीवयाम्यहम् ॥ ॥ १८१ ॥ पातये गर्भ एवाहमित्यूचे गौतमीसुतः । अथाह वासुदेवस्तमीषत्क्रुद्ध इव प्रभुः ॥ १८२ ॥ दुर्मते पश्य मे वीर्यं यत्ते शक्यं कुरुष्व तत् । उज्जीवयाम्यहं गर्भं यततः शक्तितोऽपि ते ॥१८३॥ सन्ततिर्वर्षसाहस्रं पाण्डवानां भवेद्भुवि । मत्पालितां न कश्चित्तां तावद्धन्तुं क्षमः क्वचित् ॥ १८४ ॥ जानामि ते मतिं दुष्टां जिघांसोः पार्थसन्ततिम् । चिकीर्षोर्धार्तराष्ट्रस्य तन्तुं भूयः सुदुष्करम् ॥ १८५ ॥ मदाज्ञया सा विफला भवित्री वाञ्छा मुमुक्षोर्विमुखस्य विष्णोः । यथैव तेनैव नराधिरूढो गम्यस्तव स्यान्न च भूमिभागः ॥१८६॥ दुर्गन्धयुक्तो व्रणसञ्चिताङ्गः सदाचरः (स्या)स्याद्विपिनेषु मन्दः(न्द) । यावद्भुवि स्यादिह पार्थतन्तुर्व्यासोऽपि तं प्राह तथेति देवः ॥ १८७ ॥ रूप-

द्वयेनापि हरेस्तथोक्तो जगाद कालीतनयं स कृष्णम्। त्वया सह स्यान्मम सङ्गमो विभो यथेष्टतः स्यान्न च मेऽत्र विघ्नः ॥ १८८ ॥ इत्युक्त ओमिति प्राह भगवान्बादरायणः। तं प्रणम्य ययौ सोऽपि स्वप्न दृष्टमनुस्मरन् ॥१८९॥ स्वप्ने हि द्रौपदेयानां वधो दृष्टोऽत्मना निशि। अर्जुनेन प्रतिज्ञातं द्रौपद्यै स्ववधं प्रति ॥ १९० ॥ निबध्यानयनं चैव तेनैव शिबिरं प्रति। मुञ्चेति द्रौपदीवाक्यं नेति भीमवचस्तथा ॥ १९१ ॥ कृष्णवाक्यान्मणिं हृत्वा देशान्निर्यापणं तथा। इत्यादि स्वप्नदृष्टं यत्प्रायः सत्यमभूदिति। चिन्तयन्प्रययौ दे(दा)वं द्रौणिः शस्त्रभृतां वरः ॥१९२॥ स कृष्णोक्तमपि प्राप्य बादरायणशिष्यताम्। प्राप्योत्तरद्वापरे च वेदान्संविभजिष्यति ॥ १९३ ॥ ततः सप्तऋषिर्भूत्वा पाराशर्यप्रसादतः। एकीभावं स्वरूपेण यास्यत्यच्युतनिष्ठया ॥ १९४ ॥

कृपोऽथ पाण्डवान्प्राप्य गौरवात्पूजितश्च तैः। अभूदाचार्य एवासौ राज्ञां तत्तंतुभाविनाम् ॥ १९५ ॥ बादरायणशिष्यत्वं पुनः प्राप्य भजन्प्रभुम्। साकं स्वभागिनेयेन भाव्येको मुनिसप्तके ॥१९६॥ कृतवर्मा द्वारवतीं ययौ कृष्णानुमोदितः ॥ १९७ ॥ कृष्णायै तं मणिं दत्वा भीमस्तां पर्यसान्त्वयत्। विकोपा भीमवाक्येन राज्ञे सा च मणिं ददौ ॥ १९८ ॥ राजार्हे च मणौ दत्ते मह्यं भीमेन लौकिकाः। स्त्रीपक्षपातं राजा च शङ्केयुर्मास्तेरिति ॥ १९९ ॥ मणिं राज्ञे ददौ कृष्णा भर्तृप्रियहिते रता। सोऽप्याबध्य मणिं मूर्ध्नि रेजे राजा गवामिव ॥ २०० ॥

वेदेश्वरेणापि यदूत्तमेन कृष्णेन युक्तास्तत आशु पार्थाः। ययुः सभार्या निजराजधानीं हत्वेव सन्तोऽन्तररीन्स्वराज्यम् ॥ २०१ ॥ युधिष्ठिरस्यानु विचित्रवीर्यसुतस्य पादावभिवन्दमानम्। आकृष्य भीमं परमेश्वरोऽयोमयाकृतिं धात्पुरतो नृपस्य ॥ २०२ ॥ भीमाकृतिं तां स सुयोधनेन कारायि(पि)तामभ्यसने गदायाः। आश्लिष्य चूर्णीकृतवान-



सृग्वमन्हा तात भीमेति वदन्पपात ॥ २०३ ॥ तमाह कृष्णो न हतोऽद्य भीमो न च त्वयाऽन्यैरपि शक्यतेऽसौ। हन्तुं स्वबुद्धिः प्रथिता त्वयाऽद्य पापा हि ते बुद्धिरद्यापि राजन् ॥ २०४ ॥ स्वबुद्धि-दोषादतिपापशीलपुत्राख्यपापानि विवर्धयित्वा। नीतो वशं तैः फलमद्य भुञ्जन्न क्रोधितुं चार्हसि भीमसेने ॥ २०५ ॥ इत्युक्ते शान्तबुद्ध्यैव राज्ञाऽऽहूतो वृकोदरः। अभ्यवन्दत तत्पादावनुजाद्याश्च तस्य ये ॥२०६॥ वज्राच्च दृढदेहत्वादविकारे वृकोदरे। न दोषो विवृतोऽस्य स्यादिति कृष्णेन वञ्चितः ॥ २०७ ॥ सर्वानाश्लिष्य च प्रेम्णा युयोज नृप आशिषः। कुलनाशकरः पापः शापयोग्यस्तव ह्यहम् ॥ २०८ ॥ इत्युक्त्वैव प्रणमतो गान्धारी सुपदाङ्गुलीः। ददर्श धर्मराजस्य पटान्तेन प्रकोपिता ॥ २०९ ॥ तस्याः क्रोधाग्निनिर्दग्धनखः स कुनखोऽभवत् ॥ २१० ॥ वन्दमानं पुनर्भीममाह सा क्रोधविह्वला। अधर्मतः कथं भीम सुतं मे त्वं निजघ्निवान् ॥ २११ ॥ इत्युक्तेऽस्याः शमयितुं क्रोधमग्रे वृकोदरः। प्राह न प्राणसन्देहे पापं स्यात्पापिनो वधे ॥२१२॥ इत्युक्त्वा तां पुनः प्राह प्रतिज्ञाहानिमन्तरा। न मेऽस्ति प्राणसन्देह इति जानन्वृकोदरः ॥ २१३ ॥ यथाप्रतिज्ञं भ्रातृव्यान्रणे मम निजघ्नुषः। कोऽ(का)धर्मः क्षत्रजातेस्तु तद्धानौ जीवनं नहि ॥ २१४ ॥ पापा न शुद्धधर्मेण हन्तव्या इति च श्रुतिः। अन्यवत्पापहननं (न ?) पापायेत्याह हि श्रुतिः ॥ अतोऽसुरान्नैकृतिकान्निकृत्या घ्नन्ति देवताः ॥ २१५ ॥ निकृत्या निकृतिं हन्यान्निकृत्या नैव धार्मि(कं)कान्। इति श्रुतिर्हि परमा पठ्यते पैङ्गिभिः सदा ॥२१६॥ इत्युक्ता तं पुनः प्राह कथं ते नरशोणितम्। पीतं नरेणैव सता न पीतमिति सोऽब्रवीत् ॥ २१७ ॥ दन्तान्तरं न मे प्राप शोणितं त्वत्सुतस्य तत्। प्रतिज्ञापालनायापि प्रतिकर्तुं च तत्कृतम् ॥ २१८ ॥ भीषणाय च शत्रूणां पीतवच्च प्रदर्शितम्। वेददृष्टश्च धर्मोऽयमि(म)ति पापजनं प्रति ॥ २१९ ॥

इत्युक्तोवाच नैवान्धद्वयस्यास्य वृकोदर । घ्नता पुत्रशतं यष्टिमात्रं चोर्वरितं त्वया ॥२२०॥ तामाह भीमः पापिष्ठा वधयोग्यापराधिनः । सर्वे हता इति पुनः साऽऽह येनाकृतस्तव । अपराधः स एकोऽपि किं नास्तीत्यवदत्स ताम् ॥ २२१ ॥ सर्वैः समेतैः कृष्णस्य बन्धनाय विनिश्चितम् ॥ २२२ ॥ अन्यानि च सुपापानि कृतान्यत्र पुराऽपि च । वासुदेवं सभासंस्थं ब्रुवाणं धर्मसंहिताम् ॥ २२३ ॥ पुनःपुनरवज्ञाय यान्तं दुर्योधनं बहिः । सर्वेऽन्वगच्छन्नित्यादीन्यभिप्रेत्य वृकोदरः ॥ २२४ ॥ नैकोऽप्यनपराधी मे स्वयंताननुशिक्षितुम् । असमर्था मयि क्रोधं किं करोषि निरर्थकम् ॥ २२५ ॥ इत्युक्ता साऽभवत्तूष्णीं क्रमात्सर्वैश्च पाण्डवैः । वन्दिता व्यासवाक्याच्च किञ्चिच्छान्ता च साऽभवत् ॥ २२६ ॥

तस्या याश्च स्नुषाः सर्वास्ताभिः सह पुरस्कृताम् । कृत्वा तं धृतराष्ट्रं च विदुरादींश्च सर्वशः ॥२२७॥ पाण्डवाः प्रधनस्थानं सभार्याः पृथया सह । कृष्णाभ्यां च ययुस्तत्र गान्धार्यास्तपसो बलम् ॥२२८॥ जानन्पाण्डवरक्षार्थं चिकीर्षुस्तत्तपो व्ययम् । वेदेश्वरो ददौ चक्षुर्दिव्यं सत्यवतीसुतः ॥२२९॥ तेन दृष्ट्वा प्रेतदेहान्सर्वांस्तत्र समाकुला(लान्) । शशाप यादवेशानं त्वयाऽस्मत्कुलनाशनम् ॥ यत्कृतं तत्तव कुलं गच्छत्वन्योन्यतः क्षयम् ॥२३०॥ इत्युक्तो भगवान्कृष्णः स्वचिकीर्षितमेव तत् । अस्त्वेवमित्याह विभुरीश्वरोऽप्यन्यथा कृतौ ॥ २३१ ॥ तेन तस्यास्तपो नष्टं हीना साऽतो हि भर्तृतः ॥ २३२ ॥ नाशयेद्धि स्वयं विष्णुः स्वयोग्यादधिकान्गुणान् ॥ २३३ ॥ तत आश्लिष्य भर्तॄणां देहान्प्ररुदतीः स्त्रियः । सर्वा दुर्योधनादीनां दर्शयामास केशवः ॥२३४॥ कृष्णायै सा च तं देवमस्तुवत्पूर्णषड्गुणम् । ततो देहान्प्रसिद्धानां पार्थाः समदहन्सताम् । अन्येषां धृतराष्ट्रादीन्पुरस्कृत्यैव कांश्चन ॥ २३५ ॥ सूतैः पञ्चभिरेव स्वैः सरस्वत्यां प्र(वि)चिक्षिपुः । स्नेहान्नृपो यमौ च स्नानाजौ तस्मिन्न्ययोजयन् ॥ शवाः प्रायो बहुत्वेन तत्र तत्रैव संस्थिताः ॥ २३६ ॥ ततो ददत्सु पानीयं गङ्गायां स्वजनस्य तु । पृथा कर्णाय दत्तेति पार्थानाहाग्रजं च तम् ॥ २३७ ॥ ततो हाहेति विलपन्राजा परमदुःखितः । शशाप सर्वनारीणां गुह्यं हृदि न तिष्ठतु ॥ ॥ २३८ ॥ हा मातस्तव धृत्यैव वयं सर्वे भृशं हताः । ज्येष्ठं पितृसमं हत्वा प्रतिपत्स्याम कां गतिम् ॥ २३९ ॥ एवं वदन्तं कौन्तेयं वासुदेवः सनारदः । शमयामास सद्वाक्यैर्गुणान्कर्णस्य चाब्रवीत् ॥२४०॥ ततस्ते प्रेतकार्याणि चक्रुः सर्वेऽपि सर्वशः । सर्वेषामधिराज्ये च स्थितोऽभूत्पाण्डवाग्रजः ॥ २४१ ॥ (४७०१) ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये दुर्योधनवधादिपाण्डवस्वपुरप्रवेशो नाम अष्टाविंशोऽध्यायः ॥ २८ ॥



---

## ॥ अथ एकोनत्रिंशोऽध्यायः ॥

॥ ॐ ॥ यदैव कृष्णौ सकलाधिराज्ये युधिष्ठिरं यौवराज्ये च भीमम् । विप्रैर्युतावभिषिच्याशिषश्च युक्ता दत्वा हर्षयामासतुस्तौ ॥१॥ तदैव चार्वाक इति प्रसिद्धं रक्षस्त्रिदण्डीयतिरेव भूत्वा । युधिष्ठिरं गर्हयामास विप्रास्त्वां गर्हयन्तीति सुपापशीलः ॥ २ ॥ श्रुत्वैव तद्दुःखितमाशु धर्मजं दृष्ट्वा विप्राः शेपुरसुं भृशार्ताः । अगर्हितं नित्यमस्माभिरेनं यतोऽवोचो गर्हितमद्य पाप ॥ भस्मीभवाश्वेव ततस्त्वितीरिते क्षणादभूत्पापतमः स भस्मसात् ॥ ३ ॥ भस्मीकृतेऽस्मिन्यतिवेषधारिणि युधिष्ठिरं दुःखितं वृष्णिसिंहः । प्रोवाच नायं यतिरुग्रकर्मा सुयोधनस्यैव सखा सुपापः । रक्षोऽधमोऽयं निहतोऽद्य विप्रैस्तन्मा शुचः कृतकार्योऽद्य राजन् ॥ ४ ॥ इतीरितः शान्तमनाः स विप्रान्सन्तर्पयामास धनैश्च

भक्त्या ॥ ५ ॥ असान्त्वयच्च बान्धवान्स्वपौरसंश्रयादिकान् । ददौ यथेष्टतो धनं ररक्ष चानुपूर्ववत् ॥ ६ ॥ स भीष्मद्रोणकर्णानां वधाद्दुर्योधनस्य च । पापशङ्की तप्यमानो राज्यत्यागे मनो दधे ॥ ७ ॥ सोऽनुजैः कृष्णया विप्रैरप्युक्तो धर्मशासनम् । भीमं सम्प्रार्थयित्वैव न वेत्सीत्याह फल्गुनम् ॥ ८ ॥ तस्मिन्क्रुद्धे नृपं प्राहुर्विप्रास्त्वत्तोऽपि धर्मवित् । शक्रोऽर्जुन इति श्रुत्वाऽप्येतद्धर्मे ससंशयम् ॥९॥ मत्स्नेहादेव सर्वेऽपि धर्मोऽयमिति वादिनः । इत्येवं शङ्कमानं तमूचतुर्विप्रयादवौ ॥ १० ॥ कृष्णौ धर्मोऽयमित्येव शास्त्रयुक्त्या पुनःपुनः । नातिनिश्चितबुद्धिं तं तदाऽपि पुरुषोत्तमौ ॥ ११ ॥ हतपक्षगतत्वेन त्वच्छङ्काया अगोचरः । यतो भीष्मस्ततो याहि तमित्यूचतुरव्ययौ ॥ ॥ १२ ॥

स ताभ्यां भ्रातृभिश्चैव मुनिभिश्च समन्वितः । भीष्मं ययौ लज्जितेऽस्मिंस्तं भीष्मायाह केशवः ॥ १३ ॥ पृच्छेत्युक्तः स भीष्मेण पप्रच्छाखिलमञ्जसा । अत्रोवाचाखिलान्धर्मान्कृष्णो भीष्मशरीरगः ॥ ॥१४॥ भीष्मोऽप्याह हरिं पार्था बोधनीयास्त्वयैव हि । का शक्तिर्मम देवेश पार्थान्बोधयितुं प्रभो ॥१५॥ इत्युक्तो भगवानाह त्वत्कीर्त्यै त्वयि संस्थितः । प्रवक्ष्याम्यखिलान्धर्मान्सूक्ष्मं तत्त्वमपीति ह ॥१६॥ राज्ञः प्रथमतो धर्मो भगवद्धर्मपालनम् । तदर्थं कण्टकोद्धारो धर्मा भागवता अपि ॥ १७ ॥ मनोवाक्कर्मभिर्विष्णोरच्छिद्रत्वेन चार्चनम् । पूर्णाशेषगुणो विष्णुः स्वतन्त्रश्चैक एव तु ॥ तद्वशं सर्वमन्यच्च सर्वदेति विनिश्चयः ॥ १८ ॥ देवताक्रमविज्ञानमपूजाऽन्यस्य वै हरेः ॥ १९ ॥ पूजा भागवतत्वेन देवादीनां च सर्वशः । वृथा कर्माकृतिः क्वापि निराशीस्त्वं सदैव च ॥ २० ॥ विष्णोर्भागवतानां च प्रतीपस्याकृतिस्सदा । परस्परविरोधे तु विशिष्टस्यानुकूलता ॥ २१ ॥ प्रियं विष्णोस्तदीयानामपि सर्वं समाचरेत् । धर्ममप्यप्रियं तेषां नैव किञ्चि-



त्समाचरेत् ॥ २२ ॥ साम्ये विरोधे च बहूननुवर्तेत वैष्णवान् । एते साधारणा धर्मा ज्ञेया भागवता इति ॥ २३ ॥ तत्त्वविज्ञापनं धर्मो विप्रस्य तु विशेषतः । शारीरदण्डसन्त्यागः पुत्रभार्यादिकानृते ॥२४॥ तत्रापि नाङ्गहानिः स्याद्वेदना वा चिरं न तु । न चार्थदण्डः कर्तव्यो विप्रवैश्यादिभिः क्वचित् ॥ २५ ॥ शारीरदडण्डविषये वैश्यादीनां च विप्रवत् । यथालब्धेन वर्तेत भिक्षया वा द्विजोत्तमः ॥ २६ ॥ शिष्ययाज्योपलब्धैर्वा क्षत्रधर्मेण वाऽऽपदि । महापदि विशां धर्मः क्षत्रियः सुरविप्रयोः ॥ २७ ॥ अन्यत्र सर्ववित्तेन वर्तेतैतांश्च पालयन् । विरोधिनः क्षत्रियाच्च प्रसह्यैव हरेद्धनम् ॥ २८ ॥ सामादिक्रमतो धर्मान्वर्तयेद्दण्डतोऽन्ततः । अपलायी सदा युद्धे सतां कार्यमृते क्वचित् ॥ २९ ॥ कृषिवाणिज्यगोरक्षाकुसीदं वैश्यजीवनम् । परिचर्यैव शूद्रस्य वृत्तिरन्ये स्वपूर्ववत् ॥ ३० ॥ वर्तेयुर्ब्राह्मणाद्याश्च क्रमात्पूज्या हरिप्रियाः । हरिभक्तावनुच्चस्तु वर्णोच्चो नातिपूज्यते ॥ ३१ ॥ विना प्रणामं पूज्यस्तु वर्णहीनो हरिप्रियः । आदरस्तत्र कर्तव्यो यत्र भक्तिर्हरेर्वरा ॥ ३२ ॥ ज्ञापनं क्षत्रियाणां च धर्मो विप्राभ्यनुज्ञया । तदभावे तु वैश्यानां शूद्रस्य परमापदि ॥ ३३ ॥ वर्णेष्वज्ञेष्ववर्णस्तु न ज्ञानी स्यात्कथञ्चन । इति श्रुतेरवर्णस्य ज्ञापनप्राप्तिरेव न ॥ ३४ ॥ ज्ञेयं सर्वं त्रिवर्णस्थैः स्त्रीभिर्वेदान्विनाऽखिलम् । स्वीयपुन्नियतिः स्त्रीणां स्वदारनियतिर्नृणाम् ॥ ३५ ॥ धर्मो गुणोत्तमानां तु स्मृत्यैवान्धन्तमो व्रजेत् । गुणसर्वस्वहानिः स्यादुत्तरोत्तरतोऽत्र च ॥ ३६ ॥ अधोऽधोऽधिकदोषः स्यात्स्त्रीणामन्यत्र मध्यतः । वेदा अप्युत्तमस्त्रीभिः कृष्णाद्याभिरिवाखिलाः ॥ ३७ ॥ देव्यो मुनिस्त्रियश्चैव नरादिकुलजा अपि । उत्तमा इति विज्ञेयाः सच्छूद्रैरप्यवैदिकम् । ज्ञेयमन्यैर्हरेर्नाम निजकर्तव्यमेव च ॥ ३८ ॥ सर्वथान्धन्तमो याति वरं सदृशमेव च । यो विष्णोर्मन्यते किञ्चिद्गुणैः कैश्चिदपि क्वचित् ॥३९॥ ब्रह्मेशानादि-

कमपि भेदं वा यो न मन्यते। भेददृक्तद्गुणादौ वा प्रादुर्भावगतेऽपि यः ॥ ४० ॥ प्राकृतं देहमथवा दुःखाज्ञानश्रमादिकम्। मन्यते तारतम्यं वा तद्भक्तेष्वन्यथैव यः ॥ ४१ ॥ मनोवाक्तनुभिर्यो वा तस्मिंस्तद्भक्त एव वा। विरोधकृद्विष्ण्वधीनादन्यत्किञ्चिदपि स्मरन् ॥ ४२ ॥ अन्याधीनत्वविद्यास्य सर्वपूर्त्यविदेव च। भक्तिहीनाश्च ते सर्वे तमोऽन्धं यान्त्यसंशयम् ॥ ४३ ॥ तत्त्वे संशय युक्ता ये सर्वे ते निरयोपगाः। दोषेभ्यस्ते गुणाधिक्ये नैव यान्त्यधमां गतिम् ॥ ४४ ॥ गुणदोषसाम्ये मानुष्यं सर्वदैव पुनःपुनः। यावद्दोषक्षयश्चोर्ध्वा गतिः क्रमश एव तु ॥ ४५ ॥ सर्वदोषक्षये मुक्तिरात्मयोग्यानुसारतः। भक्तिज्ञानोन्नतावेव स्वर्गश्च शुभकर्मणः ॥ ४६ ॥ इत्यादि धर्मसर्वस्वं भीष्मस्थेनैव विष्णुना ॥४७॥ पार्थानां गदितं

तत्तु श्रुत्वा धर्मसुतोऽनुजान्। पप्रच्छ विदुरं चैव सारं धर्मादिषु त्रिषु ॥ ४८ ॥ आह क्षत्ता धर्ममेव सारमर्थं च मध्यमम्। नीचं कामं निष्फलत्वादर्थमेवार्जुनोऽब्रवीत् ॥ ४९ ॥ सारं स द्विविधो ज्ञेयो दैवो मानुष एव च। दैवो विद्या हिरण्यादिर्मानुषः परिकीर्तितः ॥ ॥ ५० ॥ मध्यमो धर्म एवात्र साध्यं साधनमेव च। विद्याह्वयोऽर्थो धर्मस्य विद्ययैव विमुच्यते ॥ ५१ ॥ मानुषोऽर्थोऽपि विद्यायाः कारणं सुप्रयोजितः। तुष्टोऽर्थेन गुरुर्यस्मात्कैवल्यं दातुमप्यलम् ॥ ५२ ॥ धर्मार्थतां विनाप्यर्थैस्तुष्येयुर्गुरुदेवताः। यद्यनुद्देशितो धर्मोऽप्यर्थमेवानुसंव्रजेत् ॥५३॥ गुरुताऽर्थगतैव स्यात्कामोऽधस्ताद्धि निष्फलः। यमावत्र विदांश्रेष्ठावर्जुनोक्तमनूचतुः ॥ ५४ ॥ अथाह भीमः प्रवरः सुतत्त्वदर्शा समस्तानभिभाष्य हर्षात्। स्मयन्न कामादतिरिक्तमस्ति किञ्चिच्छुभं क्वावरतां स यायात् ॥ ५५ ॥ काम्यं हि कामाभिधमाहुरार्याः काम्याः पुमर्थाः सहसा घनैर्यत्। अकाम्यतां यात्यपुमर्थ एव पुमर्थितत्वाद्धि पुमर्थ उक्तः ॥ ५६ ॥ विज्ञानभक्त्यादिकमप्यतीव-



तत्साधनं काम्यबहिष्कृतं चेत्। न साधनं स्यात्परमोऽपि मोक्षो न साध्यतां याति विना हि कामात् ॥५७॥ परात्परोऽप्यादिपुमान्हरिश्च स्वस्येतरेषामपि काम्य एव। अकामितोऽवाग्गतिमेव दद्यात्कामः पुमर्थोऽखिल एव तेन ॥ ५८ ॥ इच्छैव कामोऽस्तु तथापि नैतामृते हि चित्त्वं(त्तं) घटकुड्यवत्स्यात्। सारस्ततः सैव चिदात्मिकापि सा चेतना गूढतनुः सदैव ॥ ५९ ॥ न प्रश्नयोग्यः पृथगेव कामस्तेनैष राजन्यदि तारतम्यम्। इच्छस्ययं ते त्रिविधो हि वेद्यो धर्मार्थयुक्तः परमो मतोऽत्र ॥६०॥ एकाविरोधी यदि मध्यमोऽसौ द्वयोर्विरोधी तु स एव नीचः। तस्मात्स्वबुद्धिप्रमदाभिरेव कामं रमेथा अनुरूपकामः ॥६१॥ राजन्न कामादपरं शुभं हि परो हि कामो हरिरेव येन। प्राज्ञः सुहृच्चन्दनसारलिप्तो विचित्रमाल्याभरणैरुपेतः ॥ इदं वचो व्याससमासयुक्तं सम्प्रोच्य भीमो विरराम वीरः ॥ ६२ ॥ प्रशस्य भीममन्यांश्च राजा मोक्षमथास्तुवत्। स्वयुक्तेरप्रतीपत्वान्निराचक्रे न मारुतिः ॥ ॥ ६३ ॥ (४७६४) ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये धर्मसारनिरूपणं (समस्तधर्मनिर्णयो) नाम एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

## ॥ अथ त्रिंशोऽध्यायः ॥

॥ ॐ ॥ अथ कृष्णमनुस्मृत्य भीष्मे स्वां वसुतां गते। कृत्वा कार्याणि सर्वाणि गङ्गामाश्वास्य दुःखिताम् ॥ १ ॥ आश्वासितश्च कृष्णाभ्यां धर्मजो दुःखितः पुनः। पराशरसुतेनोक्तः कृष्णेनानन्तराधसा ॥ २ ॥ अपापे पापशङ्कित्वादश्वमेधैर्यजाच्युतम्। कुरुष्व(कुरु) राज्यं (च) धर्मेण पालयापालकाः प्रजाः ॥ ३ ॥ इत्युक्तः स तथा

चक्रे त्यक्त्वा भोगांश्च कृत्स्नशः । गोव्रतादिव्रतैर्युक्तः पालयामास मेदिनीम् ॥ ४ ॥ ददौ देयानि मुख्यानि यथाकाममखण्डितम् । नैवार्थी विमुखः कश्चिदभूद्योग्यः कथञ्चन ॥ ५ ॥ प्रष्टा च दाताऽखिलराजनम्यो यष्टा च धर्मात्मज एव तत्र । बभूव पाण्डोर्गृहमावसंश्च राजाधिराजो वनितानिवृत्तः ॥ ६ ॥

भीमस्तु दौर्योधनमेव सद्म प्रपेदिवानूर्जितवीर्यलब्धम् । कृष्णासहायः सुरराजयोग्यानभुङ्क्त भोगान्युवराज एव ॥ ७ ॥ कृष्णा च पार्थांश्चतुरो विहाय सुव्यक्तसारस्वतशुद्धभावा । रराज राजावरजेन नित्यमनन्ययोगेन शिखेव वह्नेः ॥ ८ ॥ प्रीत्यैव विज्ञानयुजाऽन्यपार्थैः संवादतः परिहृता गतभाविकाले । अपि स्वकीयं पतिमेव भीममवाप्य सा पर्यचरन्मुदैव ॥ ९ ॥ रराज राजावरजस्तया स द्विरूपया सोमककाशिजातया । श्रिया भुवा चैव यथाऽब्जनाभो निहत्य सर्वान्दितिजान्पयोऽ(महा)ब्धौ ॥१०॥ सर्वोत्तुङ्गो नामतः प्राणवायोरंशो निशायां गुरुपुत्रस्तूदितः । माताऽस्य देवीति च रौहिणेयी भीमप्रियाऽऽसीद्य पुरा सैव(ऽस्यैव) राका ॥ ११ ॥ अन्याश्चासुर्वासुदेव्यो दिशो या आपश्च पूर्वं विंशतिरग्र्यरूपाः । ताभिर्युक्तो दैवतैरप्यलभ्यानभुङ्क्त भोगान्विबुधानुगार्चितः ॥ १२ ॥ ररक्ष धर्मानखिलान्हरेः स निधाय विप्राननुशास्य युक्तान् । सद्वैष्णवान्विदुषः पञ्चपञ्च सवेतनान्ग्राममनु स्वकीयान् ॥ १३ ॥ दधार दण्डं तदवर्तिषु स्वयं जग्राह चान्वेव मुदाऽथ तद्व(द्वत)ान्। तद्वृत्तमन्यैरपि विप्रवर्यैः संशोधयन्सर्वमसौ यथाव(व्यधा)त् ॥ १४ ॥ नावैष्णवः कश्चिदभूत्कुतश्चिन्नैवान्यनिष्ठो न च धर्महन्ता । न विध्यवर्ती न च दुःखितोऽभून्नापूर्णवित्तश्च तदीयराष्ट्रे ॥ १५ ॥ वासिष्ठवृष्णिप्रवरौ प्रपश्यतां ताभ्यां च भीमेन मुनीश्वरैश्च । संशिशितानां प्रथमाद्युगाच्च गुणाधिकः कलिरासीत्प्रजानाम् ॥ १६ ॥ शुभं महत्स्वल्पफलं कृते हि विपर्ययेणाशुभमेष दोषः । तद्धीनमप्युच्चशुभं



कृताद्युगाच्चक्रे कलिं मारुतिरच्युताश्रयात् ॥ १७ ॥

धनञ्जयः प्रोद्यतदण्ड आसीत्सदाऽन्यचक्रेषु निजाग्रजेरितः । विभीपयित्वा नृपतीन्सरत्नान्पदोर्नृपस्याग्रभुवो न्यापतयत् ॥ १८ ॥ तदैव कृष्णस्य मुखारविन्दाद्विनिःसृतं तत्त्वविनिर्णयामृतम् । पिबन्सुताद्याधिमसौ क्रमेण त्यजंश्च रेमे(ऽ)विरतातिभोगः ॥ १९ ॥ दुःशासनस्यावसथं सुभद्राचित्राङ्गदासहितोऽध्यावसंश्च । सचन्द्रिकाकान्तिरनूनबिम्बो नभःस्थितश्चन्द्र इवात्यरोचत्(त) ॥ २० ॥ समस्तभृत्याश्रितवेतनानां माद्रेय आसीत्प्रथमः प्रदाता । स दुर्मुखस्यावसथेऽवसच्च समद्रराजात्मज(याऽ)अग्रयवर्ती ॥२१॥ सन्धानभेदानुगतप्रवृत्तिस्तिष्ठंश्च दुर्मर्षणशुभ्रसद्मनि । नृपाङ्गरक्षः प्रगृहीतखड्गस्तस्यानुजो मागधकन्ययाऽऽसीत् ॥ २२ ॥ सेनापतिः कृप आसीद्युयुत्सुः ससञ्जयो विदुरश्चाम्बिकेयम् । पार्थैरिताः पर्यचरन्स्वयं च सर्वे यथा दैवतमादरेण ॥ ॥ २३ ॥

द्विरूपकृष्णप्रहितेषु पाण्डुषु क्षितिं प्रशासत्सु न कश्चनातुरः । न चाक्रमान्मृत्युरभून्न नार्यो विभर्तृका नो विधुरा नराश्च ॥ २४ ॥ शब्दादयश्चासुरतीवहृद्या निकामवर्षी च सुरेश्वरोऽभूत् । प्रजा अनास्पृष्टसमस्ततापा अनन्यभक्त्याऽच्युतमर्चयन्ति ॥ २५ ॥ पृथ्वी च गावः ससरस्वतीका निकामदोहा अभवन्सदैव । अब्दाब्धिनद्यो गिरिवृक्षजङ्गमाः सर्वेऽपि रत्नप्रभवा बभूवुः ॥ २६ ॥ कृष्णाश्रयात्सर्वमिदं वशे ते विधाय सम्यक्परिपालयन्तः । दिवीव देवा मुमुदुः सदैव मुनीन्द्रगन्धर्वनृपादिभिर्युताः ॥ २७ ॥ समुज्ज्वला पाण्डवकीर्तिनारी पदं निधायासुरपक्षमूर्धसु । वराभये चैव सतां कराभ्यां कृष्णप्रसूता जगदण्डमावृणोत् ॥ २८ ॥ पातालपादां पृथिवीनितम्बामाकाशमध्यां करसन्तताशाम् । ग्रहर्क्षताराभरणां द्युवक्षसं विरिञ्चलोकस्थलसन्मुखाम्बुजाम् ॥ २९ ॥ विकुण्ठनाथाभयहस्तमादरान्मूर्ध्ना वहन्तीं वरभारताख्याम् ।

निशम्य तामीक्ष्य समस्तलोकाः पवित्रिता वेदिभवामिवान्याम् ॥३०॥
प्रपालयत्स्वेव धरां सकृष्णेष्वद्धैव पार्थेषु कलिर्बलिश्च । सुपाप-
दैत्यौ क्व च राष्ट्रविप्लवं सश्चक्रतुस्तच्छ्रुतमाशु पार्थैः ॥ ३१ ॥ नृपेण
कृष्णेन च साधु चोदितो भीमस्तदा तौ सगणौ विजित्य । बलिं
प्रविद्राव्य कलिं निबध्य समानयत्कृष्णनृपेन्द्रयोः पुरः ॥ ३२ ॥
पप्रच्छ तं कृष्णपुरो युधिष्ठिर उदारधीः। कले किमिति मे राष्ट्रं
विप्लावयसि दुर्मते ॥ ३३ ॥ इत्युक्त आह कालोऽयं दुर्योधननिपातनम् ।
आरभ्य मम तत्र त्वं बलादाक्रम्य तिष्ठसि ॥ ३४ ॥ ततो मया कृतो
राष्ट्रविप्लवस्ते नराधिप । तमाह राजा राज्ञां हि बलाद्राज्यं प्रवर्तते
॥ ३५ ॥ अपि कालभवं राष्ट्रं त्वदीयं मादृशैर्नृपैः । ह्रियते बलवद्भिर्हि
राज्याशा ते कुतस्तदा ॥ ३६ ॥ कालो वा कारणं राज्ञो राजा वा
कालकारणम् । इति ते संशयो मा भूद्राजा कालस्य कारणम् ॥ ३७ ॥
तमुवाच कलिः काले मदीये त्वादृशः कुतः । राजानं पूर्वमाविश्य
विप्रांश्च स्यामहं नृप ॥ ३८ ॥ वासुदेवसहायेषु तेजो युष्मासु मे नहि ।
क्व राजाऽसावृते युष्मान्यो मया नाभिभूयते ॥ ३९ ॥ मदीयकाले
भूपाल विप्रदेवविरोधिनि । मद्दृष्टिपाते क्व गुणाः क्व वेदाः क्व
सुयुक्तयः ॥ ४० ॥ जगाद नृपतिः सत्यं कले वक्ष्यनृतोऽपि सन् ।
मोचये त्वार्तवचनाद्यदाऽस्मत्सन्ततेः परम् ॥४१॥ विलुम्पस्यखिलान्धर्मान्
करं तत्रापि नोऽर्पय । सीमाधिर्बहुवाक्यं च तुलामाने च मे करः
॥ ४२ ॥ नैवातिक्रममेतेषां कुरु सर्वात्मना क्वचित् । तमाह भगवा-
न्कृष्णो यावत्पाण्डवसन्ततिः ॥ ४३ ॥ तावन्न ते भवेच्छक्तिः प्रवृत्त-
स्यापि भूतले । पाण्डवेभ्यः परं यावत्क्षेमकः क्रमवर्धिता ॥ ४४ ॥
क्षेमकात्परतः पूर्तिं शक्तिस्ते यास्यति ध्रुवम् । न द्रष्टव्यं
भूतलं ते कुत एव स्पृशेर्ध्रुवम् ॥ ४५ ॥ यावत्पार्था अहं चात्र
ततो भुवि पदं कुरु । इत्युक्तो वासुदेवेन मोचितो धर्मजेन च ॥४६॥



तान्प्रणम्य ययौ पारे समुद्रस्याश्रयद्गुहाम् । पार्थाश्च कृष्णसहिता रक्षन्तः
क्ष्मां मुदं ययुः ॥ ४७ ॥
एवं पार्थान्प्रतिष्ठाप्य शक्रप्रस्थे तु सार्जुनः । क्रीडन्दिव्याः कथाः
प्राह पुत्रशोकापनुत्तये ॥ ४८ ॥ गीतोक्तं विस्मृतं चास्मै पुनर्विस्तर-
तोऽवदत् । वाणी प्राणो वासुदेव इत्येतैरखिलं ततम् ॥ ४९ ॥
सर्वोत्तमत्वमेतेषां सर्वमेतद्वशे जगत् । उत्तरोत्तरमेतेऽपि गुणोच्चास्तद्वशे
परे ॥ ५० ॥ इत्थं हरेर्वशे सर्वं गुणपूर्णश्च स प्रभुः । एक एव
न चान्योऽस्ति प्राणोच्चा तदधो रमा ॥ ५१ ॥ स हुताश इति प्रोक्तो
हुतमत्त्यखिलं यतः । वाक्प्राणमध्यगो नित्यं धारयत्यखिलं जगत्
॥ ५२ ॥ स ईशो ब्रह्मरुद्राद्या जीवा एव प्रकीर्तिताः । एतस्यानादि-
सद्भक्ता मुक्तियोग्या हि ते स्मृताः ॥ ५३ ॥ अनादिद्वेषिणो
येऽस्मिंस्तमोयोग्याः सुपापिनः । मिश्रा मध्या इति ज्ञेयाः संसार-
परिवर्तिनः ॥ ५४ ॥ एवं जीवास्त्रिधा प्रोक्ता भवन्त्येते न चान्यथा ।
तारतम्यं च विज्ञेयं लिङ्गैर्दैहिकमानसैः ॥ ५५ ॥ विष्णोर्लिंगानु-
सारित्वात्तारतम्यात्तदीक्षणम् । विष्णोस्तदनुगानां च प्रीतिकृद्धर्म ईरितः
॥ ५६ ॥ अधर्मोऽन्य इयं निष्ठा प्रलापः किङ्करिष्यति । एवमाद्य-
नुशास्याजः पार्थं पार्थैः सुसत्कृतः ॥ ५७ ॥ कथञ्चित्तानवस्थाप्य
सुदूरानुगतान्प्रभुः । सुभद्रासहितः प्रायाद्यानेन द्वारकां पुरीम् ॥५८॥
समाधिविरतोदङ्कपरिपृष्टः पथि प्रभुः । हतं दुर्योधनं प्राह
सभ्रातृसुतसैनिकम् ॥ ५९ ॥ तं शिष्यवधकोपेन शप्तुमात्मानमुद्यतम् ।
केशवोऽशमयद्वाक्यैर्विश्वरूपं प्रदर्श्य च ॥ ६० ॥ मद्भक्तो नितरामेष
मदाराधनतत्परः । मामवज्ञाय निरयमनुत्थानं व्रजेदिति ॥ ६१ ॥
कृपया वासुदेवेन बोधितः शान्तमानसः । पश्चात्तापाभितप्तात्मा तमेव
शरणं ययौ ॥ ६२ ॥ तस्मै देवोऽभयं दत्वा प्रेपयिष्येऽमृतं तव ।
दातुं शक्रमिति प्रोक्त्वा ययौ द्वारवतीं प्रभुः ॥ ६३ ॥ अथादिदेश

देवेशं वासुदेवोऽमृतं मुनेः। देहीति वञ्चयिष्यामीत्याह सोऽपि क्षमापयन् ॥ ६४ ॥ ओमित्युक्तो भगवता तत्स्नेहात्स शचीपतिः। सुजुगुप्सितमातङ्गवेषो भूत्वा मुनिं ययौ ॥ ६५ ॥ मूत्रस्रोतसि सौधं च निधाय कलशं वशी। मूत्रयन्निव तं प्राह वासुदेवः सुधामिमाम् ॥ ६६ ॥ महर्षे प्रेषयामास तवार्थे तां पिबेति च। स मूत्रमिति मत्वा तं याहीत्येवाह भर्त्सयन् ॥ ६७ ॥ वञ्चयित्वैव तं शक्रो ययौ प्रीतः स्वमालयम्। असाधारणमन्नं हि देवानाममृतं सदा। अन्य-पीतिस्ततस्तस्य देवानां परमाप्रिया ॥ ६८ ॥ आत्मदत्तप्रसादाच्च स्वापराधात्प्रचालिते। उदङ्के वासुदेवस्तु युक्तमित्येव मन्यते ॥ ६९ ॥

स्वपुरीं प्राप्य यदुभिः पूजितः शूरसूनवे। वृत्तान्तं कथयामास केशवो यदुसंसदि ॥ ७० ॥ वधमन्तरितं सूनोः सात्वतेशेन सात्वती। प्रणम्य कथयेत्यूचे तत आह जनार्दनः ॥ ७१ ॥ ततः सुदुःखिताः शूरपुत्राद्या अभिमन्यवे। श्राद्धदानानि बहुशश्चक्रुः केशवसंयुताः ॥ ७२ ॥

निवसत्यत्र देवेशे धर्मराजः क्रतूत्तमम्। अश्वमेधमनुष्ठातुं नाविन्दद्वित्तमञ्जसा ॥ ७३ ॥ हतशेषात्क्षात्रसङ्घात्करं नैच्छद्दयापरः। न च मध्यमकल्पेन यष्टुं तस्य मनो गतम् ॥ ७४ ॥ विज्ञाय नित्य-विज्ञातनिखिलो बादरायणः। आविर्भूतो हिमवतः शृङ्गं यत्राभि-सङ्गतम् ॥ ७५ ॥ मेरुशृङ्गेण यत्रैव विष्णुः स्वात्मानमव्ययम्। लोकस्य सङ्ग्रहायेजे कर्मबन्धोज्झितोऽपि सन् ॥ ७६ ॥ शङ्कराद्याः सुरा यत्र मरुतश्चेजिरे हरिम्। दानवो वृषपर्वा च तत्रास्ति धनमक्षयम् ॥ ७७ ॥ तच्छङ्करशरीरस्थं जामदग्न्यं हरिं परम्। इष्ट्वैवानुज्ञया तस्य स्वीकृत्य यज तेन च ॥ ७८ ॥ इत्याह व्यासवाक्यात्तु भीमोऽ-प्याह (नृपोत्तमं) युधिष्ठिरम् ॥७९॥ धनस्य देवता विष्णुर्जामदग्न्योऽ-खिलेश्वरः। स शङ्करशरीरस्थो यज्ञोच्छिष्टधनाधिपः ॥ ८० ॥ तेनैव



विष्णुना दत्तमर्जुनायास्त्रमुत्तमम्। कार्याण्यन्यानि चास्माकं कृतान्येतेन विष्णुना ॥ ८१ ॥ स ब्रह्मरुद्रशक्रादिपददाताऽखिलेश्वरः। स्वतन्त्रः परतन्त्रांस्तानावर्तयति चेच्छया ॥ ८२ ॥ प्रियोऽस्माकं प्रियास्तस्य सर्वदैव वयं नृप। अतस्तदभ्यनुज्ञातधनेनैव यजामहे ॥ ८३ ॥ सोऽयं पितामहोऽस्माकं व्यासस्तन्नः प्रदास्यति। इत्युक्त्वा तं पुरस्कृत्य कृष्णद्वैपायनं ययुः ॥ ८४ ॥ धनं कृष्णः समादाय समन्ताच्छत-योजनम्। ददौ तेषां तेऽपि चोहुर्हस्त्यश्वोष्ट्रनरादिभिः ॥ ८५ ॥ युधिष्ठिरमृते सर्वे भीमसेनपुरोगमाः। यज्ञार्थमूहिरे भूरि स्वर्णमुद्यद्रवि-प्रभम् ॥ ८६ ॥

तदैव वासुदेवोऽपि सभार्यः ससुभद्रया। आगच्छद्धस्तिनपुरं पथ्युदङ्केन पूजितः ॥ ८७ ॥ तत्कामवर्षिणो मेघांस्तस्य दत्वोदकार्थिनः। सफलं स्ववरं कृत्वा जगाम गजसाह्वयम् ॥ ८८ ॥ असन्नेष्वेव पार्थेषु व्यासे च पुरुषोत्तमे। प्रविवेश पुरं कृष्णस्तदाऽसूतोत्तरा मृतं ॥ ८९ ॥ द्रौण्यस्त्रसूदितं बालं दृष्ट्वा कुन्त्यादिकाः स्त्रियः। शरण्यं शरणं जग्मुर्वासुदेवं जगत्पतिम् ॥ ९० ॥ प्रत्यक्षमात्मना गर्भे रक्षितं प्रसवे हतम्। पुनरुज्जीवयामास केशवः पार्थतन्तवे ॥ ९१ ॥ तदैव विविशुः पार्थाः सकृष्णाः सधनोच्चयाः। सर्वे मुमुदिरे दृष्ट्वा पौत्रं केशवरक्षितम् ॥ ९२ ॥ ददौ दानानि बहुशो धर्मपुत्रो युधिष्ठिरः। पौत्रजन्मनि हृष्टात्मा वासुदेवं ननाम च ॥ ९३ ॥ कुन्तीकृष्णासुभद्रा-भिर्वैराट्यादिभिरेव च। पाण्डवैः पुरुषैरन्यैः संस्तुतः प्रणतो हरिः ॥ ९४ ॥

ततः कृष्णाभ्यनुज्ञाताः पाराशर्यसदस्यकाः। आरेभिरेऽश्वमेधं ते मुनिभिर्ब्रह्मवादिभिः ॥ ९५ ॥ सर्वयज्ञात्मकं तेषामश्वमेधं जगत्पतिः। कारयामास भगवान्कृष्णद्वैपायनः स्वयम् ॥ ९६ ॥ साधनानि च सर्वाणि शालां चैव हिरण्मयीम्। पवमानसुतश्चक्रे कृष्णद्वैपायनेरितः

॥ ९७ ॥ अथानुमन्त्रितोत्सृष्टं पुरोहितपुरस्कृतम् । तुरङ्गं कृष्णसारङ्गमनुवव्राज वासविः ॥ ९८ ॥ स जित्वा रुन्धतः सर्वान्नृपतीञ्छस्त्रतेजसा । चारयामास सर्वेषु राष्ट्रेष्वविजितोऽरिभिः ॥ ९९ ॥ युधिष्ठिराज्ञया तेन न कश्चिन्निहतस्तदा । आहूताश्च नृपास्तेन यज्ञार्थं प्रीयताऽखिलाः ॥ १०० ॥ मळूरं क्रमात्प्राप्तस्तत्रैनं बभ्रुवाहनः । अभ्ययादर्घ्यपाद्याद्यैस्तमाह विजयः सुतम् ॥ १०१ ॥ योद्धुकामोऽर्घ्यमादाय त्वयाद्याभिगतो ह्यहम् । न प्रीये पौरुषं धिक्ते यन्मेध्याश्वो न वारितः ॥ १०२ ॥ तदाऽपि पितृभक्त्यैनमयुध्यन्तमुलूपिका । आह युध्यस्व तत्प्रीत्यै गुरोः कार्यमसंशयम् ॥ १०३ ॥ प्रीणनायैव युध्यस्व पित्रे सन्दर्शयन्बलम् । इत्युक्तो युयुधे पित्रा बलं सर्वं प्रदर्शयन् ॥ १०४ ॥ अर्जुनस्तु सुतस्नेहान्मन्दं योधयति स्मयन् । स तु सर्वायुधक्षेपेऽप्यविकारं धनञ्जयम् ॥ १०५ ॥ दृष्ट्वा बाल्यात्परीक्षायै मन्त्रपूतं महाशरम् । चिक्षेप पित्रे दैवेन तेनैनं मोह आविशत् ॥ १०६ ॥ मूर्च्छितं तं गुरुं दृष्ट्वा तद्भक्त्या भृशदुःखितः । प्रायोपविष्टस्तन्माता विललापातिदुःखिता ॥१०७॥ विजगर्ह तदोलूपी धिग्जगत्त्रयपूजितम् । अजीघनो मे भर्तारं पुत्रेणैवाविजानता ॥१०८॥ लोकवीरं पतिं हत्वा न मे कार्यं सुतेन च । पतिलोकमहं यास्ये तृप्ता भव कलिप्रिये ॥१०९॥ इत्युक्त्वा मरणायैव तां विनिश्चितमानसाम् । धरायां विलुठन्तीं च दृष्ट्वा भुजगनन्दिनी ॥ ११० ॥ नागलोकात्समादाय विशल्यकरणीं क्षणात् । उत्थापयामास पतिं त्रिलोकातिरथं तया ॥ १११ ॥ प्रहस्योवाच च तदा श्रुतं वाक्यं पुरा मया । सुरलोके सुरैः प्रोक्तं भीष्माद्या नातिधर्मतः । यद्धतास्तेन दोषेण पार्थस्तेनातिवेदनाम् ॥ ११२ ॥ रणे व्रजेदिति न तत्परतः स्यादिति ह्यहम् । वचनादेव देवानां युध्येत्यात्मजमब्रुवम् ॥ ११३ ॥ देवानामेव संकल्पान्मूर्च्छितश्चार्जुनोऽभवत् । भुक्तदोषफलश्चायं पुनर्भोक्ष्यति



नान्यतः ॥ ११४ ॥ अन्येन पतितस्यास्य यशो नश्येत्त्रिलोकगम् । नार्जुनस्य यशो नश्येदिति देवैरिदं कृतम् ॥ ११५ ॥ इत्युक्तः प्रीतिमापेदे पुत्रभार्यायुतोऽर्जुनः । यज्ञार्थं तावथाहूय पूजितः प्रययौ ततः ॥ ॥ ११६ ॥

द्वारकायाः समीपस्थं प्रद्युम्नाद्याः सुता हरेः । प्रसह्याश्वमथाजहुराह्वयन्तोऽर्जुनं युधे ॥ ११७ ॥ सुभद्राहरणं मार्ष्टुं नीतेऽश्वे तैर्धनञ्जयः । गौरवाद्वासुदेवस्य मातुलस्य च केवलम् ॥ ११८ ॥ मातुलायाब्रवीदश्वं हृतं पौत्रैरबन्धुवत् । स निर्भर्त्स्य कुमारान्स्तान्मेध्यमश्वममोचयत् ॥ ११९ ॥ मातुलं स प्रणम्याथ यज्ञार्थं तान्निमन्त्र्य च । गच्छन् गजाह्वयं दूतमग्रतोऽयातयन्नृपे ॥ १२० ॥ सकृष्णः सहसोदर्यः श्रुत्वाऽसौ प्राप्तमर्जुनम् । प्रीतो बाष्पातिपूर्णाक्षो भ्रातृस्नेहादभाषत ॥ १२१ ॥ वासुदेव न पश्यामि दुर्लक्षणमथार्जुने । केन दुर्लक्षणेनायं बहुदुःखी प्रवासगः ॥ १२२ ॥ पृष्टस्तं केशवः प्राह भ्राता ते दीर्घपिण्डिकः । तेनायं दुःखबहुल इत्युक्त्वा पुनरेव च ॥ १२३ ॥ वदन्तमेवं पाञ्चाली कटाक्षेण न्यवारयत् । समस्तलक्षणाभिज्ञः कृष्णः सत्या वृकोदरः ॥ १२४ ॥ कृष्णा च पञ्चमो नास्ति विद्या शुद्धेयमञ्जसा । प्रसङ्गात्प्राप्तुमिच्छेत्तां विद्याशीलो युधिष्ठिरः ॥ १२५ ॥ इति लोभात्तु पाञ्चाली वासुदेवं न्यवारयत् ॥ १२६ ॥ तद्गौरवाद्वासुदेवो नोत्तरं प्रत्यभाषत । विस्मारयामास च तं प्रब्रुवाणः कथान्तरम् ॥ १२७ ॥ उदरस्य किञ्चिदाधिक्यं वृषणाधिक्यमेव च । सव्यबाहोस्तथाधिक्यं दुर्लक्षणमथार्जुने ॥ १२८ ॥ तन्नोक्तं वासुदेवेन दृश्यमानमपि स्फुटम् । ज्ञानानन्दह्रासकरा ह्येते दोषाः सनातनाः ॥ १२९ ॥ समस्तजीवराशौ तु दुर्लक्षणविवर्जितौ । पूर्णचित्सुखशक्त्यादेर्योग्यौ कृष्णा च मारुतिः ॥ १३० ॥ अनादिदुःखहीनत्वे सुखाधिक्ये च लक्षणम् । रुक्मिणीसत्यभामादिरूपायाः श्रिय एव तु

॥ १३१ ॥ मुख्यं ततोऽतिमुख्यं तु स्वातन्त्र्यादेरशेषतः । गुणराशेः
परं लिङ्गं नित्यं व्यासादिरूपिणः। विष्णोरेव न चान्यस्य स ह्येकः
पूर्णसद्गुणः ॥ १३२ ॥ साश्वेऽर्जुने यज्ञवाटं प्रविष्टेऽस्य सहोदराः ।
पूजिताः पूजयामासुर्मुदिताः सहकेशवाः ॥ १३३ ॥

ततः स यज्ञो यदुवीररक्षितो व्यासोपदिष्टो मुनिभिः प्रवर्तितः।
अशोभतालं सकलैर्नृपैश्च समागतैर्विप्रवरैश्च जुष्टः ॥ १३४ ॥ सकृष्ण-
युग्मेन च भार्गवेण त्रिधा विभक्तेन परेण पुंसा । अधिष्ठितोऽशोभत
विश्वमेतद्विश्वादिरुपेण यथैव तेन ॥ १३५ ॥ यथा विरिश्चस्य पुराऽऽस
यज्ञो यथैव शक्रस्य शतक्रतुत्वे । तथैव सोऽभूद्विधिशर्वशक्रपूर्वैः
सुरैराविरलं कृतोऽधिकम् ॥ १३६ ॥ न देवगन्धर्वमुनिःस्वधर्ममर्त्या-
दिकेष्वास स योऽत्र नास। स्वलंकृतैर्नाकिजनैः सकान्तैररूरुचन्नाकव-
देतदोकः ॥ १३७ ॥ तत्रैव तत्त्वानि ससंशयानि निःसंशयान्या-
सुरलं विवादे । परस्परोत्थे हरिणा त्रिरूपिणा संस्थापितान्यग्र्यवचो-
भिरुच्चैः ॥ १३८ ॥ प्रगीतगन्धर्ववरः प्रनृत्तसदप्सराः सन्ततवादिविप्रः।
विवेचयद्देवनृपौघ एको रराज राजाऽखिलसत्क्रतूनाम् ॥ १३९ ॥
समस्तदेव्यः सहवासुदेव्यः स्वलङ्कृताः फुल्लमुखारविन्दाः। विचेरुरत्रैव
सहाप्सरोभिर्निषेदुरप्यच्युतसत्कथारमाः ॥ १४० ॥ न वै मुमुक्षुर्न
बुभूषुरत्र न वै विवित्सुश्च कुतो बुभुक्षुः । नासत्यकामा अभवन्कुतश्चि-
त्प्रदातरि प्राज्ञवरेऽनिलात्मजे ॥ १४१ ॥ दिनेदिने तत्र महान्नपर्वताः
सभक्षसारा रसवन्त ऊर्जिताः। नद्यः पयःसर्पिरजस्रपूर्णाः समाक्षिकाद्या
अपि पायसह्रदाः ॥ १४२ ॥ ह्रदा महान्तस्त्रिदशादियोग्याः सुयोग-
युक्ता हरिचन्दनादेः । तथाञ्जनालक्तकमुख्यमण्डनद्रव्याग्र्यवाप्यो
मणिकाञ्चनोद्भवाः ॥ १४३ ॥ यथेष्टपानाशनभोगशिष्टाः सहस्रशो
मारुतिनाऽपि कारिताः । गन्धा रसाद्याश्च समस्तभोगा दिवीव तत्रासुर-
तीवहृद्याः ॥ १४४ ॥ नैतादृशः कश्चन भूतपूर्वो मखो विना राम-



विरिश्चवज्रिणाम् । मखानिति प्रोचुरशेषलोका दृष्ट्वा मखं तं पुरुषोत्त-
मेरितम् ॥ १४५ ॥ स एवमद्धा हरिदैवतः क्रतुः पञ्चाश्वमेधात्मक उच्च-
कल्पः। दिनेदिने स्वृद्धगुणो बभूव मुदावहो वत्सरपञ्चकत्रयम् ॥१४६॥
यज्ञावसाने निखिलाश्च पाण्डवाः कृष्णा च पृथ्वीमखिलां सवित्ताम् ।
माङ्गल्यमात्रं दयिताशरीरे निधाय सर्वाभरणानि चैव ॥ १४७ ॥
समर्पयामासुरजे वरेण्ये व्यासे विभागाय यथोक्तमृत्विजाम् । प्रियो
विभागो यदमुष्य विष्णोरतो विभागार्थमिवार्पयंस्ते ॥ १४८ ॥ हृदा
समस्तं हरयेऽर्पितं तैः स हि द्विजस्थोऽपि समस्तकर्ता । देहेन्द्रिय-
प्राणमनांसि चेतनैः सहैव तस्मा अतिसृज्य नेमुः ॥ १४९ ॥
त्वदीयमेतन्निखिलं वयं च न त्वस्मदीयं क्व च किञ्चनेश । स्वतन्त्र
एकोऽसि न कश्चिदन्यः सर्वत्र पूर्णोऽसि सदेति हृष्टाः ॥ १५० ॥
ततो विभक्ते मुनयोऽब्रुवंस्ते प्रत्यर्पयामो वयमेषु राज्यम् । पूर्णा
हिरण्येन वयं धरायाः प्रपालने योग्यतमा इमे हि ॥ १५१ ॥ पार्थाः
सभार्या द्विजवाक्यमेतन्निशम्य कृष्णाय पुनः प्रणम्य । ऊचुस्तपो
नोऽस्तु वनेऽर्पयित्वा राज्यं मखान्ते त्वयि धर्मलब्धम् ॥ १५२ ॥
इतीरितः प्राह स बादरायणो मुनीश्वरैरप्यभियाचितः प्रभुः। हिरण्य-
मेव स्वमिदं मुनीनां मदाज्ञया भुङ्ध्वमशेषराज्यम् ॥१५३॥ समर्पितं
मे फलवच्च तस्मात्पुनर्ग्रहो नैव च दोषकारी । पितामहोऽहं भवतां
विशेषतो गुरुः पतिश्चैव ततो मदर्हथ ॥ १५४ ॥ इतीरितास्ते प्रतिपद्य
राज्यं ददुर्हिरण्यं निखिलं च तस्मै। विभज्य विप्रान्स निजं च भागा-
मदात्पृथायै निखिलं प्रसन्नः ॥ १५५ ॥ सभार्यकाणां वररत्नभूषणा-
न्यशेषतः पुत्रभुवां प्रदाय । पृथक्पृथग्योग्यवरांस्तथैभ्यः प्रादात्प्रभुस्ते
मुदिताः प्रणेमुः ॥ १५६ ॥ तद्यज्ञपञ्चकमजस्त्रिगुणां स एभ्यः
सद्दक्षिणां क्रतुपतिर्निखिलामवाप्य । चक्रेऽश्वमेधत्रयमेकमेकं तेषां
हरिर्बहुसुवर्णकनामधेयम् ॥ १५७ ॥

सकृष्णेष्वथ पार्थेषु सुस्नातावभृथेष्वलम्। पञ्चेन्द्रवद्विराजत्सु स्तूयमानेष्वपीश्वरैः ॥ १५८ ॥ स्तूयमाने च तद्यज्ञे क्रोधो नकुलतां गतः। कृत्वोग्रगर्जनं यज्ञं तांश्च यज्ञकृतोऽखिलान् ॥ १५९ ॥ गर्हयञ्छुचिवानित्थं भार्यापुत्रस्नुषान्वितः। सक्तुप्रस्थमदाद्विप्र उञ्छवृत्तिः सुभक्तितः ॥ १६० ॥ धर्मायातिथये तस्य कलां नार्हति षोडशीम्। यज्ञोऽयमिति हेतुं च विप्रैः पृष्टोऽभ्यभाषत ॥ १६१ ॥ अतिथेस्तस्य पादोदक्लिन्नपार्श्वो हिरण्मयः। एको ममाभूदपरः सर्वतीर्थोदकेष्वपि ॥ १६२ ॥ मज्जतोऽवभृथेष्वद्धा यज्ञानामत्र चादरात्। नाभूदित्यथ तत्त्ववेदिभिर्मुनिपुङ्गवैः ॥ १६३ ॥ कृष्णेन च तमोऽन्धं तं प्रापयद्भिः स्मिते कृते। अदर्शनं जगामाशु तमः प्राप च कालतः ॥ १६४ ॥ तदर्थमेव हैरण्यः पार्श्वस्तस्याभवत्पुरा। कृष्णस्य पाण्डवानां च मखादेश्च गुणान्बहून्। वदन्तो भर्त्सयाश्चक्रुस्तन्मतज्ञा मधुद्विषः ॥ १६५ ॥ श्राद्धार्थं हि पयः पूर्वं जमदग्नेरदूषयत् ॥ १६६ ॥ नाकुलेनैव रूपेण क्रोधस्तं पितरोऽशपन्। भव त्वं नकुलस्तावद्यावद्धर्मादिकान्सुरान् ॥१६७॥ क्षेप्स्यसीति तमो घोरं भूयः पापेन यात्वयम्। इत्यभिप्रेत्य तैः शप्तस्तथा कृत्वा तमोऽभ्यगात् ॥ १६८ ॥ यद्यप्यल्पधनत्यक्तं वित्तं बहुफलं भवेत्। तथाप्यनन्तफलदाः कर्तुरेव महागुणाः ॥ १६९ ॥ सतां प्रीतिश्च तत्रापि सद्वरो हरिरेव हि। पार्थेभ्योऽभ्यधिकः कर्ता समो वा को गुणैर्भवेत् ॥ १७० ॥ सतां च प्रवरो विष्णुः सद्भिर्मुनिवरैर्युतः। प्रत्यक्षतः कारयति पार्थैः प्रियतमैश्च तैः ॥ १७१ ॥ यं मखप्रवरं तस्य समं किं शुभसाधनम्। पठन्ति पैङ्गिनश्चैतान्मन्त्रानन्वर्थकानिह ॥ १७२ ॥ 'अवैष्णवकृतं कर्म सर्वमन्तवदुच्यते। अनन्तं वैष्णवकृतं तत्र वर्णक्रमात्परम् ॥ १७३ ॥ वैष्णवैरपि मर्त्यैर्यत्कृतं शतगुणं ततः। गान्धर्वं कर्म तस्माच्च पितृभिर्मुनिभिस्ततः ॥ १७४ ॥ देवशक्रशिवब्रह्मकृतं तस्मात्क्रमेण च। शतोत्तर-



मिति ज्ञेयं नान्यद्ब्रह्मकृतोपमम् ॥ १७५ ॥ वैष्णवत्वं क्रमाद्वृद्धं ब्रह्मान्तं जीवराशिषु। फलाधिक्यं कर्मणां हि विष्णोः प्रीत्यैव नान्यथा' ॥ ॥ १७६ ॥ इति तेन न पार्थानां कर्मणाऽन्यत्समं क्वचित्। गुणैर्ज्ञानादिभिः क्वापि तस्मात्क्रोधः स तामसः। विनिन्द्य तान्सुसत्वस्थांस्तमोऽन्धमुपजग्मिवान् ॥ १७७ ॥ अथ पृष्टो वासुदेवः सुरविप्रादिसंसदि। युधिष्ठिरेण संहृष्टो जगादाशेषतः प्रभुः ॥ १७८ ॥ ते च श्रुत्वाऽखिलान्धर्मान्भक्त्या परमया युताः। पूजयन्तो जगन्नाथमापुश्च परमां मुदम् ॥ १७९ ॥ (४९४३) इति श्रीमदानन्दतीर्णभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये आश्वमेधिके त्रिंशोऽध्यायः ॥ ३० ॥

---

## ॥ अथ एकत्रिंशोऽध्यायः ॥

॥ ॐ ॥ यज्ञेश्वरेणाभियुतेषु भक्त्या महीं प्रशासत्सु पृथासुतेषु। ययियक्षुरागान्निशि विप्रवर्यो युधिष्ठिरं वित्तमभीप्समानः ॥ १ ॥ प्रातर्ददानीति नृपस्य वाक्यं निशम्य विप्रस्त्वरितो मखार्थे। भीमं ययाचे स नृपोक्तमाशु निशम्य चादान्निजहस्तभूषणम् ॥ २ ॥ अनर्घ्यमग्निप्रतिमं विचित्ररत्नान्वितं विप्रवरस्तदाप्य। ययौ कृतार्थोऽथ च नन्दिघोषमकारयद्वायुसुनुस्तदैव ॥ ३ ॥ अकालजं तं तु निशम्य राजा पप्रच्छ दूतैस्तमुवाच भीमः। यन्मर्त्यदेहोऽपि विनिश्चितायुरभून्नृपस्तेन ममास हर्षः ॥ ४ ॥ इतीरितोऽसौ नृपतिस्त्वरेत धर्मार्थमित्यस्य मतं प्रपूजयन्। जगाद साध्वित्यथ भूय एव धर्मे त्वरावानथ सम्बभूव ॥ ५ ॥

अथाम्बिकेयं विषयेषु सक्तं दुःसङ्गदुष्टं कृतभूरिदोषम्। समस्त-

राजाप्ययहेतुभूतं विचार्य तं मारुतिरन्वकम्पत ॥ ६ ॥ अकुर्वतस्तीक्ष्णतपः कुतश्चिन्नैव स्वलोकाप्तिरमुष्य भूयात् । रागाधिकोऽयं न तपश्च कुर्यादित्यस्य वैराग्यकराणि चक्रे ॥७॥ आज्ञां परैरस्य निहन्ति सोदरैर्वधूजनैरप्यभि(ति)पूजितेऽस्मिन् । स निष्टनत्येवमपीतरैः स्वैः(स)सं(सु)पूजितो नास तदा विरागः ॥ ८ ॥ सर्वेऽपि पार्थास्तमृते सभार्या वैचित्रवीर्यं परमादरेण । पर्येव चक्रुः सततं सभार्यं कृष्णा च न स्यात्तनयार्तिमानिति ॥ ९ ॥ स प्रीयमाणो नितरां च तेषु नैवाधिकं प्रीयते भीमसेने । स्मरन्सुतांस्तेन हतान्समस्तानपि प्रभावं परमस्य जानन् ॥ ॥ १० ॥ तस्यापनेतुं विषयेषु सक्तिं द्वेषं तथैवात्मनि भीमसेनः । जगाद माद्रीसुतयोः समक्षमास्फोट्य संशृण्वत एव तस्य ॥ ११ ॥ ताविमौ मे भुजौ वृत्तौ पीनौ चन्दनरूषितौ । ययोरन्तरमासाद्य जरठस्य सुता हताः ॥१२॥ यमौ तद(म)न्वमोदेतां तत्स्नेहाद्गौरवादपि । नैव तत्कृष्णया ज्ञातं पृथया च सपुत्रया ॥ १३ ॥ तच्छ्रुत्वोत्पन्ननिर्वेदं क्षत्ता ज्येष्ठस्य वर्धयन् । उवाच जीविताशा ते ननु राजन्गरीयसी ॥ ॥ १४ ॥ अहो गरीयसी जन्तोर्जीविताशा यया भवान् । भीमापवर्जितं पिण्डमादत्से गृहपालवत् ॥ १५ ॥ न चापराधो भीमस्य ब्रुवतस्त्वामिदं वचः । अग्निर्निसृष्टो दत्तश्च गरो दाराश्च दूषिताः ॥ ॥ १६ ॥ हृतं क्षेत्रं धनं यस्य किं भीमेन कृतं त्वयि । अलमासज्जतस्तेऽद्य निर्वेदकरमीरितम् ॥१७॥ उपकाराय भीमेन तव द्वेषं त्यजात्र यत् । विमुच्य द्वेषकामौ त्वं वने तीर्थनिषेवकः ॥१८॥ तपसाऽऽराध्य हरिं ततः पूतो भविष्यसि । इत्युक्तो द्वेषमुत्सृज्य भीमे निर्वेदमागतः ॥ ॥१९॥ अनुज्ञां तपसे प्राप्तुमुपवासपरोऽभवत् । अनश्नन्तं चतुर्थेऽह्नि धृतराष्ट्रं युधिष्ठिरः ॥२०॥ ज्ञात्वा सम्प्रार्थयामास भोजनार्थं पुनःपुनः । अनुज्ञां वनवासाय त्वत्तः प्राप्यैव सर्वथा ॥ २१ ॥ भोक्ष्येऽन्यथा नेति वदन्धृतराष्ट्रः श्रमान्वितः । उपवासकृशो भार्यां शिश्रिये मूर्च्छितः



क्षणात् ॥ २२ ॥ शन्तमेन करेणाथ धर्मजस्तं मृदु स्पृशन् । शनैः सञ्ज्ञामगमयदब्रवीच्च सुदुःखितः ॥ २३ ॥ पुरस्कृत्य युयुत्सुं त्वं कुरु राज्यमकण्टकम् । वयमेव त्वदर्थाय कुर्मः सर्वे तपो वने ॥ २४ ॥ नेत्याह धृतराष्ट्रस्तं कुलधर्मो हि नो वने । अन्ते देहपरित्यागस्तन्ममाज्ञातुमर्हसि ॥ २५ ॥ तयोर्विवदतोरेवं कृष्णद्वैपायनः प्रभुः । सर्वज्ञः सर्वकर्तेश आविर्भूतोऽब्रवीन्नृपम् ॥ २६ ॥ तपसाऽशेषदोषाणां क्षयकाममिमं नृपम् । अनुजानीहि नैवास्य धर्मविघ्नकरो भव ॥ २७ ॥ काले निर्वेदमापन्नस्तपसा दग्धकिल्बिषः । शुभां गतिमयं यायादन्यथा न कथञ्चन ॥ २८ ॥ इत्युक्तो धर्मराजस्तमनुजज्ञे स चाशितः । शिक्षयामास सद्धर्मान्नीतिं च विदुषेऽप्यलम् ॥ २९ ॥ केवलस्नेहतो राज्ञे शुश्राव विनयात्स च । अनुज्ञाय गृहं प्राप्ते धर्मज्ञे(जे)विदुरं पुनः ॥ ३० ॥ श्राद्धाय वित्तमाकाङ्क्षन्प्रेषयामास तद्वचः । श्रुत्वा युधिष्ठिरो भीममाह दातव्यमद्य नः ॥ ३१ ॥ पुत्रपौत्राप्तबन्धूनां श्राद्धेच्छोर्वित्तमञ्जसा । तमाह भीमः पापानां विमुखानां मधुद्विषः ॥ पारलौकिकसाहाय्यं न कार्यमितरार्थतः ॥ ३२ ॥ तत्तेनापि हि वित्तेन पुत्रश्राद्धं करिष्यति । तज्ज्ञात्वा ददतां दोषो भवेदिति विचिन्तयन् ॥ ॥ ३३ ॥ कष्टात्कष्टतरं यान्तु सर्वे दुर्योधनादयः । भीष्मादीनां वयं श्राद्धकर्तारस्तेन किं ततः ॥ ३४ ॥ कानीनत्वात्तु कर्णस्य सहास्माभिः पृथैव हि । श्राद्धकर्मण्यधिकृता किं तस्मै दीयते धनम् ॥३५॥ इत्युक्तवन्तं नृपतिरर्जुनश्चोचतुः पुनः । यियासोर्याचमानस्य निजबाहुबलार्जितम् ॥ ॥३६॥ देहि वित्तं परमतः किं त्वमेषोऽभियाचते । इत्युक्तमपि नेत्येव ब्रुवाणं शुद्धधार्मिकम् ॥३७॥ अप्रीत्या जोषमास्वेति प्रोच्योवाच युधिष्ठिरः । कोशतो यद्बहिर्वित्तं दानभोगादिकारणम् ॥ ३८ ॥ मम सन्निहितं सर्वं तत्पित्रे चार्पितं मया । एवमेवार्जुनोऽप्याह विदुरं पुनरूचतुः ॥ ॥ ३९ ॥ मुख्यधर्मरते भीमे न पिता क्रोद्धुमर्हति ॥ ४० ॥ इत्युक्तो

वित्तमादाय गत्वा क्षत्ताऽग्रजेऽब्रवीत् । युधिष्ठिरार्जुनौ भक्तिं नितरां त्वयि चक्रतुः ॥ ४१ ॥ नातिहृष्टस्त्वदाज्ञाया भीमस्तन्मा क्रुधोऽत्र च । शुद्धे क्षत्रियधर्मे हि निरतो यद्वृकोदरः ॥ ४२ ॥ नृपार्जुनौ धर्मरतावपि लोककृपापरौ । अजातकोपस्तच्छ्रुत्वा धृतराष्ट्रः प्रशान्तधीः ॥ ॥ ४३ ॥ कृत्वा श्राद्धानि सर्वेषां महादानान्यनारतम् । दशरात्रं ददौ शुद्धमनसा निर्ऋणत्वधीः ॥ ४४ ॥

सर्वं समर्प्य गोविन्दे पार्थेभ्योऽन्येभ्य एव च । स्वजनेभ्यः समादाय स्ववन्ेत्रेभ्य उच्चधीः ॥ ४५ ॥ अनुज्ञां निर्गतः प्राह पौरजानपदान्नृपः । धर्मतो रक्षिता यूयमस्मत्पूर्वैर्महात्मभिः ॥ ४६ ॥ न चाहं परमस्नेहाद्युष्माभिः सुकृपालुभिः । अरक्षितेति कथितः प्रमादादपि सज्जनाः ॥ ४७ ॥ इष्टं च यज्ञैः पूर्तैश्च चरितं युष्मदाश्रयात् । पुत्रस्तु मम पापात्मा सर्वक्षत्रविनाशकः ॥ ४८ ॥ सर्वातिशङ्की मूढश्च वृद्धानां शासनातिगः । सौभ्रात्रं येन संत्यज्य पाण्डवेषु महात्मसु । कृतं विरूपं सुमहत्कुर्याद्यन्नापरः क्वचित् ॥ ४९ ॥ अप्रियाणि च कृष्णस्य सुबहून्याचरत्कुधीः । प्रायस्तेनापि मन्देन युष्मास्वप्यशिवं कृतम् ॥ ५० ॥ भ्रातरोऽस्य च सर्वेऽपि तच्छीलमनुवर्तिनः । हताश्च स्वेन पापेन ससुतामात्यबान्धवाः ॥ ५१ ॥ सोऽहं वयोगतश्चैव पुत्रादिभिरभिप्लुतः । तत्सम्बन्धात्कृ(न्धकृ)तं पापं स्वकृतं चाप्यपेशलम् ॥ ५२ ॥ पाण्डवेषु सकृष्णेषु तपसा मार्ष्टुमुद्यतः । तत्र मामनुजानीध्वं कृपया मित्रवत्सलाः ॥ ५३ ॥ मत्प्रियार्थमपि स्नेहः पाण्डवेषु महात्मसु । क्रियमाणोऽपि कर्तव्यो भूय एव सदाऽचलः ॥ ॥ ५४ ॥ ते हि मे पुत्रकाः सन्त इहामुत्र च सौख्यदाः । इत्युक्ते स्वगुणानुच्चैः कीर्तयद्भिः सुदुःखितैः ॥ ५५ ॥ पर्यश्रुनयनैः कृच्छ्रात्पौरजानपदैश्चिरात् । अनुज्ञातो ययौ पार्थैरनुयातः सुदूरतः ॥ ५६ ॥ सञ्जयो विदुरश्चैनं सभार्यमनुजग्मतुः । अनुवव्राज तं कुन्ती वनाय



कृतनिश्चया ॥ ५७ ॥ वार्यमाणाऽपि तनयैः सभार्यैर्भृशदुःखितैः । संस्थाप्य तान्सुकृच्छ्रेण ययौ साऽन्वेव तं नृपम् ॥५८॥ सन्दर्शितपथो राजा कुन्तीविदुरसञ्जयैः । गान्धारीसहितः प्राप कुरुक्षेत्रं जगद्गुरोः ॥ ॥ ५९ ॥ क्रमेणैवाश्रमं व्यासदेवस्य सुरपूजितम् ॥ ६० ॥ त्रिवत्सरेणा(राद)स्य निजस्य लोकप्राप्तिं सभार्यस्य जगाद तत्र । ब्रह्माङ्कजस्तेन भृशं प्रतीतो व्यासोपदिष्टं व्यचरत्तपोऽग्र्यम् ॥ ६१ ॥

सक्षत्तृगान्धारिपृथे ससञ्जये तपोभिराराधयति प्रभुं हरिम्। वैचित्रवीर्येऽत्र सदारबन्धुभृत्याश्च पार्था दृशये समाययुः ॥६२॥ क्षत्त्रैकतामत्र युधिष्ठिरेण प्राप्तोऽथ भार्यासहितं ससञ्जयम् । उपास्यमानेषु विचित्रवीर्यपुत्रं पृथां चैव पृथासुतेषु ॥ ६३ ॥ प्रादुर्बभूवामितशक्तितेजोज्ञानाद्भुतैश्वर्यसुखादिरूपः । व्यासो हरिस्तत्र समीक्ष्य सर्वे सम्पूजयामासुरुदग्रभक्त्या ॥ ६४ ॥ तैः पूजितस्तत्र निषण्ण आह यद्यद्यदिष्टं प्रवदन्तु तत्तत् । दास्यामि तस्याद्य तदित्यमुष्मिन् भक्त्युच्छ्रयः पाण्डुसुतैः सदारैः ॥६५॥ वृतोऽत्र कुन्तीरविसूनुजन्ममृत्यूत्थदोषापगमं ययाचे ॥६६॥ तेषां प्रदत्तेष्वभिवाञ्छितेषु वैचित्रवीर्यः सह भार्ययैव । सम्मन्त्र्य निःशेषरणेहतानां सन्दर्शनं प्रार्थितवांस्तमीशम् ॥ ६७ ॥ ततस्तु ते सत्यवतीसुतस्य सर्वेश्वरस्याज्ञया सर्व एव । समागताः स्वर्गलोकात्क्षणेन दत्ता च दिव्या दृगमुष्य राज्ञः ॥ ऊषुश्च रात्रिं परमाज्ञयैव सर्वे स्वभार्यासहिता यथा पुरा ॥ ६८ ॥ तृप्तः सदारो नृपतिश्च तत्र सर्वेऽपि दृष्ट्वा परमाद्भुतं तत् । अथाज्ञयैवास्य परस्य सर्वाः स्त्रियो निजेशैः सहिता ययुः स्वः ॥ ६९ ॥ विनोत्तरां तां तु कथां निशम्य पारीक्षितोऽयाचत तातदृष्टिम् । तं चानयामास तदैव कृष्णो ह्यचिन्त्यशक्तिः स विकुण्ठलोकात् ॥ ७० ॥ दृष्ट्वा स पारीक्षित आप तुष्टिं स्वतातमीशेन समाहृतं पुनः । सम्पूज्य तं कृष्णमपीशवन्द्यं क्षमापयामास परीक्षितात्मजः ॥ चक्रे च विस्रम्भमतीव भारते पुनश्च तत्र

स्व(त्य)जनैः समेतः ॥ ७१ ॥

पार्थाः पुनः प्राप्य पुरं स्वकीयं धर्मेण पृथ्वीं परिपालयन्तः। भोगानरागा अजुषन्त योग्यान्युक्ता जगद्धातरि वासुदेवे ॥ ७२ ॥ वर्षत्रयान्तेऽत्मसमाहिताग्निं त्यक्ताग्निभिस्तैर्वनमालिहद्भिः। ते शुश्रुवुर्धृतराष्ट्रं सभार्यं सहैव कुन्त्या परिदग्धदेहम् ॥७३॥ वीटा(व्रीळा)मुखं ध्यानपरं निशम्य स्वर्यान्तमात्मीयपितृव्यमाशु। समेत्य भर्त्रा प्रतिपूज्यमानां कुन्तीं च तस्मा विदधुः क्रियाश्च ॥ ७४ ॥ ते विष्णुभक्त्या परिपूतकर्मभिर्ज्ञानेन चान्ते तमनुस्मरन्तः। पार्थैः सुपुत्रैः सुकृतोर्ध्वकर्मभिर्वृद्धिं शुभस्यापुरनप्ययां शुभाः(म्) ॥ ७५ ॥ गावद्गणिव्र्याससकाशमेत्य शुश्रूषया तस्य पुनर्निजां गतिम्। प्रपेदिवान्पाण्डुसुताश्च कृष्णं प्रतीक्षमाणाः पृथिवीमशासन् ॥ ७६ ॥ अष्टादशाब्दाः पृथिवीं समस्तां प्रशासतामेवमगुर्महात्मनाम्। अरिक्तधर्मार्थसुखोत्तमानामनुज्झितानन्तपदस्मृतीनाम् ॥ ७७ ॥ (५०२०) इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये धृतराष्ट्रस्वर्गारोहणं नाम एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

## ॥ अथ द्वात्रिंशोऽध्यायः ॥

॥ ॐ ॥ ततः कुरुक्षेत्रमवाप्य कृष्णो दीक्षां प्रपेदे द्विषडब्दसत्रे। स एव च व्यासभृगूद्वहात्मा चक्रेऽत्र सादस्यमजोऽप्रमेयः ॥१॥ तत्रर्त्विजो दक्षभृगुप्रधानाः पार्था यदूनां प्रवरैः समेताः। ब्रह्मेशशक्रप्रमुखाः सुराश्च चक्रुः सुसाचिव्यमनन्तदासाः ॥२॥ सर्वे च जीवा वसुधातलस्था येऽन्येऽन्तरिक्षद्युमुखोत्तरेषु। वसन्ति नारायणपादसंश्रयास्ते चात्र सर्वे मुमुदुः सनागाः ॥३॥ सुनिर्णयस्तत्त्वविनिर्णयार्थिनां तत्त्वस्य चाभूदिह वादशीलिनाम्। मिथो विवादात्सुरभूसुराणां वाक्याद्धरेर्व्यासभृगूद्वहात्मनः ॥४॥ धर्मार्थकामानखिलानवापुस्तदर्थिनो मुक्तिमपीह कृष्णात्। यथेष्टपानाशनवाससो जना विचेरुरत्रामरमानवादयः ॥५॥ क्षेत्रं तदासीद्धरिलोकसंमितं यदीयुरत्राखिलसज्जना युतिम्। नानाप्तकामाश्च (यत)तो बभूवुर्निर्यत्नदृश्यश्च यतोऽत्र केशवः ॥६॥ द्वादशाब्दं महासत्रमेवमेतादृशं हरिः। समाप्यावभृथस्नातः पूजयित्वाऽखिलाञ्जनान् ॥ ७ ॥ अनुजज्ञे क्रमेणैव वत्सरेण समागतान्।

स्वकुलं सञ्जिहीर्षुः स विप्रशापमजीजनत् ॥ ८ ॥ उपदिश्य परं ज्ञानमुद्धवायामुनाऽऽश्रमम्। बदर्याख्यं प्रापयित्वा सप्तमाब्दं शतोत्तरम् ॥ ९ ॥ प्रतीक्षन्पालयामास पार्थैः सह भुवं प्रभुः। समारब्धं कलियुगं यदा दुर्योधनोऽपतत्। षट्त्रिंशाब्दं पुनः कृष्णः कृतमेवान्ववर्तयत् ॥ १० ॥ कृतादपि विशेषोऽयं यत्पुण्यस्याधिकं फलम्। अल्पमेव च पापस्य कालात्कृष्णाज्ञया तथा ॥ ११ ॥ एवं सुधार्मिके लोके हरिभक्तिपरायणे। नष्टेषु कलिलिङ्गेषु युगवृत्तिमभीप्सवः ॥ १२ ॥ ब्रह्मरुद्रादयो देवाः स्तुत्वा केशवमव्ययम्। व्यज्ञापयन्स्वलोकाप्तिमोमित्याह स चाच्युतः ॥१३॥ प्राचुर्ये सज्जनस्य स्यान्न कलेर्वृद्धिरञ्जसा। इति स्वकुलसंहृत्यै प्रभासमनयत्प्रभुः ॥१४॥ पुण्यक्षेत्रेऽपि न मृतिः स्वगृहेऽप्यतिधर्मदा। गत्वैवाल्पमपि क्षेत्रं स्यान्महत्फलमित्यजः ॥१५॥ प्रकाशयितुमेवैतान्प्रभासाय कुशस्थलात्। नीत्वा दानानि सद्धर्मांस्तैरकारयदच्युतः ॥ १६ ॥ ते ततः शापदोषेण कृष्णेनैव विमोहिताः। मैरेयमत्ता अन्योन्यं निपात्य स्वां तनुं गताः॥ ॥ १७ ॥ तद्दृष्ट्वा बलदेवोऽपि योगेन स्वां तनुं जहौ ॥ १८ ॥

ततः परेऽशोगणितानुभावः स्वसारथिं पाण्डवानां सकाशम्। स्वलोकयानप्रतिबोधनाय स्वस्यानु चैषां त्वरयाऽभ्यपात्तयत् ॥ १९ ॥ अथाऽऽसतः पिप्पलमूल ईशितुरूरुस्थितं पादतलं सुताम्रम्। दृष्ट्वा

जरा नाम ससर्ज शल्यं भक्तोऽप्यलं रोहितं शङ्कमानः ॥ २० ॥ अच्छेद्याभेद्यदेहस्य शल्ये पादमुपस्थिते । समीपमागतो व्याधो दृष्ट्वा भीतोऽपतद्भुवि ॥ २१ ॥ विप्रवाक्यं मानयानः कारयित्वाऽमुना हरिः । पापं मां जहि देवेति याचन्तमनयद्दिवम् ॥ २२ ॥ पादप्रहारदोषेण तं भृगुं व्याधतां गतम् । पश्चात्तापेन भक्त्या च सुप्रीतस्तच्छरीरिणम् । स्वाज्ञाप्राप्तविमानेन दिवं निन्ये जनार्दनः ॥ २३ ॥ नीचा योनिर्नी-(नीचां योनिं नी)च नीचकर्माप्तं नीचकर्मतः । अदुष्टत्वात्तु मनसो भक्तिलोपो न चाप्यभूत् ॥२४॥ भृगोरत्राबुद्धिपूर्वं नातिदोषकृदप्यभूत् ॥२५॥ ततो विरिञ्चेशपुरन्दराद्याः पुरः स्तुवन्तोऽभिययुः प्रणम्य । कृष्णं स चाश्वेव ययौ स्वलोकं स्वतेजसा सर्वमिदं प्रकाशयन् ॥ २६ ॥ गोपालमन्त्रं भजतां फलप्रदस्त्वेकेन रूपेण स भुव्यदृश्यः । तस्थौ द्वितीयेन च सूर्यमण्डले तृतीयमासीच्छिवपूजितं वपुः ॥ २७ ॥ सम्पूजितं ब्रह्मलोके चतुर्थं कञ्जोद्भवेनाथ परं स्वधाम । समाप्तवानं वपुरस्य पञ्चमं भक्त्यान्वयुर्देववराः स्वशक्त्या ॥ २८ ॥ तत्तेजसा ते प्रविमुष्टदृष्टयः पुरुष्टुताद्या अमितोरुदीधितेः । यावत्स्वगम्यं त्वनुगम्य तस्थुर्निमीलिताक्षा विहतोर्ध्वचाराः ॥ २९ ॥ वीन्द्रेशशेषानुगतः स्वयम्भूर्धामप्रविष्टं तमजं प्रणम्य । वीन्द्रादिकैरप्ययुतः स्वपित्राऽऽश्लिष्टो रहश्चाकथयत्तथाऽस्तौत् ॥ ३० ॥ स पूर्वरूपेण समाप्य चैक्यं विभज्य चेच्छानुसृतोऽथ रेमे । हरिः श्रिया ब्रह्ममुखैश्च मुक्तैः सम्पूज्यमानोऽमितसद्गुणात्मा ॥ ॥ ३१ ॥ ब्रह्माऽपि शर्वादियुतः स्वलोकं प्राप्तः पुनस्तत्र गतं च कृष्णम् । रेमेऽभिपश्यन्प्रतिपूजयंस्तं सुराश्च सर्वे रविबिम्बसंस्थम् ॥ ॥ ३२ ॥ यतो न दर्शिता भ्रान्तिः प्रादुर्भावेष्वपि क्वचित् । देहत्यागानुसारेण हरिणा तदिहाच्युतः ॥ ३३ ॥ मोहयित्वाऽसुरानन्धन्तमः प्रापयितुं प्रभुः । चिदानन्दैकदेहोऽपि त्यक्तं देहमिवापरम् । सृष्ट्वा स्वदेहोपमितं शयानं भुव्यगाद्दिवम् ॥ ३४ ॥



दारुकोक्त्या समायातः पार्थस्तमदहत्तदा ॥ ३५ ॥ रौहिणेयादिकानां च शरीराणि प्रधानतः । दारुको विष्णुलोकं तु पुनराप यथागतम् ॥३६॥ तथैव जनमोहाय प्राप वह्नावदृश्यताम् । रुक्मिण्यगाद्धरेः पार्श्वं सत्या कृत्वा तपस्तथा ॥ ३७ ॥ चिदानन्दैकदेहेऽपि द्विरूपे इव ते यतः । एकैवातः कृष्णवत्ते दुष्टान्मोहयतस्तथा ॥ ३८ ॥ अन्या महामहिष्यस्तु त्यक्त्वा देहं हुताशने । काश्चित्काश्चिच्च तपसा त्यक्तदेहा हरिं ययुः ॥ ३९ ॥ रौहिणेयादिकानां च भार्या वह्निमुखे तनुम् । त्यक्त्वा स्वभर्तॄनेवापुः सर्वा एव पतिव्रताः ॥ ४० ॥ वसुदेवः पार्थमुखाच्छ्रुत्वैतद्योगमास्थितः । त्यक्त्वा देहं कश्यपत्वं प्राप कृष्णानुरागतः ॥ ४१ ॥ तस्यार्जुनोऽश्वमेधाग्नावन्त्यकर्माकरोत्तदा । त्यक्तदेहास्तस्य भार्या वह्नौ प्रापुस्तमेव च ॥ ४२ ॥ स्त्रियो बालांस्तथाऽऽदाय धनं चैव धनञ्जयः । विनिर्ययौ द्वारवत्यास्तां च जग्रास सागरः ॥ ४३ ॥

स्त्रीबालसहिते पार्थ एकस्मिन्पथि गच्छति । शापात्सुपापा आभीराः स्त्रीजनाञ्जह्रुरुद्धताः ॥ ४४ ॥ यास्ताः षोडशसाहस्रवनिताः शतसंयुताः । कृष्णशापान्म्लेच्छवशं ययुर्दर्पनिमित्ततः ॥ ४५ ॥ ह्रियमाणे धने चैव वनितासु च वासविः । युयुत्सुर्गाण्डिवं सज्यं कृच्छ्रेणैव चकार ह ॥ ४६ ॥ क्षीणास्तस्य शरा दैवान्नास्त्राणि स्मृतिमाययुः । स तद्दैवकृतं ज्ञात्वा संस्मरन्पुरुषोत्तमम् । निघ्नन्शत्रून्गाण्डिवेन शेषं रक्षन्कुरूनगात् ॥ ४७ ॥ तदा कुरुक्षेत्रगतं जगद्गुरुं सुपूर्णविज्ञानबलाब्धिसत्सुखम् । तमेव वासिष्ठकुलोद्भवं हरिं निरीक्ष्य दुःखेन पपात पादयोः ॥ ४८ ॥ स तेन पुंसां प्रवरेण हेतुभिः सम्बोधितोऽज्ञानतमोंऽशुमालिना । संस्थाप्य चेतः पुनरेव तस्मिञ्जहौ शुचः प्रायश एव धैर्यात् ॥ ४९ ॥ स्त्रियो म्लेच्छहृताः कृष्णप्रेपिताद्दाल्भ्यतः पुनः । गोविन्दैकादशीं श्रुत्वा कृत्वा सारस्वते जले ॥ ५० ॥ निमज्ज्य

वायोर्वचनात्त्यक्तदेहा दिवं ययुः ।

अर्जुनस्तु कुरुक्षेत्रे हार्दिक्ययुयुधानयोः । सुतौ सारस्वते चैव
देशे राज्येऽभ्यषेचयत् ॥ ५१ ॥ अनिरुद्धसुतं वज्रं प्रियं कृष्णस्य
सद्गुणम् । स शूरसेनेन्द्रप्रस्थराजानमकरोद्वशी ॥ ५२ ॥ स्त्रीबालांश्च
धनं चैव तस्मिन्संस्थाप्य फल्गुनः । ययौ भ्रातॄनशेषं च वृत्तं तेषाम-
वर्णयत् ॥ ५३ ॥ ते वै वियोगसमयं स्मरन्तो मुरवैरिणः । अभ्य-
षिञ्चन्भागवतं महाराज्ये परीक्षितम् ॥ ५४ ॥ स्त्रीहारिणां च म्लेच्छानां
वधायैनमयोजयन् । कृतं च तेन तत्कर्म वोढ्रा पैतामहीं धुरम् ॥५५॥
समयं परिरक्षद्भिर्न पार्थैरेव तत्कृतम् ॥ ५६ ॥ वासुदेवपदा स्पृष्ट-
भूकण्टकसमुद्धृतिः । समयः पाण्डवानां हि तस्यैवानुगतिः परम् ॥५७॥
अनुव्रजद्भिर्विश्वेशं नास्माभिर्भूस्तदुज्झिता । भोक्ष्या रक्ष्याऽपि वा
तेषामित्येव समयः पुरा ॥ ५८ ॥ तत्र काली भीमभार्या वैष्णवं
योगमास्थिता । कृष्णयैकत्वमापन्ना त्यक्त्वा देहं तु मानुषम् ॥ ५९ ॥
सुभद्राद्यास्तु या भार्याः पार्थानां तु तदाज्ञया । युयुत्सुश्चात्र शिक्षार्थं
पौत्रस्यैवावसन्पुरे ॥ ६० ॥

सन्त्यज्य राजचिह्नानि वैष्णवं योगमास्थिताः । वीराध्वानं
ययुः सर्वे कृष्णया सह पाण्डवाः ॥ ६१ ॥ प्रागुदीचीं दिशं पूर्वं
ययुस्तत्रार्जुनो धनुः । नात्यजल्लोभतस्तत्तु समुद्रमुप पावकः । दृष्ट्वा
ययाचे राजानं तदुक्तः प्रास्यदम्बुधौ ॥ ६२ ॥ प्रातिभाव्यं तु वरुणे
निस्तीर्याग्निरदृश्यताम् । ययौ तेऽपि ययुः क्षिप्रं प्लवन्तः सप्तवारिधीन्॥
॥ ६३ ॥ अहोभिः सप्तभिर्योगं समारूढाः प्रदक्षिणम् । कृत्वा
क्वचिदसज्जन्त आसेदुर्गन्धमादनम् ॥६४॥ तत्र नारायणक्षेत्रे तेषां तन्वो-
ऽपतन्क्रमात् । द्रौपदीसहदेवादिपञ्चानां तत्र मारुतिः ॥६५॥ सदेह-
नाकानिच्छ(च्छु)त्वाद्देहप्रपतनं हि तत् ॥ ६६ ॥ तेषामिहेति याथार्थ्यं
जानन्पप्रच्छ धर्मजम् । केन केनापतद्देहो दोषेण न इति क्रमात् ॥६७॥



मृतिकाले हि यो यस्य दोषं वक्त्यृणमोचनम् । तस्मात्स्यादुक्तदोषस्ये-
त्याह तच्छ्रुतिरेव तत् ॥ ६८ ॥ ऋणमोक्ष(ण)ाय सर्वेषां भीमो दोषान-
वादयत् ॥ ६९ ॥ सोऽपीच्छापतितान्देहानजानञ्शुद्धकर्मणाम् । अपश्य-
न्कारणं प्राह दोषात्स्यादेवमित्यपि । राजा सम्भावनामात्रान्न हि कार्य-
मकारणम् ॥ ७० ॥ स्वच्छन्दमृत्यवो योगाद्देहानुत्सृज्य पाण्डवाः ।
कृष्णा चापुः परं स्थानं यन्नायान्त्यपि देवताः ॥ ७१ ॥ इति श्रुतेर्न
ते पापाद्देहांस्तत्यजुरूर्जिताः ॥ ७२ ॥ ऋणान्युन्मुच्य दोषोक्त्या स्वानां
भीमः स्वकां तनुम् । तत्याज परमं ध्यायन्नाप च स्थानमुत्तमम् ।
इति स्कान्दपुराणोक्तं व्यासवाक्यमृषीन्प्रति ॥ ७३ ॥ भीमादृते हि
चतुर्षु पक्षपातस्तु वासवौ । योग्य एवेति कृष्णाया न दोषः
स्यात्कथञ्चन ॥ ७४ ॥ नीतिरूपे वीर्यबले महान्त्येषां यतः क्रमात् ।
प्राणत्वाद्भोगशक्तिश्च न हि दोषाय मारुतेः ॥ ७५ ॥ यथा स्वरूप-
विज्ञानमात्मन्यपि न दोषकृत् । इति व्यासस्मृतेरेषामुक्तदोषोद्भवः
कथम् ॥ ७६ ॥ कदाचिदतिमानोऽपि त्रयाणामेषु जायते । तथाऽपि
तत्फलं नैतत्तारतम्यं हि मुक्तिगम् ॥ ७७ ॥ गुणदोषाधिकाल्पत्वादत्र-
स्थमपि हि श्रुतम् । प्रारब्धकर्मनाशे हि पतेद्देहोऽप्यपापिनः ॥७८॥
युधिष्ठिरोऽपि हि स्वर्गं बुभुजे नैव तत्तनुः । अतिमानादयो दोषाः
कुत एव हि मारुतेः ॥७९॥ अनादिकालतः सर्वदोषहीना गुणाधिकाः ।
सर्वजीवगणेभ्यो ये ते हि वायुत्वमाप्नुयुः । ऋजवो नाम ये देवा देवा-
नामपि देवताः ॥ ८० ॥ अभावं ह्यतिमानादेर्भीमस्याह च केशवः
॥ ८१ ॥ यत्किञ्चात्मनि कल्याणं सम्भावयसि पाण्डव । सहस्रगुण-
मप्येतत्त्वयि सम्भावयाम्यहं ॥ ८२ ॥ इति तस्माद्यथा युद्धे धर्महानि-
ममन्यत । एवमत्राप्यधर्मेण देहपातं नृपोऽब्रवीत् ॥ ८३ ॥ पूज्येभ्यः
पूर्वमेवैषां देहपातमभीप्सताम् । तत्कामाद्देहपातोऽभून्न पापान्मुच्यतां
यथा ॥ ८४ ॥ न हि पापफलं मुक्तौ देहपातः कथञ्चन । किन्तु

कर्मक्षयादेव तथा सर्वत्र निश्चितः ॥ ८५ ॥

तेषु स्वलोकान्प्राप्तेषु धर्मजः स्वात्मना सह । ययौ पुरो देवरथस्तदाऽस्यावततार ह ॥८६॥ रथमारुहेति कथितो रथिना पुरतः शुनः । आरोहमब्रवीन्नैतद्युक्तमित्याह सोऽपि तम् (तु) ॥ ८७ ॥ नारुहेयं विना श्वानमिति तेन स्थिरोदिते । स्वरूपं दर्शयामास धर्मो ह्यात्तः श्वरूपताम् ॥ ८८ ॥ आनृशंस्यपरत्वेन कीर्तिमेवात्मनो वृषः । ख्यापयामास कौन्तेयरूपिणो धर्मसूक्तिभिः ॥८९॥ ततः स रथमारुह्य लोकानामुत्तरोत्तरम् । अतिक्रम्याखिलान्राज्ञो जगाम श्रीपतिप्रियः ॥ ९० ॥ सर्वेषामुत्तरं लोकमैन्द्रं प्राप्येदमेव ते । स्थानमित्युदितो देवैर्दुर्योधनमवैक्षत ॥ ९१ ॥ सभ्रातृकं ज्वलन्तं च सर्वेषामुपरि स्थितम् । तं दृष्ट्वा परमक्रुद्धो निमील्यनयने शुभे ॥ ९२ ॥ भ्रातरो मे क्व कृष्णा च कर्णाद्याः क्व च बान्धवाः । धृष्टद्युम्नादयः पुत्रा हैडिम्बाद्याश्च सर्वशः ॥ ९३ ॥ यादवाश्चेति पप्रच्छ देवास्ते च तमब्रुवन् । किं ते तैः स्वकृतं कर्म भुज्यतेऽत्र न चापरैः ॥ ९४ ॥ इत्युक्त आह पापोऽयं पृथिवीक्षयकारकः । सर्वातिशङ्की मित्रध्रुङ्नारायणपराङ्मुखः ॥ ९५ ॥ नास्तिकोऽतिशठः क्रूरो द्वेष्टा विष्णोश्च तद्भुवाम् । कथं दुर्योधनः स्थानं सर्वोत्तममवाप्तवान् ॥ ९६ ॥ कथं च सर्वधर्मज्ञा नारायणपरायणाः । संस्थिताः परमे धर्मे दृश्यन्तेऽत्र न मत्प्रियाः ॥ ९७ ॥ यत्र सन्तस्तु ते सन्ति तत्र स्थातव्यमेव मे । निरयेऽपि न चात्रापि ह्यनेन सह पापिना ॥ ९८ ॥ अस्य वीरतमस्येदं धार्तराष्ट्रस्य युज्यते । इत्युक्त्वा देवता दूतं स्वानां सन्दर्शनार्थिनः ॥ ९९ ॥ राज्ञः सम्प्रेषयामासुस्तत्सन्दर्शितवर्त्मना । दुर्गन्धेन सुकृच्छ्रेण तमसा प्रावृतेन च ॥ १०० ॥ गत्वैव कियतीं भूमिं तद्दुर्गन्धासहो नृपः । इच्छन्निवर्तनं तत्र स्वानां वाच इवाश्रृणोत् ॥१०१॥ क्षणं तिष्ठ महाराज सन्निधानबलात्तव । वेदना नो न महतीत्येतच्छ्रुत्वा युधिष्ठिरः ॥ १०२ ॥ के



यूयमिति पप्रच्छ दीनध्वनिविशङ्कितः । भीमोऽहमर्जुनः कर्ण इत्याद्युक्तमिवाश्रृणोत् ॥ १०३ ॥ श्रुत्वा तत्कृपयाऽऽविष्टः शोकामर्षसमन्वितः । आह दूतं यथेष्टं त्वं गच्छ नाहमितो व्रजे ॥ १०४ ॥ न च स्वर्गेण मे कार्यं त्यक्त्वा स्वजनमीदृशम् । इत्युक्तः प्रययौ दूतस्तस्थावत्र(वेव) युधिष्ठिरः ॥ १०५ ॥ ततोऽत्र देवाः पुरुहूतपूर्वकाः समाययुः स्नेहवशाद्युधिष्ठिरे । तेष्वागतेष्वेव न तत्र वाचो दीना न दुर्गन्धतमोऽप्यपश्यत् ॥ १०६ ॥ स्वर्गोत्तमं देशमपश्यदेतदभ्रान्तचेताः स युधिष्ठिरस्तदा । आहात्र धर्मः पुनरात्मसद्यशः प्रकाशयन्पाण्डुसुताभिधं स्वम् ॥ १०७ ॥ धर्माद्विशिष्टा हि सदाऽनृशंसता दृष्टा च सा त्वय्यधिका त्रिशो मया । शक्रोऽप्युवाचैनमिदं मृषा ते प्रदर्शितं द्रोणकृते मृषागिरः ॥ १०८ ॥ कृच्छ्रादिदं ते कथितं न चातिविस्रम्भ आसीत्तव कृष्णवाक्ये । न ह्याज्ञया वासुदेवस्य किञ्चित्पापं भवेत्सर्वविधर्मिणोऽपि ॥ १०९ ॥ ब्रह्मापरोक्षेऽपि विकर्म सूचकं प्रारब्धपापस्य विपाशनं यथा । पश्यात्र भीमप्रमुखान्मुखस्थान्सम्पूज्यमानांस्त्रिदशैः सुरूपान् ॥ ११० ॥ कुतः परब्रह्मदृशां सुशुद्धसत्कर्मणां विष्णुपरायणानाम् । परेण योगेन विसृष्टतन्वां दुःखं भवेद्देववराधिपानाम् ॥ १११ ॥ एते हि देवप्रवराः पृथिव्यां जाता भुवो भारजिहीर्षुमीशम् । प्रतोष्य तद्भावितबुद्धिकर्मभिः पुनश्च तेनैव सहाऽपिरे दिवम् ॥ ११२ ॥ न ते नृपाद्यापि हि मानुषो गतो भावस्ततो द्वेष्टि सुयोधनादीन् । निमज्ज्य तद्विष्णुपदोदकेऽत्र विसृज्य देहं भज देवभावम् ॥ ११३ ॥ सुयोधनाद्या यदिमे सुपापा आरब्धपुण्यक्षयमाप्य नित्ये । निःशेषसौख्योज्झितनित्यदुःखेऽवशाः पतिष्यन्त्यपुनर्निवृत्ताः ॥ ११४ ॥ देवांशजा ये तु समस्तशस्ते स्वमूलरूपं समवाप्य काले । स्वतारतम्यानुसृतां विमुक्तिं प्राप्स्यन्ति नात्रापि विचार्यमस्ति ॥ ११५ ॥ इत्युक्त आश्वेव निमज्ज्य गङ्गां धर्मात्मजस्तत्र विसृज्य देहम् । सद्यो बभौ दैवतमाप्य कायं विसृष्ट-

रोषादिसमस्तदोषः ॥ ११६ ॥

स तु प्रपश्यन्स्वजनं समस्तं स्वमूलरूपातिसमीपसंस्थम् । ददर्श भीमं च मरुत्समीपे मध्ये ज्वलन्तं मरुतां गणस्य ॥ ११७ ॥ ददर्श कृष्णामपि तत्समीपे श्रिया ज्वलन्तीं समतीत्य चान्याः । स्प्रष्टुं च संस्कारवशादियेष निषिध्य तं प्राह सुराधिराजः ॥ ११८ ॥ एषा हि साक्षाज्जगतां प्रियस्य प्राणात्मनो जीववरेश्वरस्य । प्राणप्रिया श्रीरिति नाम यस्याः शमात्मकेऽस्मिन्नमते सदैका ॥ ११९ ॥ युष्मच्चतुर्देह-गतस्य वायोर्वायुप्रिया भीमतनोस्तथैव । भोगाय सृष्टा पुरुषोत्तमेन युष्मत्प्रियार्थं भवतां च दारैः ॥ १२० ॥ प्रीतिस्ततो ह्यभ्यधिका बभूव भीमस्य चास्यास्तदनु स्म पार्थे । ततो भवत्स्वेव यथा क्रमेण गुणानुसारेण समीरणस्य ॥ १२१ ॥ इयं हि सा शुद्धतनुः प्रजाता शच्यादियोगापगताग्र्यदेहा । यूयं च सर्वे मरुतो विशेषसंयोगहीनाः स्वशरीरसंस्थाः ॥१२२॥ स्पर्शेऽपि नास्याः पवमानपत्न्याः सुपूतताऽलं भवतामिदानीम् । न चोत्तरत्रापि भवेत्कथञ्चिद्दिवौकसां मानुषदेहिनो यथा ॥ १२३ ॥ इतीरितं तं प्रतिसन्निवृत्तं विनाशयन्मानुषवासनां स्वयम् । समाश्लिषच्छुद्धतनुः स्तनोत्थो धर्मो हरेः सोऽभवदाशु तत्समः ॥ १२४ ॥

ततस्तु पार्था अखिलाः स्वमूलरूपैः सहैवाविशुर्मुदान्विताः । स्वीयानि सद्मानि ततोऽप्यनूनभोगाः सदारा न्यवसंश्च तत्र ॥ १२५ ॥ तत्रापि कृष्णेन समागमोऽभूत्पुरेव तेषामपि तत्पराणाम् । चिक्रीड एभिः सहितस्तथैव कृष्णोऽपि तद्वत्सरथोऽर्जुनेन ॥ १२६ ॥ अन्ये तु देवांशभवाः समस्ताः स्वमूलरूपैक्यमवापुराशु । कर्मक्षयादेव

सुरेतरास्तु पुण्यक्षयं प्राप्य भुवि प्रजाताः ॥ १२७ ॥ चतुः-सहस्रं त्रिशतोत्तरं ते संवत्सराणामनुभूय दिव्यान् । भोगान्नरत्वेऽपि सदेश्वरोऽहमसज्जगच्चेति धिया(यो)ऽऽप्नुवंस्तमः ॥ १२८ ॥ दुःखेऽपि



तेषामिह तारतम्यं कलेः परं दुःखमिहाखिलाच्च । (य)तथा विरिञ्चस्य व(प)रं सुखं स्यान्मुक्तौ हरिद्वेषकृतो विशेषः ॥१२९॥ केचित्पिशाचा-सुरराक्षसत्वमवाप्य विष्णोरपि तत्पराणाम् । द्वेषात्तमोऽन्धं त्वरया समाप्नुयुर्देवाः स्वकाले निजयोग्यमुक्तिम् ॥ १३० ॥

चतुःसहस्रे त्रिशतोत्तरे गते संवत्सराणां तु कलौ पृथिव्याम् । जातः पुनर्विप्रतनुः स भीमो दैत्यैर्निगूढं हरितत्त्वमाह ॥ १३१ ॥ तदैव कृष्णाऽपि भुवि प्रजाता प्रीत्यै हरेरन्धतमस्यपातयत् । महासुरान्विष्णु-परार्जुनाद्याः कृते प्रजाता हरितोषणाय । पुनश्च ते स्थानमवाप्य सर्वे स्वीयां(यं) परान्ते तु विमुक्तिमाप्नुयुः ॥१३२॥ वायुत्वमाप्तः स हनूम-दंशो ब्राह्मं पदं प्राप्य वृकोदरश्च । वागीश्वर(री)त्वं गतयैव कृष्णया सहैव मुक्तिं गमिताऽखिलोत्तमाम् ॥ १३३ ॥ भुवि द्युलोके च विरिञ्चता-यां मुक्तौ च ताभ्यामधिकं समस्तात् । सन्तोष्यते पूर्णगुणो रमेशः सदैव नित्योर्जिततद्रतिभ्याम् ॥ १३४ ॥ 'भूपन्न योधि बभ्रूषु नम्रते' 'बळित्था तद्वपुषे धायि दर्शतम्' । 'तां सु ते कीर्तिं मघवन्महित्वे'-त्यादि सूक्तानि च तत्प्रमाणम् ॥ १३५ ॥ अन्यानि वाक्यानि च वैदिकानि सपञ्चरात्रोक्तिपुराणकानि । पृष्टश्च भीष्मोऽत्र युधिष्ठिरेण तन्मोक्षधर्मेष्वपि किञ्चिदाह ॥ १३६ ॥

एवं प्रयातेषु सकेशवेषु स्वानेव लोकान्यदुपाण्डवेषु । परीक्षिता-द्यास्तु तदन्वयोत्था व्यासानुशिष्टाः पृथिवीमरक्षन् ॥ १३७ ॥ तैः क्षेमकान्तैरिह भारतादिशास्त्राणि शृण्वद्भिरशेषविद्भिः । व्यासप्रसादाच्च कलौ च धर्मो ज्ञानं च सुत्रातमगान्न नाशम् ॥ १३८ ॥

संवत्सराणां च सहस्रके गते प्राप्तेषु वि(च)द्यामखिलेषु सत्सु । दग्धाः पुरा ये त्रिपुर(रं)घ्नतैव रुद्रेण जाताः पृथिवीतले ते ॥ १३९ ॥ अदर्शनं सर्वमुनीन्द्रवृन्दैः सहैव सज्ज्ञानमहानिधा(दा)ने । व्यासे प्रयातेऽपि सुतत्त्वविद्या तत्सम्प्रदायादपि तैरवाप्ता ॥ १४० ॥ उत्सादितत्वात्तु

दुरागमानां तत्सम्प्रदायस्य च नाशितत्वात् । प्रसारितत्वाच्च सदागमानां पापा अपि ज्ञानमवापुरेतत् ॥ १४१ ॥ शुना पुरोडाशमिवावलीढं वेदश्रुतिं चान्त्यजनैरवाप्ताम् । अनन्तदुःखाप्तिसुयोग्यदैत्यैर्विद्यामवाप्तां तु न सेहिरे सुराः ॥ १४२ ॥ नावाग्गतिः क्वापि सुवेदिनां भवेत्प्राप्यं सुखं नित्यमवश्यमेभिः । प्राप्यं तमोऽन्धं त्वसुरैर्न मुक्तिः कदाचिदप्येतदश्चितयन्सुराः ॥ १४३ ॥ ज्ञानप्रदानाय सतां तदन्यज्ञानप्रणाशाय च विष्णुनैते । क्लृप्तास्ततस्ते सविरिञ्चिशर्वा विज्ञापयामासुरुपेत्य विष्णुम् ॥१४४॥ क्षीरोदधेरुत्तरतीरनि(वि)ष्ठितैरभिष्टुतः सुष्टुतिभिः पुरुष्टुतः । प्रदाय तेषामभयं रमापतिः क्षणादभूच्चारुतमाकृतिः शिशुः ॥१४५॥ यस्त्रैपुराणां प्रथमोऽत्र जातः शुद्धोदनेत्येव जिनेति चोक्तः । क्षेत्रे गयाख्येऽस्य शिशुं प्रजातं सम्प्रास्य दूरेऽत्र बभूव विष्णुः ॥ १४६ ॥ अजानमानाः स्वशिशुं गतं तं शिशुं हरिं वीक्ष्य निजं स्म मेनिरे । तेषां तदा वैदिककर्म वीक्ष्य सम्प्राहसत्तद्वपुषैव केशवः ॥ १४७ ॥ तं जातमात्रं प्रहसन्तमीक्ष्य सुविस्मितैः पृष्ट उवाच विष्णुः । बुद्धोऽहमित्येव सुनित्यबोधाज्जगाद चैषामथ बुद्धदर्शनम् ॥ १४८ ॥ तथाप्यविश्वासमवेक्ष्य तेषां सस्मार देवानखिलाञ्जनार्दनः । विज्ञाय ते तस्य मनोगतं निजान् प्रचिक्षिपुर्हेतिगणानमुष्मिन् ॥ १४९ ॥ स जातमात्रः शिवपूर्वकाणां शूलादिहेतीरखिला निगीर्य । दैत्यातिमोहाय निजं च चक्रं स्वमुक्तमाश्वेव वशी समग्रहीत् ॥१५०॥ तदासनत्वेन विधाय तस्मिन्समास्थितं देवगणाः प्रणम्य । जग्मुः स्वधामानि वर्चांसि चास्य स्वीचक्रुराश्वेव जिनादिदैत्याः ॥ १५१ ॥ ते ज्ञानधर्मावपहाय पापा विमोहिता देववरेण सर्वे । जग्मुस्तमोऽन्धं क्षणिकं समस्तं ज्ञानं न सचेति दृढं स्मरन्तः ॥ १५२ ॥ नारायणः प्रा(णोऽप्या)प्य सुरेन्द्रवृन्दं वृत्तं च तेषामखिलं निगद्य । पृष्टश्च तैराह निजं हृदिस्थं बौद्धागमार्थं सृतिबन्धमोचनं ॥१५३॥ क्षणादयः क्षणिकास्तद्विशेषा यतः प्रयान्त्येव निसर्गतोऽखिलाः । ततः स्थिरत्वेऽपि विशेषसंश्रयादुक्तं क्षणस्थायि मया समस्तम् ॥ १५४ ॥ तद्वान्विशेषश्च यतो न भिन्नौ सदा स्वनिर्वाहकशक्तियुक्तौ । अतः क्षणस्थायि समस्तमेतत्स्थिरात्मकं चेति हि नास्ति भेदः ॥ १५५ ॥ ज्ञोऽहं सदैकः परमो मयैतत्सदाऽननीयं च यतोऽस्वतन्त्रम् । ज्ञानात्मकं विश्वमतो मयोक्तं जडस्वरूपं च किमु स्म चेतनम् ॥ १५६ ॥ शं शीलकोऽहं यत एव चोक्तः शून्नामकस्तद्धि मया नि(वि)धेयम् । शून्याभिधं दोषविरुद्धरूपो दोषोज्झितोऽन्यस्त्वखिलादनामा ॥ १५७ ॥ एनैव साध्यं त्वसदेव नामतस्त्वभाव एनैव भवेद्यतस्तत् ॥ इत्यादि बोद्धव्यमिदं समस्तं मयोदितं क्वापि न हेयमस्ति ॥ १५८ ॥ इत्यादि देवान्प्रतिबोधयंश्च देवैः सहोवास स बुद्धदेवः । गत्वा स्वधामाप्यपरेण रूपेणास्ते पृथक्कृतनुर्यथेष्टम् ॥ १५९ ॥ ततस्तु बुद्धोदितपक्षसंस्थो जिनोऽपि चक्रे मतमन्यदेव । बौद्धेन जैनेन मतेन चैवं दैत्यांशकाः प्रीतिमगुः समस्ताः ॥ १६० ॥ प्रशान्तविद्येत्यभिधं तथाऽन्यद्बुद्धोक्तशास्त्रं त्रिदशा अवाप्य । तोषं ययुर्वेदसमस्तसारं यामाश्रितानामचिरेण मुक्तिः ॥ १६१ ॥ अन्ये मनुष्या अपि भारताद्यं सत्सम्प्रदायं परिगृह्य विष्णुम् । यजन्त आपुः परमां गतिं

तन्न सेहिरे क्रोधवशादिदैत्याः ॥ १६२ ॥ शैवं तपस्ते विपुलं विधाय जगद्विमोहोर्जितशक्तिमस्मात् । प्राप्य प्रजाता भुवि मोहनं च चक्रुः कुतर्कैरभिदां वदन्तः ॥ १६३ ॥ तेषां प्रपाताय सतां विमुक्त्यै जन्मास भीमस्य यदुक्तमत्र । दुर्गा पुनर्विप्रकुलेऽवतीर्णा हनिष्यति व्रातमथासुराणाम् ॥ १६४ ॥

ततः कलेरन्तमवाप्य धर्मज्ञानादिकल्याणगुणप्रहीने । लोके विरिञ्चत्रिपुरघ्नशक्रपूर्वाः पयोऽब्धिं त्रिदशाः प्रजग्मुः ॥ १६५ ॥ नारायणस्तैः स्तुतिपूर्वमर्थितो भवाय लोकस्य स शम्फलाख्ये । ग्रामे मुनेर्विष्णुयशोऽभिधस्य गृहे बभूवाविरचिन्त्यशक्तिः ॥ १६६ ॥

कलेस्तु कात्कारत एव कल्की ज्ञानं कलं कं सुखमेव तद्वान् । कल्कीति वा तेन समस्तदस्युविनाशनं तेन दिनाद्यधायि ॥ १६७ ॥ अधर्मवृत्तं विमुखं हरेश्च निहत्य निःशेषजनं तुरङ्गी । संस्थापयामास स धर्मकेतुं ज्ञानं स्वभक्तिं च निजप्रजासु ॥ १६८ ॥

इत्याद्यनन्तानि हरेरुदारकर्माणि रूपाणि च सद्गुणाश्च । नित्यव्यपेताखिलदोषकस्य ब्रह्मेत्यनन्तेति च नाम येन ॥ १६९ ॥ आनन्दतीर्थाख्यमुनिः सुपूर्णप्रज्ञाभिधो ग्रन्थमिमं चकार । नारायणेनाभिहितो बदर्यां तस्यैव शिष्यो जगदेकभर्तुः ॥ १७० ॥ यस्तत्प्रसादादखिलांश्च वेदान्सपञ्चरात्रान्सरहस्यसङ्ग्रहान् । वेदेतिहासांश्च पुराणयुक्तान्यथावदन्या अपि सर्वविद्याः ॥ १७१ ॥ समस्तशास्त्रार्थविनिर्णयोऽयं विशेषतो भारतवर्त्मचारी । ग्रन्थः कृतोऽयं जगतां जनित्रं हरिं गुरुं प्रीणयताऽमुनैव ॥ १७२ ॥ विनिर्णयो नास्त्यमुना विना यद्विप्रस्थितानामिह सर्ववाचाम् । तद्ब्रह्मसूत्राणि चकार कृष्णो व्याख्या तथैषामयथाकृताऽन्यैः ॥ १७३ ॥ निगूहितं यत्पुरुषोत्तमत्वं सूत्रोक्तमप्यत्र महाऽसुरेन्द्रैः । जीवेश्वरैक्यं प्रवदद्भिरुग्रैर्व्याख्याय सूत्राणि चकार चाविः ॥ १७४ ॥ व्यासाज्ञया भाष्यवरं विधाय पृथक्पृथक् चोपनिषत्सु भाष्यम् । कृत्वाऽखिलान्यं पुरुषोत्तमं च हरिं वदन्तीति समर्थयित्वा ॥ १७५ ॥ तनुस्तृतीया पवनस्य सेयं सद्भारतार्थप्रतिपादनाय । ग्रन्थं चकारेममुदीर्णविद्या यस्मिन्नमन्ते हरिपादभक्ताः ॥ १७६ ॥ 'तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयन्त योषणः ॥ १७७ ॥ निर्यदीं बुध्नान्महिषस्य वर्पस ईशानासःशवसा क्रन्त सूरयः । यदीमनु प्रदिवो मध्व आधवे गुहासन्तं मातरिश्वा मथायति' ॥ १७८ ॥ इत्यादिवाक्योक्तमिदं समस्तं तथा पुराणेषु च पञ्चरात्रे । अत्रोदिता याश्च कथाः समस्ता वेदेतिहासादिविनिर्णयोक्ताः ॥ १७९ ॥ तस्मादयं ग्रन्थवरोऽखिलानां धर्मादिमोक्षान्तपुमर्थहेतुः । किश्वो(किंवो)दितैरस्य गुणैस्ततोऽन्यैर्नारायणः प्रीतिमुपैत्यतोऽलम् ॥ १८० ॥



यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं बट्तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् । वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुर्मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥ १८१ ॥ यः सर्वगुणसम्पूर्णः सर्वदोषविवर्जितः । प्रीयतां प्रीत एवालं विष्णुर्मे परमः सुहृत् ॥ १८२ ॥ (५२०२) इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये पाण्डवस्वर्गारोहणं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

॥ श्रीकृष्णार्पणमस्तु ॥

